# काव्यादर्शः ।

महाकवि श्रीदण्ड्याचार्य्यविरचितः ।

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया विवृत्या समलङ्कृतः ।

तदात्मजाभ्यां

पण्डित श्रीआशुबोध विद्याभूषण-

पण्डित श्रीनित्यबोध विद्यारत्नाभ्यां

परिवर्द्धितटीकयाऽलङ्कृत्य संस्कृत्य च प्रकाशितः ।

पञ्चमं संस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे मुद्रितः ।

इं १९२४ ।

# भूमिका।

ग्रन्थस्यास्य रचयिता किल सुगृहीतनामधेयः विश्रुतकीर्त्तिः प्रतिभोज्ज्वलः आचार्य्यो महाकविर्दण्डी। अस्य पराचीनत्वे कविषु मुख्यत्वे च "जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्। कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥" इति प्राचीनपद्यमेव प्रकृष्टं प्रमाणं, नात्र कस्यापि काऽपि विचिकित्सा। परन्तु दुर्भाग्यमेतत् भारतीयानां यत् एतद्देशीय-महाकवीनामेकस्यापि प्रादुर्भावकालस्य निवासजनपदस्य वा नास्ति खलु अविसंवादिप्रमाणं किमपि, यद्दृष्ट्वा ते ते कवयः एतस्मिन् देशे काले च एतस्मिन् प्रादुरभवन् इति निःसंशयं निश्चेतुं कण्ठरवेण उद्घोषयितुं वा कोऽपि शक्नुयात्। प्रस्तुते चास्मिन्नपि महाकवौ नायं सनातनो विधिः परिवर्त्तितो जातः। किन्तु कवेरस्य वैदर्भ्यादिषु रीतिषट्केषु वैदर्भरीतौ समधिकसमादरबुद्धिदर्शनात् तद्रीत्यनुसारि-गुणालङ्कारोदाहरणादीनां ग्रन्थेऽस्मिन् सन्निवेशदर्शनाच्च दाक्षिणात्योऽयं विदर्भमण्डलवास्तव्य इत्यनुमितिरयौक्तिकीति न केनापि वक्तुं शक्यते।

अयं हि काव्यादर्श-दशकुमारचरित छन्दोविचिति-कला-परिच्छेदादिविविधग्रन्थानां रचयिता इति प्रसिद्धिः। तेषु चायं काव्यादर्शः दशकुमारचरितं नाम गद्यकाव्यञ्च एतद्देशीयैः समधिकं समाद्रियते। छन्दोविचितेः कलापरिच्छेदस्य च अस्मिन्नेव ग्रन्थे—"छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः" (१ परि० १२ श्लो०) "तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति" (३ परि० १७१ श्लो०) इत्येताभ्यां

श्लोकाङ्काभ्यां समुल्लेखमात्रं दृश्यते, न पुनरेतौ कस्यापि नेत्र-विषयीभूतौ जातौ। काव्यादर्शसम्बन्धे च एषा खलु किंवदन्ती प्रचरति लोके यत् अलङ्कारशिशिक्षिषोः स्वान्तेवासिनः कस्यापि शिक्षार्थं ग्रन्थमिमं विरचितवान् कविः अध्यापितवांश्च तमिम-मेव स्वरचितग्रन्थम्। अस्मिन् खलु रूपकोपमाक्षेपादीना-मलङ्कारविशेषाणां बहवः प्रकाराः सन्निविष्टा दृश्यन्ते, ये तु नवीनैर्विरचितेषु नोपलभ्यन्ते ; ते च प्रकाराः चमत्काराधायक-तया सुकुमारमतीनां बालानां विशेषतया चित्ताकर्षका भवन्तीति मन्यामहे। किञ्च यमकानां विविधभेदाः स्वर-स्थानवर्णनियमप्रहेलिकादिरूपाश्चित्रालङ्काराश्च विविधभेद-भिन्नाः सोदाहरणाश्च चमत्कारजनकाः नवीनैरनुक्ताः निपुण-मतिना कविना अत्र विन्यस्ता इत्युपलभामहे, ये तु नवीनेभ्यः अस्य वैशिष्ट्यं विशेषेण प्रकटयन्तीति।

ग्रन्थस्यास्य शोधनविधौ टीकाया उत्कर्षसाधने भाषायाः सौष्ठवसम्पादने च यथामतिरस्माभिः प्रयत्नो विहितः, शिक्षार्थिभिरेतेन काचिदपि उपकृतिर्लभ्येत चेत् प्रयत्नः सफलो जातः इति मंस्यामहे इत्यलम्।

# काव्यादर्शस्य सूचीपत्रम्

## प्रथमः परिच्छेदः ।

## द्वितीयः परिच्छेदः ।

## तृतीयः परिच्छेदः ।

# काव्यादर्शः ।

## प्रथमः परिच्छेदः ।

मङ्गलाचरणम् ।—

चतुर्मुखमुखाम्भोज-वनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥

---

प्रणम्य कमलाकान्तं भक्ताभीष्टफलप्रदम् ।
काव्यादर्शस्य विवृतिं वितनोमि सतां मुदे ॥

किंवदन्तीयं यत् महामहोपाध्यायः श्रीमान् दण्डीनाम कविः ग्रन्थमिमं स्वयं विरच्य कमपि राजपुत्रम् अध्यापयामास इति ।

ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामनया कविर्ग्रन्थाधिष्ठात्रीतया वाग्देवतायाः स्मरणरूपमङ्गलमाचरन्नाह, चतुर्मुखेति ।—चतुर्मुखस्य ब्रह्मणः, मुखान्येव अम्भोजवनानि पद्मवृन्दानि, तेषु हंसवधूः हंसीस्वरूपा, ( एतेन विशेषणपदेन चतुर्मुखमुखविहारिणी श्रुतिरूपा सरस्वती यथा परिशुद्धा, तादृशी सरस्वती मम मानसगता भवतु, न तु नीचजनमुखवसतिरिति प्रतीयते ) अत एव विशेषणान्तरमाह, सर्वशुक्लेति —सर्वशुक्ला सर्वतः सर्वप्रकारेण, स्वरूपतः अर्थतश्च इत्यर्थः, शुक्ला दोषराहित्येन निर्मला, काव्यापकर्षकदोषहीनेति यावत्, सर्वावयवेन श्वेतवर्णा च, सरस्वती वागधिष्ठात्री देवी, भगवतो विष्णोर्मूर्त्तिरिति यावत्, ( एतेनास्याः काव्यरूपता प्रतीयते;

**पूर्वशास्त्राणि संहृत्य प्रयोगानुपलभ्य च ।**
**यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥२॥**

काव्यरूपायाश्च विष्णुमूर्त्तित्वं विष्णुपुराणेऽभिहितं यथा—"काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च । शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥" इति ) नित्यं सततं, मम मानसे चेतसि, तदाख्यसरसि च, रमतां विहरतु । मानसे सरसि पद्मवनेषु हंसीव या ब्रह्मणो मुखकमलेषु श्रुतिरूपेण सततं विहरति, सा सर्वशुक्ला वाग्देवी मम हृदये सततं वसतु इति निष्कर्षः । "नित्यम्" इत्यत्र "दीर्घम्" इति पाठे—दीर्घं सुचिरमित्यर्थः । ( अत्र मुखे पद्मवनत्वारोपः सरस्वत्यां हंसवधूत्वारोपे हेतुः, अतः परम्परितरूपकालङ्कारः ) ॥ १ ॥

सम्प्रति "ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥" इति शास्त्रमनुस्मरन् ग्रन्थस्यास्य अभिधेयं निर्दिशन् प्रतिजानीते, पूर्वशास्त्राणीति ।—पूर्वेषां कवीनां भरतादीनां, शास्त्राणि काव्यग्रन्थान्, संहृत्य सङ्क्षेपेण तेभ्यः सारमाकृष्य, प्रयोगान् महाकाव्यादिषु प्रयुक्तान् विषयान्, उपलभ्य समालोच्य च, ( एतेन महाकविप्रयोगविरुद्धं प्राचीनशास्त्रमपि परिहृत्य प्रयोगानुसारिपूर्वशास्त्रानुसारेणास्माभिरेतत् क्रियते इति सूचितम् ) अस्माभिः यथासामर्थ्यं यथाशक्ति, यथाज्ञानमिति यावत्, काव्यस्य लक्षणं स्वरूपं, लक्ष्यते ज्ञायते अनेनेति व्युत्पत्त्या लक्षणम् इतरव्यवच्छेदकः असाधारणधर्म इति यावत्, क्रियते "इष्टार्थव्यवच्छिन्ना पदावली" इति वक्ष्यमाणवाक्येन निर्णीयते । ( एतेन काव्यमेव ग्रन्थस्य अभिधेयं दर्शितं, प्रयोजनमातःपरं वक्ष्यते । सम्बन्धश्च यथायथं स्वधिया निरूपणीयः ) ॥ २ ॥

वाक्यप्रशंसा ।—

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्त्तते ॥ ३ ॥
इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ ४ ॥

इदानीं ग्रन्थस्य प्रयोजनकथनाय वाचां व्यवहारोपयोगित्वम् अन्वयव्यतिरेकाभ्यामाह, इहेति इदमिति च ।—इह संसारे, शिष्टैः धीरैः महेश्वरादिभिः, ( तदुक्तं महाभारते—"न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपल इति शिष्टस्य लक्षणम् ॥" इति ) अनुशिष्टानां साधितानां, प्रकृतिप्रत्ययादिविभागेन व्युत्पादितानां संस्कृतानां, तथा शिष्टानां जातिदेशादिविभागेन सिद्धानां प्रचलितानां प्राकृतदेशीयानां, वाचामेव प्रसादेन अनुकम्पया, साहाय्येनेति यावत्,सर्वथा सर्वैः प्रकारैः, लोकानाम् उत्तममध्यमाधमभेदेन त्रिविधानां, यात्रा व्यवहारः, प्रवर्त्तते प्रचलति, तत्रोत्तमाः संस्कृतयैव वाचा व्यवहरन्ति, मध्यमास्ततो निकृष्टया साधुभाषया, अधमा नीचभाषया, देशजातिभेदेन एवमेव भाषाव्यवहार इति फलितार्थः । इदमिति ।—यदि शब्दः आह्वयः अभिधानं यस्य तत् शब्दनामकं, वाङ्मयमित्यर्थः, ज्योतिः तेजः, प्रकाशकस्वरूपधर्मबलेन वाङ्मये तथात्वारोपः, (एतेन शब्दस्य ब्रह्मत्वञ्च सूचितम् । शब्दब्रह्मणश्च सूक्ष्मा पश्यन्ती मध्यमा वैखरी चेति चत्वारो भेदाः, तत्राविकारदशा सूक्ष्मा, सा हि सर्वस्य प्राणापानान्तरालवर्त्तिनी विगतप्रादुर्भावतिरोभावा सम्यक्प्रयोगपरिशीलनात्मना कर्मयोगेन, मननादिना ज्ञानयोगेन च सम्यगधिगम्यते ।

तस्य ब्रह्मणः अनाद्यविद्यावशादाद्यः परिणामः पश्यन्ती, सा हि वर्णाविभागादक्रमः स्वयंप्रकाशश्च। पूर्वापरे स्वावस्थे पश्यतीति पश्यन्तीत्युच्यते। ततः परमविद्योपादाना-दन्तःसङ्कल्परूपक्रमवान् श्रोत्रग्राह्यवर्णाभिव्यक्तिरहितस्तृतीयः परिणामः मध्यमा। द्वयोः परिणामयोर्मध्ये तिष्ठतीति मध्यमा इत्युच्यते। अनन्तरं दूरप्रसृतायामविद्यायां स्थान-करणप्रयत्नव्यज्यमानश्रोत्रसंवादिवीणादुन्दुभिनादपरिचयगङ्गदा-द्यक्ताकारादिवर्णसमुदयात्मकस्तुरीयः परिणामः वैखरी। आद्यास्तिस्रः नित्या अतीन्द्रियाः, चरमा लोकव्यवहार-रूपा इति, तदुक्तं—"स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा। वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना॥ प्राणवृत्तिमति-क्रम्य मध्यमा वाक् प्रवर्त्तते। अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा॥ स्वरूपज्योतिरेवान्तः सूक्ष्मा सा चानपायिनी॥" इति। श्रुतिरप्याह—"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहात्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥" इति) ततश्च तत् शब्दब्रह्मरूपं ज्योतिः, आ-संसारं जगत् अभिव्याप्य, न दीप्यते न विराजते, तदा इदं कृत्स्नं सर्वं, भुवनानां स्वर्गमर्त्त्यरसातलानां, त्रयम् अन्धंतमः गाढान्धकारव्याप्तमिति यावत्, ("ध्वान्ते गाढेऽन्ध-तमसम्" इत्यमरः) जायेत। यद्वा—तमः मोहान्धकारमयं सत्, अन्धं नेत्रहीनमिव ज्ञानशून्यं भवेत्। सूर्य्योदयाभावे इव वागभावे जगत् अन्धकारमयमेव स्यात्, वाग्भिरेव सर्वेषां ज्ञानलाभादिति भावः। (एतेन अस्य प्रयोजनं वाग्व्यव-हाररूपमेव कथितम्। अभिधेयप्रयोजनयोश्च परस्परं ज्ञाप्य-ज्ञापकत्वादिरूपः सम्बन्धः यथायथमवगन्तव्यः। एवाञ्च ग्रन्थादौ अवश्यवक्तव्यतोक्ता इति॥ १॥ ४॥

काव्यप्रशंसा ।—

आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।
तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति ॥५॥
गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्य्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥६॥

---

वाचामुपादेयत्वं व्यवहारत्वेन प्राक् प्रदर्श्य तासामेव गुणालङ्कारादिसद्भावेन काव्यस्वरूपतामुपगतानामिदानीमुपादेयत्वं दर्शयति, आदिराजेति ।—आदिराजानां मन्विक्ष्वाकुप्रभृतीनां, यशोबिम्बं कीर्त्तिरूपं प्रतिबिम्बं कर्तृ, वाङ्मयं कविगणनिबद्धं काव्यप्रबन्धरूपम्, आदर्शं दर्पणं, प्राप्य तेषाम् आदिराजानाम्, असन्निधानेऽपि असत्तायामपि, न नश्यति न विलीयते, इति स्वयं पश्य अवलोकय इति राजपुत्त्रं प्रत्युक्तिः । (दर्पणे बिम्बपतनं सन्निहितानामेव, इह तु वाङ्मयरूपे दर्पणे असन्निहितानामपीति उपमेयाधिक्यवर्णनव्यतिरेकालङ्कारः । ततश्च पुरावृत्तवर्णितानां यशःकीर्त्तनं तथा काव्यप्रणेतुः यशःप्राप्तिप्रभृतीन्यपि प्रयोजनान्तराण्यवगन्तव्यानि, तच्चोक्तं प्रकाशकृता यथा—"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इति ) ॥५॥

काव्यस्योपादेयत्वं सामान्येनोक्ता तस्य गुणालङ्कारादिसद्भावत्वे दोषाभावत्वे च यतितव्यमिति कीर्त्तयन्नाह,गौरिति ।—सम्यक् प्रयुक्ता गुणालङ्कारादिमत्त्वेन दोषराहित्येन च सुनिबद्धा, गौः वाक्, ("स्वर्गेषुपशुवाग्वज्र-दिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः ) बुधैः विद्वद्भिः, सहृदयैः सुधीभिरित्यर्थः,कामदुघा कामदोहिनी,यथाऽभिलषितपूरणीति यावत्,

दुष्टकाव्यनिन्दा ।—

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ ७ ॥**

---

गौः धेनुः, स्मर्यते मन्यते । ["एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे लोके च कामधुक् भवति" इति श्रुतेः । उक्तञ्च वामनेनापि —"काव्यं सत् दृष्टादृष्टार्थं प्रीति-कीर्त्तिहेतुत्वात्"(का० सू० वृ० १ अधि० १ अ० ) इति । प्रोक्तसूत्रवृत्तौ च—"काव्यं सत् चारु दृष्टप्रयोजनं प्रीतिहेतुत्वात् अदृष्टप्रयोजनं कीर्त्तिहेतुत्वात् । अत्र श्लोकाः,—"प्रतिष्ठां काव्यबन्धस्य प्रतिष्ठां सरणिं विदुः । अकीर्त्तिवर्त्तनीं त्वेवं कुकवित्वविडम्बनाम् ॥ कीर्त्तिं स्वर्ग-फलामाहुरा-संसारं विपश्चितः । अकीर्त्तिञ्च निरालोक-नरको-द्देशदूतिकाम् ॥ तस्मात् कीर्त्तिमुपादातुमकीर्त्तिञ्च व्यपोहि-तुम् । काव्यालङ्कारशास्त्रार्थः प्रसाद्यः कविपुङ्गवैः ॥" इति । अपरञ्च—"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्" ॥ इति ] पुनः किन्तु, सा एव गौः, दुष्प्रयुक्ता सदोषत्वेन गुणालङ्कारादिराहित्येन च प्रयुक्ता निबद्धा सती, प्रयोक्तुः प्रयोगं कुर्वतः, कवेरिति यावत्, गोत्वं वृषत्वम्, अज्ञत्वमिति भावः, शंसति सूचयति, ( एतेन सदोषस्य रसवतः वाक्यस्य काव्यत्वहानिर्न, अपि तु निन्दित-त्वमेव प्रतीयते इति बोध्यम् ) ॥ ६ ॥

तदिति ।—तत् तस्मात् प्रयोजकस्य गोत्वख्यापनात्, काव्ये अल्पमपि पदपदांशमात्रस्थमपि, दुष्टं दोषः, ( भावे क्तप्रत्ययः ) कथञ्चन केनापि प्रकारेण, न उपेक्ष्यं न क्षन्तव्यं, सर्वथा दोषः काव्यस्यापकर्षक इति परित्याज्य इत्यर्थः । ननु गुणालङ्कारादि-सद्भावे सामान्यदोषेण का क्षतिरिति चेत् तत्राह, स्यादिति ।—

गुणदोषविचारे शास्त्रज्ञानं हेतुः।—

**गुणदोषान् अशास्त्रज्ञः कथं विभजते जनः?।**
**किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु? ॥८॥**

वपुः शरीरं, सुन्दरमपि स्वभावतः गुणादिमत्तया वा सुदर्शनमपि, एकेन एकाङ्गवर्त्तिना क्षुद्रेणापि, श्वित्रेण धवलरोगेण, दुर्भगं घृणितं स्यात्। (एतेन दोषः काव्यस्यापकर्षको न तु काव्यत्वविघातक इत्यायातम्। उक्तञ्चान्यत्र यथा—"कीटानुविद्धरत्नादि-साधारण्येन काव्यता। दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥" इति। एकेन श्वित्ररोगेण यथा सुन्दरशरीरमपि निन्दितं भवति, तथा पदांशादिगताल्पदोषजातमपि काव्यं दूषयति इति बिम्बप्रतिबिम्बबोधनात् अत्र दृष्टान्तालङ्कारः। तदुक्तं साहित्यदर्पणे—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति। एतेन न केवलं पदपदांशादिदोषेणैव काव्यस्यासाधुत्वं, किन्तु प्रबन्धुः प्रतिभादौर्बल्यकुलवैकल्याभ्यामपि भवति। तदुक्तं कविगजाङ्कुशे—"शुनोदुग्धमिव त्याज्यं पद्यं शूद्रकृतं बुधैः। गवामिव पयो ग्राह्यं काव्यं विप्रेण निर्मितम्॥" इति; उत्तमपुरुषकथाकथनन्तु काव्यं ग्राह्यमेव। तदुक्तं भामहेन—"उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः काव्यसम्पदः" इति। भट्टोद्भवेनापि भणितं—गुणालङ्कारचारुत्वयुक्तमप्यधिकोज्ज्वलम्। काव्यमाश्रयसम्पत्त्या मेरुणेवामरद्रुमः॥" इति) ॥७॥

दोषस्य काव्यापकर्षकत्वाभिधानेन गुणानामुत्कर्षजनकत्वमर्थादभिहितं भवति, उत्कर्षापकर्षपरिज्ञानञ्च शास्त्रोपदेशमन्तरेण न सम्भवतीति शास्त्रस्योपयोगितां दर्शयति, गुणदोषानिति।—अशास्त्रज्ञः अविद्वान् जनः, गुणदोषान् काव्यस्य

प्रजाव्युत्पत्तिः काव्यस्य प्रयोजनम्।—

अतः प्रजानां व्युत्पत्तिमभिसन्धाय सूरयः।
वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्॥९॥

काव्यलक्षणम्।—

तैः शरीरञ्च काव्यानामलङ्काराश्च दर्शिताः।
शरीरं तावदिष्टार्थ-व्यवच्छिन्ना पदावली॥१०॥

---

उपादेयत्वव्यञ्जका धर्मा गुणाः तान्, हेयत्वव्यञ्जका धर्मा दोषाः तांश्च, कथं विभजते? विशेषेण बुध्यते? नैवेत्यर्थः, ओजः-प्रसादादिगुणानां श्रुतिकट्वादिदोषाणाञ्च काव्यपाठश्रवणमात्रेण सामान्यतः परिज्ञानेऽपि शास्त्राविज्ञाने विशेषज्ञानासम्भवादिति भावः। तथा हि रूपाणां सौन्दर्य्यादीनां, भेदोपलब्धिषु विशेष-ज्ञानेषु, अन्धस्य अधिकारः शक्तिः, अस्ति किम्? नैवेत्यर्थः, शास्त्रपर्य्यालोचनेन जना गुणदोषविचारे समर्था भवन्ति, तस्मा-देव ममायमुद्यमः इति भावः। (अत्रापि दृष्टान्तालङ्कारः) ॥८॥

अत इति।—अतः कारणात् गुणदोषाणां विभागादेः शास्त्रगम्यत्वात् हेतोः, सूरयः पूर्वपण्डिता भरतादयः, प्रजानां लोकानां, व्युत्पत्तिं वाग्वैचित्र्यज्ञानम्, अभिसन्धाय अभिप्रेत्य, उद्दिश्य इत्यर्थः, विचित्रमार्गाणां विचित्रा विविधाः, मार्गाः पन्थानः रीतयः गौडीप्रभृतयः यासां तथाभूतानां, वाचां काव्य-प्रबन्धानाम् इत्यर्थः, क्रियाविधिं रचनाविधानं, निबबन्धुः चक्रुः, काव्यग्रन्थान् रचयामासुः इति यावत्, (एतेन यथा भरतादीनां लोकव्युत्पत्त्यर्थं ग्रन्थरचनं, ममापि तथा एतद्ग्रन्थविरचने समुद्यमः, न तु यशःख्यापनार्थमिति सूच्यते) ॥ ९ ॥

इदानीं प्राचीनसंवादनिर्देशपुरःसरं धर्मिभूतं काव्यशरीरं निरूपयति, तैरिति।—तैः पूर्वपण्डितैः, काव्यानां शरीरञ्च

गुणदोषालङ्काराणामाधारतया रसादिव्यङ्ग्यात्मनः देहभूतः आश्रयश्च, तथा अलङ्काराश्च अलङ्क्रियते काव्यशरीरमुत्कर्षी-क्रियते एभिः इत्यलङ्काराः इति व्युत्पत्त्या श्लेषादिगुणाः अनु-प्रासोपमादयः अलङ्काराश्च इत्यर्थः, "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्याद्युक्तेरिति भावः, दर्शिताः लक्षण-निर्देशेन निरूपिताः। अत्र 'च'-द्वयमुभयप्राधान्यद्योतकम्। यद्वा —शरीरश्चेति चकारस्तैरित्यनेन सम्बध्यते, तैश्च इत्यर्थः, अलङ्का-राश्च इति चकारः अनुक्तसमुच्चयार्थः, अलङ्काराः गुणदोषादयश्च इत्यर्थः। काव्यानामिति बहुत्वं प्रकारभेदविवक्षयोक्तमवगन्तव्यम्। ( ननु काव्यं तावत् किमिति प्रश्ने—"कवनीयं काव्यम्" इति लोचनकारः। "कवयति इति कविः तस्य कर्म काव्यम्" इति विद्याधरः। "कौति शब्दायते विमृशति रसभावान् इति कविः तस्य कर्म काव्यम्" इति भट्टगोपालः। "लोकोत्तरवर्णनानिपुण-कविकर्म काव्यम्"इति काव्यप्रकाशकारः। "प्रज्ञा नवनवोन्मेष-शालिनी प्रतिभा मता। तदनुप्राणनाज्जीवेत् वर्णनानिपुणः कविः॥ तस्य कर्म स्मृतं काव्यम्" इति भामहः। चारुताशालि-शब्दार्थयुगलं काव्यमिति रूढोऽर्थः ) किं तत् शरीरमित्या-काङ्क्षायां स्वमतमुद्घाटयति, शरीरमिति।—तावच्छब्दो वाक्या-लङ्कारार्थः। [ उक्तञ्च वामनेन—"वाक्यालङ्कारप्रयोजनन्तु नानर्थकम्"(का० सू० वृ० ५अधि० १अ० ) इति] इष्टाः हृद्याः, रसाद्यनुगमेन मनोहरा इत्यर्थः, ये वाच्यलक्ष्यव्यङ्ग्यभेदेन विविधा अर्थाः, तैः व्यवच्छिन्ना विभूषिता,पदावली पदसमष्टिः, काव्यस्य शरीरमिति वर्त्तुलार्थः, अभीष्टत्वं लोकोत्तराह्लादजनकत्वम्। "रिपुस्ते मृतः, पुत्रस्ते जातः" इत्यादौ आह्लादस्य लोकोत्तरत्वा-भावात् न काव्यत्वम्। तादृशार्थाश्च दोषाभावात् गुणालङ्कार-सद्भावाच्च जायमानमनोज्ञत्वेन व्यङ्ग्यवैशिष्ट्येन च ज्ञेयम्। (ततश्च

काव्यभेदाः —

**गद्यं पद्यञ्च मिश्रञ्च तत् त्रिधैव व्यवस्थितम् ।**
**पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥११॥**

ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदेन काव्यस्य त्रैविध्यमन्यैरुक्तमत्रानुसर्त्तव्यम् । तथा हि, यत्र व्यङ्ग्यचमत्कृतिर्वाच्यचमत्कृतेरत्यधिका तत्र ध्वनिः, यत्र व्यङ्ग्यचमत्कृतिर्वाच्यचमत्कृतेरन्तर्लीना तत्र गुणीभूतव्यङ्ग्यं, यत्र च व्यङ्ग्यचमत्कृतेरभावः वाच्यचमत्कृतिरेव परं प्रकर्षमुपगता तत्र चित्रमिति । अत्र वाच्यलक्ष्यव्यङ्ग्यभेदेनार्थस्य त्रैविध्यमवगन्तव्यम् । अभिधया प्रतिपाद्यः अर्थः वाच्यः, लक्षणया बोध्यः लक्ष्यः, व्यञ्जनया गम्यः व्यङ्ग्यः इति । अत्र व्यङ्ग्यस्यापि वस्त्वलङ्काररसादिभेदात् त्रिविधो भेदः, स च अन्यत्र विस्तर इति नोक्तः ) पदावलीशब्दोऽत्र वाक्यमात्रार्थकः, निराकाङ्क्षपदसमूहस्य काव्यत्वाव्यवहारात् साकाङ्क्षेति तस्याः विशेषणं देयम् । ( ततश्च अर्थवद्वाक्यं काव्यशरीरं, न तु शब्दार्थावित्यायातम् ; तेन च 'काव्यं पठ्यते' 'काव्यादर्थोऽवगम्यते' इत्यादिव्यवहारोऽपि सङ्गच्छते । नव्यास्तु—"शब्दार्थौ शरीरं, रसश्चात्मा, दोषाः काणत्वादिवत्, गुणाः शौर्य्यादय इव, अलङ्काराः कटककुण्डलादिवत्" इत्याहुः । इह रसस्याङ्गित्वमपि नाद्रियते, नीरसानामपि गुणालङ्कारसद्भावादस्त्वलङ्कारव्यञ्जकत्वाच्च वैचित्र्यजनकत्वेन काव्यतया सकलालङ्कारिकैरङ्गीकृतत्वात् । शरीरी चात्र "अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः । वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥" इत्युक्तलक्षणः गुणालङ्कारोपस्कृतो वाच्यार्थः वस्त्वलङ्काररसादिरूपो व्यङ्ग्यार्थश्च इत्यवगन्तव्यः )॥ १० ॥

इदानीं काव्यभेदान् दर्शयति, गद्यमिति ।—तत् काव्यं,

छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः ।
सा विद्या नौस्तितीर्षूणां गम्भीरं काव्यसागरम्॥१२॥

गद्यं पद्यं मिश्रञ्चेति त्रिधैव त्रिप्रकारेणैव, व्यवस्थितं सिद्धान्तितं, प्राचीनैरिति शेषः। गद्यं [ 'गद व्यक्तायां वाचि' इति धातोः "गदमदचरयमश्चानुपसर्गे" ( ३।१।१०० पा० ) इति कर्मणि यत्प्रत्यये सिद्धं ] पादेषु भवं पद्यं, ( भवार्थे यत्-प्रत्ययस्य भसंज्ञायां पदादेशे च सिद्धं ) पद्यस्य कृच्छ्रसाध्यनिर्वाह-तया प्रथमं गद्यनिर्देशः। तत्र पद्यलक्षणमाह, पद्यमिति।— चतुर्णां पदानां समाहारः चतुष्पदी चतुश्चरणनिबद्धं पद्यं स्यात्, द्विपादादिपद्यस्य वेदादौ दर्शनात् लोकेषु पादचतुष्टयात्मकस्यैव प्रसिद्धेश्च प्रायेण महाकाव्यादौ तादृशानामेव निवेशनाच्च चतुष्पदी इत्युक्तम्; वस्तुतस्तु छन्दोबद्धं वाक्यमेव पद्यम्। ( यदाहुः,—"छन्दोबद्धपदं पद्यम्" तथा, "छन्दोनियमवद्वाक्यं पद्यमित्यभिधीयते" इति च ) तदपि वृत्तं जातिरिति द्विविधम्, अक्षरसङ्ख्यया निबद्धं वृत्तं, मात्रया निबद्धा जातिरिति। गद्यमिश्रयोर्लक्षणमनतिप्रयोजनमिति न तदत्र प्रदर्शितं, गद्यं छन्दोरहितं, मिश्रं गद्यपद्योभयात्मकमिति ज्ञेयम् ॥ ११ ॥

छन्द इति।—छन्दांसि विचीयन्ते विज्ञायन्ते अनयेति तस्यां छन्दोविचित्यां पिङ्गलादिकृतच्छन्दोग्रन्थे छन्दोविचितिनामक-स्वकृतच्छन्दोग्रन्थे वा, सकलः निखिलः, तत्प्रपञ्चः तेषां वृत्त-जातिप्रभृतीनां,प्रपञ्चः विस्तारः,निदर्शितः निरूपितः,सा विद्या, छन्दोज्ञानमित्यर्थः, गम्भीरम् अगाधं, दुर्गममित्यर्थः,काव्यसागरं काव्यरूपमर्णवं, तितीर्षूणां तरितुमिच्छूनां, नौः तरणिस्वरूपा इत्यर्थः, अतिगम्भीरं हि महासागरं तितीर्षूणां यथा बहुवस्तु-परिपूर्णा नौरुपयोगाय भवति, तथा बहुलच्छन्दोबद्धवाक्य.त्मकं

नगरार्णवशैलर्त्तु-चन्द्रार्कोदयवर्णनैः।
उद्यानसलिलक्रीड़ा-मधुपानरतोत्सवैः॥ १६॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः।
मन्त्रदूतप्रयाणाजि-नायकाभ्युदयैरपि॥ १७॥

रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता॥" इति) अत्र चतुरशब्दस्य धीरार्थकत्वं, तेन च धीरोदात्तनायक एव महाकाव्ये अभिप्रेत इति मन्तव्यम्। (धीरोदात्तलक्षणमुक्तं यथा—"अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः। स्थेयान्निगूढ़मानो धीरोदात्तः दृढ़व्रतः कथितः॥" इति)॥ १५॥

केवलं नायकवर्णनेन कवीनां न चरितार्थता, इतिहासादेरेव तज्ज्ञानस्य सिद्धत्वात्, अतः नायकवर्णनमाश्रित्य तदानुषङ्गिकनगरादिकमपि वर्णनीयं, तथात्वे काव्यशोभाजननात् श्रोतॄणामुन्मुखीकरणं स्यादित्याशयेनाह, नगरेत्यादि।—नगरं बहुसमृद्धजनाकीर्णः प्रदेशः, अर्णवः समुद्रः, शैलः पर्वतः, ऋतुः वसन्तादिः, चन्द्रार्कोदयः चन्द्रसूर्य्ययोरुदयः, (उपलक्षणमेतत्, तेन अस्तगमनमपि) एतेषां वर्णनैः, उद्यानसलिलयोः क्रीड़ा मधुपानं रतोत्सवः सम्भोगशृङ्गारः तैः, विप्रलम्भैः सम्भोगशृङ्गारात् पूर्ववर्त्तिभिः पूर्वरागप्रभृतिभिः चतुर्विधभावैः, ("यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ" इति विप्रलम्भलक्षणम्। सम्भोगपूर्ववर्त्तित्वञ्च "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इतल्लक्षणेनैव सिद्धं, चतुर्विधत्वञ्च पूर्वरागमानप्रवासकरुणात्मकत्वेनेति मन्तव्यम्) विवाहैः परिणयव्यापारैः, कुमारोदयस्य पुत्रोत्पत्तेः, वर्णनैः, तथा मन्त्रः रिपुपराजयार्थं गुह्यवादः,

अलंकृतमसङ्क्षिप्तं रसभावनिरन्तरम्।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥१८॥

मन्त्रिभिः सह क्रियमाणा मन्त्रणा इत्यर्थः, दूतः राज्ञा कार्य्येषु प्रेष्यः पुरुषः, स च निसृष्टार्थ-मितार्थ-सन्देशहारकभेदात् त्रिविधः, प्रयाणं रिपुजयाद्यर्थं युद्धयात्रा, आजिः युद्धं, नायकस्य अभ्युदयः जयलाभः तैः, अलङ्कृतं शोभितमिति वक्ष्यमाण-श्लोकोक्तेनान्वयः, नगरादयो महाकाव्ये वर्णनीया इत्यर्थः। (उक्तञ्च—"सन्ध्यासूर्य्येन्दुरजनी-प्रदोषध्वान्तवासराः। प्रातर्मध्याह्नमृगया-शैलर्त्तुवनसागराः॥ सम्भोगविप्रलम्भौ च मुनि-स्वर्गपुराध्वराः। रणप्रयाणोपयम-मन्त्रपुत्त्रोदयादयः॥ वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह॥" इति) ॥ १६ ॥ १७ ॥

अलङ्कृतमिति।—असङ्क्षिप्तं न सङ्क्षेपेण वर्णनीयं, सविस्तर-मित्यर्थः, तथा सति सहृदयहृदयङ्गमं भवतीति भावः, रसैः शृङ्गारादिभिः, भावैः प्राधान्येनाभिव्यक्तैः व्यभिचारिभिः, उद्बुद्ध-मात्रैः स्थायिभिः रत्यादिभिः, तथा देवादिविषयकैः अनुरागैश्च, निरन्तरं सङ्कुलं, पूर्णम् इति यावत्, (इह महाकाव्ये शृङ्गारवीर-शान्तानामन्यतमोऽङ्गित्वेन वर्णनीयः, अन्ये रसा भावाश्चाङ्गत्वेन इत्यन्यैरुक्तमप्यङ्गीकार्य्यम्; यदुक्तं—"शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते" इति) अनतिविस्तीर्णैः शास्त्रनियमिताष्टादिभिः अन्यूनैः, सर्गैः अवान्तरवृत्तान्तसमाप्त्याख्यैः, उपेतमिति वक्ष्यमाणश्लोकोक्तेनान्वयः; (सर्गाणामष्टान्यूनत्वत्रिंशदनधिकत्वे प्रमाणमुक्तमीशानसंहितायाम्—"अष्टसर्गान्न तु न्यूनं त्रिंशत्-सर्गाच्च नाधिकम्। महाकाव्यं प्रयोक्तव्यं महापुरुषकीर्त्तियुक्॥" इति। एतच्च प्रायिकं, वैपरीत्यस्यापि दर्शनात्। वस्तुतस्तु सर्गस्यानतिविस्तीर्णत्वञ्च त्रिंशदन्यूनद्विशत्यनधिकपद्यत्वेन

सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् ।
काव्यं कल्पान्तरस्थायि जायेत सदलङ्कृति ॥१९॥

योजनीयं, यदुक्तं तर्कवागीशानसंहितायां—"नात्यन्तविस्तरः सर्गस्त्रिंशतो वा न चोनता । द्विशत्या नाधिकं कार्य्यमेतत् पद्यस्य लक्षणम् ॥" इति ) अव्यवृत्तेः दोषपरिहारेण गुणालङ्कारसंयोगेन च श्रुतिसुखावहपद्यैरित्यर्थः ; ( यदुक्तं—"यस्मिन् श्रुते च चित्तस्य वैरस्यं न च हृद्यता । तानि वर्ज्यानि पद्यानि प्रसिद्धिप्रच्युतानि च ॥" इति ) सुसन्धिभिः परस्परसापेक्षैरित्यर्थः, "सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्" इत्याद्युक्तेरिति भावः । ( यच्च कैश्चित् "सन्धयो नाटकलक्षणोक्ता मुखप्रतिमुख-गर्भ-विमर्श-निर्वहणाख्याः पञ्च" इति व्याख्यातं, तत्तु न समीचीनं, सर्वत्र लक्षणायोगात् । विश्वनाथस्तु—"सर्वे नाटकसन्धयः" इति महाकाव्यलक्षणेऽभिहितवान्, तन्मतानुसारिभिरेव तथा व्याख्यातमिति दिक् ) ॥ १८ ॥

सर्वत्रेति ।—सर्वत्र भिन्नाः वृत्तान्ता येषु तैः, सर्वेषु एव सर्गेषु वर्णनीयविषयाणां प्रभेदादिति भावः ; अथवा भिन्नं पृथक्छन्दसा रचितं, वृत्तं पद्यम्, अन्ते येषां तैः, उपेतं युक्तं, प्रत्येकसर्गान्ते प्रायशस्तथा दर्शनात्, "एकवृत्तमयैः पद्यैः अवसानेऽन्यवृत्तकैः" इति वचनाच्च, ( एकवृत्तमयसर्गस्य सर्वत्रादर्शनात् अस्य प्रायिकत्वमवधेयं, यथा शिशुपालवधे चतुर्थः सर्गः नानावृत्तैरुपनिबद्धः, तदुक्तञ्च—नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते" इति ) सदलङ्कृति सत्यः विद्यमानाः अथवा शोभनाः, अलङ्कृतयः अनुप्रासोपमादयः यस्मिन् तादृशं, काव्यं लोकानां रञ्जकं सहृदयमनोहरं सत्, कल्पान्तरस्थायि चिरस्थायि, चिरकीर्त्तिकरमिति भावः, जायेत भवेत् ॥ १९ ॥

रसादिमत्त्वे सति कियल्लक्षणहीनस्यापि काव्यत्वम् ।—

**न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।**
**यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥२०॥**

काव्ये नायकप्रतिनायकयोर्वर्णनप्रकारः ।—

**गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।**
**निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥२१॥**
**वंशवीर्य्यश्रुतादीनि वर्णयित्वा रिपोरपि ।**
**तज्जयान्नायकोत्कर्ष-वर्णनञ्च धिनोति नः ॥२२॥**

प्रोक्तमहाकाव्यलक्षणस्य केषाञ्चिद्धर्माणां लक्षणघटकत्वे तद्धर्मवति खण्डकाव्ये महाकाव्यत्वापत्तिः, समुदायस्य लक्षणत्वाङ्गीकारे च कियल्लक्षणहीने महाकाव्येऽपि महाकाव्यत्वं न स्यात्, तत्र सिद्धान्तयितुमाह, न्यूनमिति ।—अत्र महाकाव्ये, उक्तेष्वङ्गेष्विति शेषः, यैः कैश्चिदङ्गैः न्यूनं हीनमपि, काव्यं न दुष्यति लक्षणहीनतया निन्दितं न भवति, यदि उपात्तेषु वर्णितेषु विषयेषु, सम्पत्तिः रचनामाधुर्य्यं, तद्विदः काव्याभिज्ञान्, आराधयति रसादिमत्त्वेन प्रीणयति । ( तदुक्तं —"नावर्णनं नगर्य्यादेर्दोषाय विदुषां मनः । यदि शैलर्त्तुरात्रादेर्वर्णनेनैव तुष्यति ॥" इति । "यद्युपात्तार्थसम्पत्ति" इति पाठे—स एवार्थः । एतेन वैचित्र्यविशेषजनकत्वमेव महाकाव्यत्वमिति फलितं, वैचित्र्यविशेषश्च महाकाव्ये खण्डकाव्याद्भिन्न एव, उद्यानादीनां वर्णनन्तु सरलमतीनामनायासप्रतीत्यर्थमिति दिक् ) ॥ २० ॥

सम्प्रति काव्ये नायकप्रतिनायकयोर्वर्णने प्रकारद्वयमाह, गुणत इति वंशेति च द्वाभ्याम् ।—प्राक् प्रथमं, नायकं गुणतः उपन्यस्य नायकस्य गुणान् वर्णयित्वा, तेन नायकेन, विद्विषां शत्रूणां,

गद्यकाव्यभेदाः।—

अपादः पदसन्तानो गद्यमाख्यायिका कथा।
इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल॥२३॥

---

प्रतिनायकानामित्यर्थः, निराकरणं पराजयः, इत्येष मार्गः वर्णनरीतिः, प्रकृतिसुन्दरः स्वभावरम्यः, ( अत्र नायकस्य गुणाः प्रतिनायकस्य च दोषा एव वर्णनीयाः, नायकस्य त्यागादीन् सामान्यगुणान् प्रदर्श्य विशेषपौरुषगुणानामुक्तत्वात् प्रतिनायकलक्षणे च दोषाणामभिहितत्वात्, तदुक्तं यथा—"शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी। ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥" इति, "धीरोद्धतः पापकारी व्यसनी प्रतिनायकः" इति च ; तथा च रामायणे पितुराज्ञया दीर्घवनवासक्लेशसहनादिसाधुव्रतेन रामेण स्वबलदृप्तस्य सीताहरणादिपापकर्मरतस्य रावणस्य वधवर्णनम् )। वंशेति।—रिपोः शत्रोरपि, वंशः कुलं, वीर्य्यं पराक्रमः, श्रुतं शास्त्रज्ञानम्, आदिना दयादाक्षिण्यादि यथायथमवगन्तव्यम्, एतानि वर्णयित्वा कीर्त्तयित्वा, तज्जयात् तस्य रिपोः जयात्, नायकस्य उत्कर्षवर्णनं नः अस्मान्, धिनोति तोषयति, ( एतेन प्रतिनायकलक्षणान्वितस्य तस्य वंशादिकं वर्णयित्वा ततोऽपि गुणाधिकनायकवर्णनं नायकस्योत्कर्षमेव जनयति इत्यायातं, यथा किराते दुर्य्योधनस्य प्रजारञ्जनं वर्णयित्वा ततोऽपि गुणवतो युधिष्ठिरादेरुत्कर्षप्रतिपादनार्थं तेन तज्जयः वर्णितः )॥ २१॥२२॥

काव्यस्य गद्यपद्यमिश्रत्वेन त्रैविध्यात् कृच्छ्रसाध्यनिर्वाहतया प्रथमं पद्यलक्षणमभिधाय सम्प्रति गद्यकाव्यं निरूपयन्नाह, अपाद इति नायकेनैवेति च द्वाभ्याम्।—अपादः छन्दोबद्धश्लोकचतुर्थांशः पादः तद्रहितः, पदसन्तानः पदसमूहः, गद्यम्।

**नायकेनैव वाच्याऽन्या नायकेनेतरेण वा ।**
**स्वगुणाविष्क्रिया दोषो नात्र भूतार्थशंसिनः ॥२४॥**

"चूर्णकमल्पसमासं दीर्घसमासमुत्कलिकाप्रायम् । समासरहितमाविद्धं वृत्तभागान्वितं वृत्तगन्धि ॥" तथा "चूर्णकोत्कलिकाप्राये आविद्धं वृत्तगन्धि च" इत्याद्युक्तं गद्यभेदं कथाऽऽख्यायिकयोरन्तर्भावात् पृथगनभिधाय प्रधानभेदद्वयं प्राचीनमतमाश्रयन्नाह, आख्यायिकेति।—तस्य गद्यस्य, द्वौ प्रभेदौ आख्यायिका कथा च, ( तदुक्तं—"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् । क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥ आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥" इति,यथा कादम्बर्यादिः । "आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनम् । अस्यामन्यकवीनाञ्च वृत्तं गद्यं क्वचित् क्वचित् ॥ कथांशानां व्यवच्छेद आश्वास इति बध्यते । आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥ अन्यापदेशेनाश्वास-मुखे भाव्यर्थसूचनम् ॥" इति, यथा हर्षचरितादिः ) । प्रोक्तलक्षणद्वयघटितपरस्परभेदकधर्माणां प्राचीनप्रबन्धेष्वन्यथाभावमाकलय्य लक्षणान्तरमपि दूषयितुमाह, तयोरिति ।—तयोर्मध्ये आख्यायिका नायकेनैव वाच्या नायक एव अस्या वक्ता इत्यर्थः, एवकारादन्यव्यवच्छेदः, ( उक्तञ्च—"वृत्तमाख्यायते यस्यां नायकेन स्वचेष्टितम्" इति ) अन्या कथा, नायकेन तदितरेण वा वाच्या, यथा कादम्बर्यां चन्द्रापीड़स्य नायकस्य महाश्वेतया संलापः । ननु नायकस्य वक्तृत्वे तस्य स्वगुणाविष्करणं दोषायेति शङ्कां वारयन्नाह, स्वगुणेति ।—भूतार्थशंसिनः यथार्थवादिनः नायकस्य, अत्र वक्तृत्वे, स्वगुणाविष्क्रिया निजगुणख्यापनं, दोषः न, भवतीति शेषः, असत्यकथनस्यैव दोषत्वात् इति भावः ॥ २३॥२४ ॥

गद्यकाव्यभेदे विचारः।—

अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।
अन्यो वक्ता स्वयं वेति कीदृग्वा भेदलक्षणम्?॥२५॥
वक्त्रञ्चापरवक्त्रञ्च सोच्छ्वासत्वञ्च भेदकम्।
चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि॥२६॥
आर्य्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः?।
भेदश्च दृष्टो लम्भादिरुच्छ्वासो वाऽस्तु किं ततः?॥२७॥

पूर्वोक्तं प्राचीनमतं दूषयन्नाह, अपीति।—अपि तु किन्तु, तत्रापि आख्यायिकायामपि, अन्यैः नायकभिन्नैः, उदीरणात् कथनात्, नायकादन्येषामपि वक्तृत्वादिति यावत्, अनियमः नायकमात्रवक्तृत्वरूपस्य विरोधः, दृष्टः, तत्तथाव्याप्तिदोष एव स्यात्, एतादृशभेदस्तु नैव करणीयः इत्यभिप्रायः; कथायाञ्च अन्यः नायकभिन्नः, स्वयं नायको वा, वक्ता इति भेदलक्षणम् आख्यायिकाया भेदकरणं, वा कीदृक्? नैव सङ्गच्छते इत्यर्थः, आख्यायिकायां नायको वक्ता, कथायामपि यदि नायको वक्ता स्यात् तदा स्वरूपगतवैलक्षण्याभावात् भेदकरणमकिञ्चित्कर-मिति भावः॥ २५॥

अपरञ्च भेदकरणं दूषयति, वक्त्रमित्यादि द्वाभ्याम्।—वक्त्रम् अपरवक्त्रञ्च छन्दसी, (तदुक्तं—"वक्त्रं नाद्यान्नसौ स्यातामब्धेर्यो-ऽनुष्टुभि ख्यातम्" इति, "अयुजि ननरला गुरुः समे तदपरवक्त्र-मिदं नजौ जरौ"इति,"वैतालीयं पुष्पिताग्राच्छेच्छन्यपरवक्त्रकम्" इति च) उच्छ्वासः कथांऽशव्यवच्छेदस्य संज्ञा आश्वासापरपर्य्यायः, (तदुक्तं—"कथांऽशानां व्यवच्छेद आश्वास इति कथ्यते") तेन सहितत्वञ्च भेदकं, कथाया इति शेषः। एतत् त्रयम्

तत् कथाऽऽख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता ।
अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ॥२८॥

आख्यायिकायाः चिह्नं लक्षणं,चेत् कथासु अपि प्रसङ्गेन प्रस्ताव-क्रमेण,आर्य्यादिवत् वक्त्रापरवक्त्रयोः छन्दसोः,प्रवेशः किं न? भवेत् इति शेषः, अपि तु भवेदेव, ( उक्तञ्च कथालक्षणे—"आर्य्या-वक्त्रापवक्त्राणां छन्दसा येन केनचित्") तस्मादुक्तभेदकरणं भ्रम-विजृम्भितमेवेति भावः। वक्त्रापरवक्त्रकृतभेददोषं प्रदर्श्य उच्छ्वास-कृतभेदं दूषयति,भेद इति।—लम्भः कथापरिच्छेदस्य संज्ञाभेदः, आदिपदेन उल्लासादीनां ग्रहणं, 'वा'-शब्दोऽत्र चार्थे, लम्भादिः उच्छ्वासश्च कथाऽऽख्यायिकयोः भेदः भिन्नः, पृथक्-पृथक्-संज्ञकः परिच्छेदः इति यावत्, कुत्रचित् कथायां लम्भपदेन परिच्छेदः कृतः,आख्यायिकायामुच्छ्वासपदेन उल्लासपदेन वा कृतः इत्यर्थः, दृष्टः, अस्तु, ततः किम् ? संज्ञामात्रभेदो न किञ्चित्कर इत्यर्थः, स्वरूपवैलक्षण्यस्यैव भेदकत्वेन कीर्त्तनात्, यथा घटपटयोः स्वरूपभेदात् घटः पटादितर इति भेदप्रतीतिः न, तथा घट-कलसयोः संज्ञामात्रभिन्नयोः घटाभेदतयेति भावः ॥२६॥२७॥

इदानीं स्वमतमाविष्करोति, तदिति।—तत् तस्मात्, कथा आख्यायिका च इति संज्ञाद्वयेन नामभ्याम्, अङ्किता, न तु स्वरूपत इति भावः, एका अभिन्ना, जातिः, उभयोरपि गद्य-मयत्वात् इति भावः। अन्यैरुक्तेषु पञ्चसु गद्यकाव्यभेदेषु प्रधान-भेदयोः कथाऽऽख्यायिकयोरभेदं प्रागुक्तरीत्या समर्थ्य इतरेषामपि भेदकधर्मसङ्गतं विविच्य तान् साधारणतया अन्तर्भावयति, अत्रैवेति।—अत्रैव कथाऽऽख्यायिकयोः इत्यर्थः, शेषाः अवशिष्टाः, आख्यानजातयः आख्यानत्वरूपधर्मविशिष्टाः खण्ड-कथादयः, अन्तर्भविष्यन्ति, ता हि एतयोरेव प्रकारभेदा इति

**कन्याहरणसङ्ग्राम-विप्रलम्भोदयादयः।**
**सर्गबन्धसमा एव नैते वैशेषिका गुणाः॥ २९॥**

भावः। (अन्तर्भविष्यन्ति इति भविष्यत्प्रयोगेणैतत् सूचितं, ग्रन्थकृता गद्यकाव्यस्य भेदा एव नाङ्गीकृताः, वस्तुतस्तु तन्मतमिदानीमपि सर्वत्र न खलु प्रमाणतया प्रचलति, प्रामाणिकतमैरन्यैरपि तत्तद्भेदानां निर्द्धारणात् इति, तदुक्तम् आग्नेये— "आख्यायिका कथा खण्ड-कथा परिकथा तथा। कथानिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा॥" इति)॥ २८॥

कथाऽऽख्यायिकयोर्भेदान्तरमपि दूषयति, कन्येति।— कन्यायाः अजातविवाहसंस्कारायाः, पात्रप्रतिपादनाय कृतसङ्कल्पायाः इत्यर्थः, हरणं युद्धादिना बलात् ग्रहणं, राक्षसोद्वाह इत्यर्थः, (तदुक्तं—"हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्। प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते॥" इति) सङ्ग्रामो युद्धं, विप्रलम्भः सम्भोगशृङ्गारभेदः, स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्विध इति दर्पणकारः, उदयः सूर्य्यचन्द्रयोः, अभ्युन्नतिर्वा नायकस्य, आदिना उद्याननगरादयो गृह्यन्ते, एते गुणाः, आख्यायिकाया इति शेषः, आख्यायिकायां कन्याहरणादिवर्णनरूपधर्मा एव कथाया भेदका इत्यन्येषां मतमिति निष्कर्षः, (यथा आख्यायिकामुपक्रम्य भामहेनोक्तं— "कन्याहरणसङ्ग्राम-विप्रलम्भोदयान्विता" इत्यादि) सर्गबन्धसमाः महाकाव्यसामान्या एव, कथायां किमु वक्तव्यमिति भावः, अतः एते वैशेषिकाः गुणाः भेदका धर्माः, न, महाकाव्यलक्षणे एतेषां वर्णनविधानेन कथं नैते गद्यकाव्यव्यवच्छेदकधर्माः, आख्यायिकायामेषां नियतत्वं न तु कथायां, महाकाव्ये त्वानुषङ्गिकत्वमिति च न वाच्यम्, असाधारणानामेव भेदकत्वाङ्गी-

काविभावकृतं चिह्नमन्यत्रापि न दुष्यति।
मुखमिष्टार्थसंसिद्धौ किं हि न स्यात्कृतात्मनाम्?॥३०॥

मिश्रकाव्यभेदाः।—

मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः।
गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते॥ ३१ ॥

कारात् सामान्यधर्माणान्तु तथात्वानौचित्यात्, (उक्तञ्च—"अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः" इति) ॥२८॥

कवेरिच्छाप्रयुज्यं किमपि चिह्नमेव कथाऽऽख्यायिकयो-र्भेदकमिति मतं निरस्यति,कवीति।—कविभावकृतं कवेः भाव-कृतम् अभिप्रायरचितं, चिह्नं लक्षणं, कथायां निवेशनीयम् इति भावः, (उक्तञ्च भामहेन—"कवेरभिप्रायकृतैरङ्कैरङ्किता कथा" इति, यथा शिशुपालवधे सर्गशेषश्लोकेषु "श्री"शब्दः, किराते च "लक्ष्मी" शब्दः प्रयुक्तः) अन्यत्रापि आख्यायिकायामपि, प्रयुक्तं तत् न दूष्यं भवति,तथा हि इष्टार्थसंसिद्धौ अभिप्रेतार्थसाधनाय, कृतात्मनां कृतयत्नानां सुधियां, किं हि मुखं प्रारम्भः, न स्यात्? अपि तु सर्वमेव तेषाम् इच्छया प्रारम्भे निवेशनीय-मित्यर्थः, "निरङ्कुशाः कवयः" इति भावः। "इष्टार्थसंसिद्धौ" इत्यत्र "संसिद्धौ" इति, "मुखम्" इत्यत्र "सुखम्" इति च पाठान्तरम्॥ ३०॥

सम्प्रति मिश्रकाव्यमाह,मिश्राणीति।—नाटकादीनि दृश्य-काव्यानि, मिश्राणि गद्यपद्योभयामिश्रितानि, आदिपदेन प्रक-रणादीनां परिग्रहः, (उक्तञ्च—"नाटकमथ प्रकरणं भाण-व्यायोगसमवकारडिमाः। ईहामृगाङ्कवीथ्यः प्रहसनमिति रूप-काणि दश॥" तथा, "नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरास-कम्। प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा॥ संलापकं

काव्यस्य संस्कृतादिभेदान्तराणि ।—

तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।
अपभ्रंशश्च मिश्रञ्चेत्याहुरार्य्याश्चतुर्विधम् ॥३२॥

---

श्रीगदितं शिल्पकञ्च विलासिका । दुर्म्मल्लिका प्रकरणी हल्लीशो भाणिकेत्यपि ॥ अष्टादश प्राहुरुप-रूपकाणि मनीषिणः ॥" इति) तेषां नाटकादीनाम्, अन्यत्र भरतादिग्रन्थे, विस्तरः बाहुल्येन प्रकाशः, तद्विजिज्ञासुभिस्तत्रैव यतितव्यं, ग्रन्थबाहुल्यभिया न ममात्र प्रयास इति भावः । न केवलं दृश्यकाव्यस्य मिश्रत्वं, श्रव्यकाव्यस्यापि कदाचित् मिश्रत्वमस्तीत्याह, गद्येति ।—गद्यपद्यमयी काचित्, वाणी इति शेषः, चम्पूरिति अभिधीयते कथ्यते, आख्यायिकादौ गद्यकाव्ये पद्यानामत्यल्पतया न चम्पूत्वम्, अत्र हि गद्यपद्ययोरुभयोरेवाधिक्यमित्यनयोर्भेदः । (काचित् इत्यनेन अस्य असार्व्वत्रिकत्वं सूचितं, तेन राजस्तुतिविषयत्वेनास्य विरुदसंज्ञा परैरुक्ताऽवगन्तव्या, तदुक्तं—"गद्यपद्यमयी राज-स्तुतिर्विरुदमुच्यते" इति ) ॥ ३१ ॥

"गद्यं पद्यञ्च मिश्रञ्च" इत्यनेन प्राक् काव्यस्य त्रैविध्यं दर्शयित्वा पुनः भाषादिभेदेन चतुर्विधत्वमाह, तदिति ।—तत् तस्मात्, एतत् वाङ्मयं वागात्मकं काव्यशास्त्रं, संस्कृतं देवभाषया रचितं, प्राकृतं तदाख्यभाषया रचितम्, अपभ्रंशः वक्ष्यमाणापभ्रंशलक्षणोक्तभाषाविशेषनिबद्धः, तथा मिश्रञ्च नानाभाषामयमित्यर्थः, इति एवंरूपेण, आर्य्याः विद्वांसः, चतुर्विधम् आहुः वर्णयन्ति । (मिश्रञ्च इत्यनेनैतत् प्रतीयते यत् भाषाणां नानात्वात् कवीनाञ्च स्वेच्छापरवशत्वात् बह्वीभिरपि भाषाभिस्ते काव्यं रचयेयुरिति, ततश्च एकया द्वाभ्यां तिसृभिः ततोऽप्यधिकाभिरपि भाषाभिः कवयः काव्यं कुर्वीरन् इति, उक्तञ्च भोजेन—"संस्कृते-

संस्कृतलक्षणम् ।—

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ।**

प्राकृतलक्षणम् ।—

**तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ॥ ३३ ॥**

नैव कोऽप्यर्थः प्राकृतेनैव चापरः । शक्यो वाचयितुं कश्चित् अपभ्रंशेन वा पुनः ॥ पैशाच्या शौरसेन्या च मागध्याऽन्यो निबध्यते । द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥" इति ) ॥ ३२ ॥

संस्कृतादिकं विवृणोति, संस्कृतमिति ।—दैवी देवसम्बन्धिनी देवव्यवहार्य्या वा, वाक् वाक्यं, महर्षिभिः प्राक्तनपण्डितैः मुनिभिः, नाम प्रसिद्धं,संस्कृतं संस्काररूपतया तदाख्यमित्यर्थः, अन्वाख्याता संस्कृतेत्याख्यया पश्चादुपवर्णितेत्यर्थः । ( संस्कृतशब्दस्य क्लीवत्वेऽपि उद्देश्यभूतायाः वाचः इत्यस्य स्त्रीत्वात् अन्वाख्याता इत्यस्य उद्देश्याधीनत्वेन स्त्रीत्वम् ; उद्देश्यस्य प्राधान्यञ्च नित्यस्थितायाः संस्कृतवाचः पाणिन्यादिभिः महर्षिभिः शिष्याणां प्रतिपत्त्यर्थं संस्कारोपायप्रदर्शनादवगन्तव्यम् ; अनुशब्दप्रयोगश्च तत एव युज्यते, स्थितायाः एव अन्वाख्यानमभ्यवादिति ) प्राकृतानां नीचानामिदं प्राकृतं, तस्य क्रमः नियमः, अनेकः बहुविधः, तथा तद्भवः तस्मात् संस्कृतात्, भवः उत्पन्नः, तत्समः संस्कृतसदृशः, तथा देशी तत्तद्देशप्रचलित इत्यर्थः । तत्र साक्षात् संस्कृतोद्भवा महाराष्ट्रीयभाषा, शौरसेन्यादयः संस्कृततुल्याः, अपराश्च तत्तद्देशविलसिताः इति बोध्यम् । देशीनामपि संस्कृतसादृश्यात् द्वाविव भेदाविति केचित्, ( उक्तञ्च—"आर्षोत्थमार्षतुल्यञ्च द्विविधं प्राकृतं विदुः" इति ) ॥ ३३ ॥

महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।
सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥३४॥
शौरसेनी च गौडी च लाटी चान्या च तादृशी ।
याति प्राकृतमित्येवं व्यवहारेषु सन्निधिम् ॥३५॥

---

प्राकृतलक्षणमभिधाय तस्य प्रकृष्टापकृष्टत्वाह, महाराष्ट्राश्रयामिति।—महाराष्ट्राश्रयां महाराष्ट्रो नाम दक्षिणापथवर्त्ती जनपदविशेषः, तदाश्रयां तत्सम्बन्धिनीं, तत्रत्यैर्व्यवहृतामित्यर्थः, भाषां प्रकृष्टम् उत्कृष्टं, प्राकृतं विदुः जानन्ति, बुधा इति शेषः, सूक्तिरत्नानां सूक्तयः सुवचनानि एव, रत्नानि सहृदयानन्दजननात् रत्नस्वरूपाणि, तेषां सागरः महदाधारतया रत्नाकररूपः, सेतुबन्धादि सेतुबन्धः तदाख्यप्राकृतकाव्यग्रन्थविशेषः तदादि, सेतुबन्धप्रभृतिप्राकृतकाव्यमित्यर्थः, आदिपदेन दशमुखवधादीनां परिग्रहः, यन्मयं यदात्मकं, यन्महाराष्ट्रीयभाषया रचितम् इत्यर्थः। एतेनानया भाषया प्राक्तनाः कवयः बहूनि काव्यानि निर्ममुरित्यायातम् ॥ ३४ ॥

'देशी' इत्यनेन देशानां बहुत्वात् बहवः प्राकृतभेदाः सम्भवन्ति इत्यपराण्यपि प्राकृतानि दर्शयति, शौरसेनीति।—शूरसेनो नाम मथुरासन्निहितजनपदभेदः, गौड़ः देशविशेषः, लाटः कश्चित् देशभेदः, तत्तद्देशप्रचलिता, तथा तादृशी तत्सदृशी, अन्या च देशीया भाषा प्राकृतम् इति, एवं व्यवहारेषु सन्निधिं याति प्राप्नोति, ( अन्या च तादृशीत्यनेन देशसंज्ञया निरूपिताः प्राच्यावन्तीमागधीद्राविडीशाबरीकोप्रभृतयः सर्वा एव भाषाः प्राकृतनाम्ना कविभिर्निबध्यन्ते इत्यपि सूचितम् ) ॥ ३५ ॥

अपभ्रंशलक्षणम् ।—

आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।
शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ॥ ३६ ॥

भाषाप्रयोगविषयाः ।—

संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादिकम् ।
आसारादीन्यपभ्रंशो नाटकादि तु मिश्रकम् ॥३७॥

क्रमप्राप्तमपभ्रंशं निरूपयति, आभीरादीति ।—काव्येषु आभीरो गोपजातिविशेषः, आदिपदेन कैवर्त्तचाण्डालादीनां ग्रहणं, तेषां गिरः वाचः, अपभ्रंश इति स्मृताः अपभ्रंशनाम्ना कथिताः, शास्त्रेषु काव्यातिरिक्तेषु वेदादिषु तु, संस्कृतात् अन्यत् संस्कृतातिरिक्तं सर्वं, प्राकृतम् उल्लिखितमाभीरादिवचनञ्च इत्यर्थः, अपभ्रंशतया उदितं कथितम् । (संस्कृतादिभेदेन चतुर्विधानां भाषाणां तिसृणां लक्षणं निरूपितं, मिश्रलक्षणं योगार्थबलादेव लाभात् निरर्थकमिति न कृतं, ततश्च नाना-भाषामिश्रितत्वरूप मिश्रलक्षणमित्यवगन्तव्यम ) ॥३६॥

संस्कृतप्राकृताभ्रंशाम् निरूप्य तत्तल्लक्ष्याणि मिश्रलक्ष्यञ्च निरूपयति, संस्कृतमिति ।—सर्गबन्धः पूर्वमुक्तः प्रबन्धविशेषः, महाकाव्यमित्यर्थः, आदिपदेन खण्डकाव्यादीनां परिग्रहः, संस्कृतं संस्कृतभाषया रचितम्, (अत्र संस्कृतादिशब्दानां तत्तद्भाषार्थे अभिधानात् संस्कृतमयत्वार्थे लक्षणा, तथा च अग्निपुराणं—"सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् । तद्रूपं न विशेत्तत्र तत्समं नापि किञ्चन ॥" इति । एतेन महाकाव्ये मिश्रकाव्यवदक्तृविशेषगतत्वनियमाभावात् नीचा-नामपि संस्कृतभाषयैव प्रयोग इति सूचितम् ) स्कन्धकादिकं

कथाबृहत्कथयोर्भाषाविवेकः।—

कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते।
भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥३८॥

स्कन्धकं छन्दोभेदः, आदिपदेन गलितकादीनां ग्रहणम्; (तदुक्तं —"छन्दसा स्कन्धकेनैव तथा गलितकैरपि" इति) स्कन्धकादिच्छन्दोरचितं काव्यं प्राकृतं प्राकृतभाषामयमित्यर्थः, आसारादीनि आसारादिभिः छन्दोभिः निबद्धं काव्यमित्यर्थः, अपभ्रंशः; (अपभ्रंशभाषानिबद्धकाव्येषु सर्गस्य कडवकसंज्ञा परैरभिहिता ग्रन्थकृता नादृता; यदुक्तम्—"अपभ्रंशनिबद्धेऽस्मिन् सर्गाः कडवकाभिधाः। तथाऽपभ्रंशयोग्यानि छन्दांसि विविधानि च॥" इति) नाटकादि तु नाटकम् आदि यस्य तत्, आदिना प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च परिग्रहः, (तत्र रूपकाणि दश, नाटिकाद्युपरूपकाण्यष्टादश इति ज्ञेयं, तेषां लक्षणानि ग्रन्थान्तरे द्रष्टव्यानि) मिश्रकं नानाभाषामयमित्यर्थः, (नाटकादौ विविधभाषाप्रयोगश्च वक्तृविशेषविषये नियमितविभिन्नभाषाभिरेवावगन्तव्यः, तथा चोक्तं नाटकादिप्रस्तावे—"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्। शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ॥ आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत्। अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ॥ चेटानां राजपुत्राणां श्रेष्ठिनाञ्चार्द्धमागधी। प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका ॥ योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम्। शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत् ॥" इति)॥ ३७॥

कथायाः मिश्रकाव्यत्वं प्रतिपादयन् भाषां निरूपयति, कथेति।—हि यतः, कथा पूर्वोक्तः काव्यभेदः, सर्वभाषाभिः

दृश्यकाव्यनिरूपणम्।—

**लास्यच्छलितशम्यादि प्रेक्ष्यार्थमितरत् पुनः।**

श्रव्यकाव्यनिरूपणम्।—

**श्रव्यमेवेति सैषाऽपि द्वयी गतिरुदाहृता ॥३९॥**

संस्कृतेन च बध्यते विरच्यते, अतः सा मिश्रसंज्ञकमिति शेषः; कथा द्विविधा, मिश्रभाषामयी संस्कृतमयी च, तत्र मिश्रभाषामय्या मिश्रत्वं, केवलसंस्कृतमय्याः कादम्बर्य्यादेर्न तथात्वम् इति भावः, बृहत्कथां तदाख्यकाव्यन्तु, भूतभाषा पैशाची भाषा, तन्मयीं तद्रचिताम्, अद्भुतार्थां विस्मयरसपूर्णां, प्राहुः, विद्वांस इति शेषः, पैशाच्या भाषया निबद्धन्तु बृहत्कथाख्यमपभ्रंशकाव्यमित्यवधेयम् ॥ ३८ ॥

सम्प्रति दृश्यश्रव्यत्वभेदेन काव्यस्य द्वैविध्यमाह, लास्येति। —लास्यं शृङ्गाररसाविष्टस्त्रीजननृत्यम्; (तदुक्तं—"लासः स्त्रीपुंसयोर्भावस्तदर्हं तत्र साधु वा। लास्यं मनसिजोल्लास-कारं स्मृतङ्गहाववत्॥ देव्यै देवोपदिष्टत्वात् प्रायः स्त्रीभिः प्रयुज्यते॥" इति अन्यच्च—"कोमलं मधुरं लास्यं शृङ्गाररससंयुतम्। गौरीतोषकरञ्चापि स्त्रीनृत्यन्तु तदुच्यते॥" इति) छलितं पुरुषनर्त्तनम्; (तदुक्तं—"पुंनृत्यं छलितं विदुः" इति) शम्या कपालदेशे करविन्यासपूर्वकं नृत्यम्; (तदाह—"भाले हस्तं समावेश्य नृत्यं शम्येति कीर्त्तितम्" इति। "शम्यादि" इत्यत्र "साम्यादि" इति क्वचित् पाठः, तत्पक्षे—साम्यं गीतवादित्रादिसमन्वितं नृत्यं रासापरपर्य्यायमभिहितम्) आदिपदेन ताण्डवादिपरिग्रहः, (तथोक्तं—"तल्लास्यं ताण्डवञ्चेति छलितं शम्यया सह। हल्लीशकञ्च रासञ्च षट्प्रकारं विदुर्बुधाः॥" इति। ताण्डवमुद्धतनृत्यं, यथा—"उद्धतन्तु महेशस्य

रीतिषु वैदर्भीगौड्योर्विवेकः।—

**अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥४०॥**

शामनात् तण्डुनोदितम्। भरताय ततः ख्यातं लोके ताण्डव-संज्ञया॥" इति, "वीररौद्ररसाऽऽधारमुद्धतं शङ्करप्रियम्। पुरुषाणां समारब्धं नृत्यं ताण्डवमुच्यते॥" इति च। हल्लीशं स्त्रीणां मण्डलाकारेण नृत्यम्; यदुक्तं—"मण्डलेन तु यत् स्त्रीणां नृत्यं हल्लीशकं विदुः। तत्र नेता भवेदेको गोपस्त्रीणां यथा हरिः॥") तदेवं लास्यादिसङ्घटितं काव्यं प्रेक्ष्यार्थं प्रेक्ष्यः दृश्यः, अर्थः प्रतिपाद्यं वस्तु यस्मिन् तत्, नटैः रामाद्यवस्थानुकरणाद्य दर्शनविषयत्वात्, ततश्च दर्शनविषयत्वं दृश्यलक्षणम्, तच्च नाटकादिकमित्यवधेयम्; इतरत् अन्यत्, दृश्यकाव्यात् भिन्नं मुक्तकादि इति यावत्, श्रव्यमेव श्रवणमात्रविषयत्वात्, ततश्च श्रवणमात्रविषयत्वं श्रव्यलक्षणमित्यायातम्, (उक्तञ्च भोजराजेन—"श्रव्यं तत् काव्यमाहुर्यन्नेक्ष्यते नाभिनीयते। श्रोत्रयोरेव सुखदं भवेत्तदपि षड्विधम्॥" इति) इति इत्थं, सा प्रसिद्धा, एषा अपि उक्तरूपा अपि, न केवलं प्रागुक्ता एव काव्यानां भेदाः, दृश्यश्रव्यत्वभेदेन पुनरपि द्विविधः भेदः इत्यपेरर्थः, द्वयी द्विविधा, गतिः काव्यभेदप्रवर्त्तकः पन्थाः, उदाहृता, प्राचीनैरिति शेषः॥ ३९॥

एवं काव्यभेदं निरूप्य तस्य रीतीर्निरूपयति, अस्तीति।—अनेकः विविधः, स च शास्त्रान्तरनिर्दिष्टः, परस्परं सूक्ष्मभेदः स्वल्पमात्रभेदः, गिरां वाचां, मार्गः रचनापद्धतिः, रीतिः इत्यर्थः. सा च श्लेषादिगुणविशिष्टा पदरचनारूपा; (तदुक्तं वामनेन—"विशिष्टा पदरचना रीतिः" (का० सू० वृ०

१अधि० २अ० ) इति ] रिणन्ति गच्छन्ति अस्यां गुणाः इति व्युत्पत्तेः, ( तदुक्तं—"वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः। रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते॥" इति ) अस्ति शास्त्रान्तरे वर्त्तते, [ तथा च—"सा त्रिधा वैदर्भी गौड़ीया पाञ्चाली च" (का० सू० वृ० १अधि० २अ० ) इति वामनः। अतिरिक्ता लाटीति दर्पणकारः। वैदर्भी चाथ पाञ्चाली गौड़ी चावन्तिका तथा। लाटीया मागधी चेति षोढ़ा रीतिर्निगद्यते॥" इति भोजराजादयः। तासां लक्षणानि च तत्रोक्तानि यथा—"तत्रासमासा निःशेष-श्लेषादिगुण-गुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥ समस्त-पञ्चषपदामोजःकान्तिविवर्जिताम्। मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥ समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम्। गौड़ीयेति विजानन्ति रीतिं रीतिविचक्षणाः॥ अन्तराले तु पाञ्चाली-वैदर्भ्योर्याऽवतिष्ठते। साऽवन्तिका समस्तैः स्यात् द्वित्रैस्त्रिचतुरैः पदैः॥ समस्तरीतिर्व्यामिश्रा लाटीया रीति-रिष्यते। पूर्वरीतेरनिर्वाहात् खण्डरीतिस्तु मागधी॥" इति। तासु वैदर्भी यथा—"मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से! ? क्व च तावकं वपुः ?। पदं सहेत भ्रमरस्य पेलवं शिरीष-पुष्पं न पुनः पतत्त्रिणः॥" इति ]। सूक्ष्मभेदतया च तन्निरूप-णेन ग्रन्थबाहुल्यकरणं वृथेति स्फुटभेदयोर्वैदर्भीगौड़ीययोर्मतं प्रकटयितुमाह, तत्र वैदर्भेत्यादि।—तत्र तेषु मार्गेषु मध्ये, वैदर्भगौड़ीयौ विदर्भादिपदैरुपचारात् विदर्भादिदेशस्थाः कवयो लक्ष्यन्ते, [ विदर्भशब्दात् "शेषे" ( ४।२।१२४ पा० ) इति अण्-प्रत्ययः। गौड़शब्दात् "वृद्धाच्छः" ( ४।२।११४ पा० ) इति छ-प्रत्ययः ] ततश्च वैदर्भः विदर्भदेशीयकविप्रियः, गौड़ीयः गौड़देशस्थकविसम्मतः तौ मार्गौ, वर्ण्येते, यतः तौ प्रस्फुटम्

श्लेषादिगुणाः।—

श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥ ४१ ॥

अन्तरं ययोः तादृशौ, एकस्य सुकुमारत्वेन अपरस्य उत्कटत्वेन अत्यन्तवैसादृश्यात् इति भावः। [अत्रेदञ्च प्रतिभाति यत्, स्थितास्वपि बह्वीषु रीतिषु प्राधान्येनात्र वैदर्भगौडीय-मार्गयोरुल्लेखः ग्रन्थकृता कृतः, तेन रीत्यन्तरापेक्षया वैदर्भरीते-रुत्कर्षः सूचितः, तदुत्कर्षप्रदर्शनार्थञ्च तद्भेदविशिष्टा गौडीया-ऽपि रीतिर्दर्शितेति। तथा हि रीतिभेदश्च गुणभेदाद्भवति, वैदर्भीरीतेश्च सर्वगुणोपेतत्वेनोत्कर्षत्वं, वैदर्भीरीतेः सर्वगुणोपेत-त्वञ्च वामनेनाप्युक्तं यथा—"समग्रगुणोपेता वैदर्भी" (का० सू० वृ० १अधि० २अ० ११सू०) इति; अपरैश्च "अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥" इति; तथा तत्प्रशंसनञ्च दृश्यते, "सति वक्तरि सत्यर्थे सति शब्दानुशासने। अस्ति तन्न विना येन परिस्रवति वाङ्मधु॥" इति; वक्ष्यति च—"इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः" इति। अत एव कविकुलशिरोमणिः कालिदासोऽपि तामेव रीतिमवलम्ब्य प्रायेण काव्यानि निबबन्धः, उक्तञ्च—"वैदर्भीरीतिसन्दर्भे कालिदासः प्रगल्भते" इति। उदाहृतञ्च वामनेन अभिज्ञानशाकुन्तलीयं शकुन्तला-विलोकनोत्कलिकावशंवदहृदयस्य मृगयाविहारादिरिरंसतो दुष्मन्तस्योक्तिरूपं "गाहन्तां महिषाः" इत्यादिकालिदासरचित-पद्यम्। ततो यथा स्फुटभेदत्वेन तथा प्रधानत्वेन च वैदर्भरीति-रनेन दर्शितेति दिक्]॥ ४० ॥

वैदर्भीरीतेरात्मभूतान् श्लेषादिदशगुणान् नामतो निर्दिशति,

इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।
एषां विपर्य्ययः प्रायो दृश्यते गौड़वर्त्मनि ॥ ४२ ॥

: इत्यादि द्वाभ्याम्।—श्लेषादयः दश गुणाः शब्दार्थोत्कर्षविधायित्वेन गुणशब्दवाच्याः, वैदर्भमार्गस्य वैदर्भीयरीत्याः, प्राणाः जीवनभूताः, तान् विना तत्र विदर्भजनानां काव्यत्वानङ्गीकारादिति भावः, एतेन श्लेषादिमत्पदरचनावत्त्वं वैदर्भीत्वमित्युक्तम्; स्मृताः, पण्डितैः इति शेषः, (स्मृताः इत्यनेन प्राचीनसम्प्रदायैः श्लेषादिदशानामेव गुणत्वमङ्गीकृतम्, अन्यैस्तु त्रयाणामिति सूचितम्, उक्तञ्च काव्यप्रकाशे— "माधुर्य्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश" इति। केचित्तु चतुर्विंशतिसङ्ख्यका गुणा इत्यप्याहुः, यथा—"चतुर्विंशतिसङ्ख्यातास्तेषु ये शब्दसंश्रयाः। ते तावदभिधीयन्ते नामलक्षणयोगतः॥ श्लेषः प्रसादः—"इत्युपक्रम्य "ओजस्तथाऽन्यदौचित्यं प्रेयानथ सुशब्दता। तद्वत् समाधिः सौक्ष्म्यञ्च गाम्भीर्य्यमथ विस्तरः॥ सङ्क्षेपः सम्मितत्वञ्च भाविकत्वं गतिस्तथा। रीतिरुक्तिस्तथा प्रौढ़िरथैषां लक्ष्यलक्षणे॥" इति। तथा शब्दगुणानां बाह्यत्वमर्थगुणानामान्तरत्वं, ये तु दोषत्वेऽपि गुणतां यान्ति तेषां वैशेषिकत्वञ्चाहुः, यथा—"त्रिविधाश्च गुणाः काव्ये भवन्ति कविसम्मताः। वाह्याश्चाभ्यन्तराश्चैव ये च वैशेषिका इति॥ वाह्याः शब्दगुणास्तेषु चान्तरास्त्वर्थसंश्रयाः। वैशेषिकास्तु ते नूनं दोषत्वेऽपि हि ये गुणाः॥" इति। दर्पणकारादयस्तु आत्मनः शौर्य्यादय इव रसस्य काव्यात्मभूतस्य धर्मा माधुर्य्यौजःप्रसादा एव गुणा इत्याहुः) गौड़वर्त्मनि गौड़ीयरीत्याम्, एषां श्लेषादिदशगुणानां, प्रायः बाहुल्येन, विपर्य्ययः वैपरीत्यं, दृश्यते; विपर्य्ययश्च क्वचित् सर्वथा, क्वचित् केनचित्

श्लेषलक्षणम्।—

श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम्।
शिथिलं मालतीमाला लोलालिकलिला यथा॥४३॥

अंशेनेति बोध्यम्। अत्र प्राय इत्यनेन कुत्रचित् एतयोः समताऽपि। [ वैदर्भी रीतिस्तु स्वल्पप्राणाक्षरवत्त्वादित्वेन गौड़ी रीतिस्तु वैदर्भीविरुद्धधर्मवत्त्वेनेति अनयोर्भेदः समूहनीयः, उक्तञ्च—"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी। वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया॥" इति। "बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौड़ीया। रीति-रनुप्रासमहिमपरतन्त्राऽस्तोभवाक्या च॥" इति। वामनस्तु समग्रगुणयुक्तत्वे वैदर्भी ओजःकान्तिगुणवत्त्वे गौड़ीया इत्येवं भेदमाह, यथा—"ओजःकान्तिमती गौड़ीया (का० सू० वृ० १अधि० २अ० १२सू०) इति। तत्र श्लोकः,—समस्तात्युत्कटपदा-मोजःकान्तिगुणान्विताम्। गौड़ीयामिति गायन्ति रीतिं रीति-विशारदाः॥" इति ]॥ ४१॥ ४२॥

इदानीं श्लेषादीनां लक्षणानि निरूपयति, श्लिष्टमित्यादि। —अल्पः प्राणः सारः, उच्चारणप्रयासः इत्यर्थः येषां तानि, अक्षराणि उत्तराणि प्रधानानि, प्रचुराणि इति यावत् यस्मिन् तादृशम्, अल्पप्राणाक्षराश्च ह्रस्वस्वरा वर्गीया विषमवर्णा यरलवाश्चेति; अस्पृष्टं शैथिल्यं येन तत् विन्यासवशात् शिथिल-त्वेन अलक्ष्यमाणं वाक्यं, श्लिष्टं श्लेषगुणयुक्तमित्यर्थः, तथा च अल्पप्राणाक्षरघटितबन्धस्याप्यन्तरान्तरा महाप्राणाक्षरविन्यासेन भिन्नानामपि पदानामेकपदताप्रतिभासहेतुत्वेन सन्दर्भस्या-शिथिलत्वप्रतिभासनं श्लेष इति फलितम्; (उक्तञ्च क्रमदीश्वरे-णापि—"अल्पप्राणेषु वर्णेषु विन्यासोऽप्यन्तराऽन्तरा। महा-

प्राणस्य च श्लेषो यथाऽयं भ्रमरध्वनिः॥" इति। श्लेषलक्षणमभिधाय तद्विपर्य्ययभूतं शिथिलमुदाहरणेन दर्शयन् गौडीमतमुपन्यस्यति, शिथिलमिति।—शिथिलं श्लेषलक्षणविपर्य्यासरूपमतिकोमलम्। यथा इति उदाहरणप्रदर्शनपरं, मालतीमाला लोलैः चपलैः, अलिभिः भ्रमरैः, कलिला व्याप्ता, अत्र दन्त्यवर्णप्रायत्वेनातिकोमलत्वान्न वैदर्भैः श्लेषत्वमङ्गीक्रियते, गौड़ैस्तु बन्धगाढ़तया अनुप्रासवत्तया च तदिष्यते इति भावः। (भोजस्तु एवंविधमुदाहरणमरीतिमदाख्यदोषदुष्टं मन्यते, यदाह—"गुणानां दृश्यते यत्र श्लेषादीनां विपर्य्ययः। अरीतिमदिति प्राहुः—॥" तत्र "विपर्य्ययेण श्लेषस्य सन्दर्भः शिथिलो भवेत्" इति लक्षणं विधाय शिथिलमुदाहृतं यथा—"आलीयं मालतीमाला लोलालिकलिला मनः" इति। एतेन यत् केनचित् "अत एव शिथिलम् इत्यत्र अपिकारोऽध्याहर्त्तव्यः, शिथिलमपि अनुद्धतमपि, असृष्टम् अप्रकाशितं, शैथिल्यं यस्य तत्" इत्येवं व्याख्याय मालतीमाला इत्यादिकमुदाहरणं लक्ष्यत्वेन दर्शितं, तदसङ्गतमिव प्रतिभाति, तथात्वे वैदर्भगौड्योरेकोदाहरणतया "वर्ण्यते प्रस्फुटान्तरौ" इत्यस्यासङ्गतिरेव स्यात्। तथा वक्ष्यमाणेऽपि "अनुप्रासधिया गौड़ैः" इत्यादौ 'इति' इत्यस्य इत्यपीत्यर्थं विधाय यत् "मालतीमाला" इत्यादावनुप्रासमद्भावे वैदर्भगौड्योः समानविषयत्वं, वक्ष्यमाणे "मालतीदाम" इत्यादौ अनुप्रासासद्भावे तु भिन्नविषयत्वं दर्शितं, तदपि न, तादृशभेदकल्पने मानाभावात् गौरवाच्च; तथा हि दण्डिमतमनुसरता भोजेन विशदीकृत्योक्तं,—"श्लिष्टमस्पृष्टशैथिल्य शिथिलं तद्विपर्य्ययः। गौड़ीयैरिष्यते तत्तु बन्धप्राशस्त्यगौरवात्॥ यथा—लीलाविलोलललना-ललितालकलासकाः। विलुप्तमालतीमाला जलकालानिला ववुः॥" इति।

अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात्।
वैदर्भैर्मालतीदाम लङ्घितं भ्रमरैरिति ॥४४॥

किञ्च, "गुणः सुश्लिष्टपदता श्लेष इत्यभिधीयते" इति श्लेषलक्षणं विदधता "उभौ यदि व्योम्नि पृथक् प्रवाहौ" इत्याद्युदाहरणञ्च दर्शयता तेन श्रुत्यनुप्रासवत्सन्दर्भे वैदर्भाणां श्लिष्टत्वं प्रमाणीकृतमेव, गौड़मते तु अनुप्रासमहिम्ना बन्धस्य गाढ़ताऽवभासादत्र श्लेषाख्यगुणो बोद्धव्यः इति सर्वमवदातम्। अन्येऽपि गौड़ीलक्षणश्लेषमुदाहरन्ति, यथा—"उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः। उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति॥" इति। अत्रानुप्रासबाहुल्याभावात् महाप्राणाक्षरघटितत्वात् बन्धस्य विकटत्वाच्च गौड़ीलक्षणः श्लेषः, अनुप्रासमात्रस्य लक्षणघटकत्वे तद्घटितवक्ष्यमाणमाधुर्य्यादौ अतिव्याप्तेरिति ज्ञेयम्) ॥४३॥

अनुप्रासधियेति।—गौड़ैः गौडदेशनिवासिभिः कविभिः, अनुप्रासधिया अनुप्रासो वर्णावृत्तिरूपः शब्दालङ्कारः, तस्य धिया बोधेन, तथा बन्धगौरवात् अनुप्रासमद्भावेन रचनाया गाढ़त्वात्, तत् मालतीमालेत्यादि श्लेषोदाहरणम्, इष्टम् अभिलषितं, ते अनुप्रासबहुलामोजःकान्तिमतीं रचनां प्रायश इच्छन्तीति भावः। (एतेन गौड़ानां सुमहाप्राणाक्षरवर्णघटितत्वाभावेऽपि यत्रानुप्रासबाहुल्यं बन्धगाढ़त्वञ्च भवेत् तदप्यभिमतम्) ननु वैदर्भीगौड्योः को भेदः? इत्याह, वैदर्भैरिति।—वैदर्भैः विदर्भदेशीयैः कविभिः, "मालतीदाम लङ्घितं भ्रमरैः" इति एवंरूपम्, अनुप्रासहीनमपि वाक्यमित्यर्थः, इष्टं श्लिष्टत्वेनाङ्गीकृतं, तेषाम् अनुप्रासासद्भावेऽपि श्लेषत्वकीर्त्तना-

प्रसादलक्षणम्।—

**प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति।**
**लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः॥४५॥**

दिति भावः। [यद्यपि अनुप्रासवच्छ्लेषोदाहरणे वैदर्भी-गौड्योः साम्यं दृष्टं, तथाऽपि अनुप्रासश्लेषोदाहरणे गौडी-लक्षणाप्रवेशादुभयोर्भिन्नविषयत्वं दर्शितमिति दिक्। अयञ्च श्लेषः शब्दमात्रगुणः। अर्थगुणस्तु अन्यैरुक्तो यथा—"तेषां श्लेष इति प्रोक्तः संविधाने सुसूत्रता" इति। वामनेनापि यथोक्तं—"घटना श्लेषः" (का० सू० वृ० ३अधि० २अ० ४सू०) इति, घटना च क्रमकौटिल्यानुल्वणत्वोपपत्तियोगः। तत्र इदं कृत्वा इदं कर्त्तव्यमिति क्रमः, लोकातिगामिनी वक्रता कौटिल्यम्, अतिमात्रतया प्रतिभासाभावोऽनुल्वणत्वं, कथमेव-मर्थः सङ्गच्छते इति अनुपपत्तिसमाधानौपयिकविशेषनिवेशनम् उपपत्तिः, तथा च क्रमेण कौटिल्येन अनुल्वणतया उपपत्त्या योजनमर्थश्लेष इति लक्षणम्; अत एव दर्पणकारेणोक्तं यथा—"श्लेषः क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा। तत्र क्रमः क्रियासन्ततिः, विदग्धचेष्टितं कौटिल्यम्, अप्रसिद्धवर्णना-विरहोऽनुल्वणत्वम्, उपपादकयुक्तिविन्यास उपपत्तिः, एषां योगः सम्मेलनं, स एव रूपं यस्याः घटनाया तद्रूपः। यथा—'दृष्ट्वैकासनसंस्थिते प्रियतमे' इत्यादि; अत्र दर्शनादयः क्रिया, उभयसमर्थनरूपं कौटिल्यं, लोकसंव्यवहाररूप-मनुल्वणत्वम्, 'एकासनसंस्थिते' 'पश्चादुपेत्य' 'नयने पिधाय' 'ईषद्वक्रितकन्धरः' इति चोपपादकानि, एषां योगः" इति]॥४४॥

प्रसादं निरूपयति, प्रसादवदिति।—प्रसिद्धः अर्थः प्रति-

व्युत्पन्नमिति गौड़ीयैर्नातिरूढ़मपीष्यते ।
यथाऽनत्यर्जुनाब्जन्म-सदृक्षाङ्को बलक्षगुः ॥४६॥

प्रायत्रसु यस्य तत् उभयार्थकशब्दानाम् अप्रसिद्धार्थे प्रयोगो निहतार्थतारूपदोषः तद्रहितमित्यर्थः, प्रतीत्याम् अर्थपरिज्ञाने, सुभगं सरलं, झटित्यर्थबोधकमित्यर्थः, वचः वचनं, प्रसाद-वत् प्रसादगुणयुक्तम् ; तत्र उदाहरणम्, इन्दोरिति ।—इन्दीवरं नीलोत्पलं, तद्वत् द्युतिर्यस्य तादृशं श्यामवर्णं, लक्ष्म कलङ्कः, इन्दोः चन्द्रस्य, लक्ष्मीं श्रियं, तनोति विस्तारयति । अत्र इन्द्वादिशब्दाः प्रसिद्धचन्द्राद्यर्थेषु प्रयुक्ता झटित्यर्थबोधका-श्चेति ज्ञेयम् ; [ तथा चोक्तं कण्ठाभरणे—"प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते ।" यथा, "गाहन्तां महिषा निपान-सलिलम्" इत्यादि, इह प्रसिद्धार्थपदोपादानात् प्रसादाख्यशब्द-गुणत्वम् । अर्थगतप्रसादस्तु तत्रैवोक्तः यथा—"यत्तु प्राकट्य-मर्थस्य प्रसादः सोऽभिधीयते" इति, अर्थस्य प्राकट्यं वैमल्यम् ; अत एव वामनः,—"अर्थवैमल्यं प्रसादः" ( का० सू० वृ० ३अधि० २अ० ३सू० ) इति लक्षणमाह ; यथा—"अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् । विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोड-ताम्रस्तमांसि ॥" इति । अत्र पद्मिनीविकाशकरणे कोकशोकहरणे तमोविदारणे च अनुक्तोऽपि सूर्य्यलक्षणोऽर्थः प्रकटमुपलक्ष्यते इति अर्थप्रसादः ; तथा च निर्दोषत्वे सति परिस्फुटार्थवत्पदत्वं प्रसाद इति भावः ] । ॥ ४५ ॥

गौड़ीयानां मतं दर्शयति, व्युत्पन्नमिति ।—गौड़ैः तद्देश-वासिभिः पण्डितैः, न अतिरूढमपि अनतिप्रसिद्धमपि, निहत-ार्थत्वदोषाकलितमपीत्यर्थः, व्युत्पन्नं व्युत्पत्तियुक्तं, योगार्थ-

घटितमित्यर्थः, वाक्यम्, इत्थं बन्धगाढ़तावशात् वैचित्र्याधायकत्वादङ्गीक्रियते, निहतार्थत्वादिदोषास्तु शिथिलबन्धे काव्ये एव गौड़ैः दोषत्वेन मन्यन्ते, गाढ़बन्धे तु वैचित्र्यावहत्वेन न ते दोषा इत्याद्रियन्ते इत्यवधेयम्। उदाहरति, यथेति।—अनत्यर्जुनाब्जन्मसदृक्षाङ्कः अनत्यर्जुनं नातिधवलं, यत् अब्जन्म उत्पलं, तस्य सदृक्षः सदृशः, अङ्कः कलङ्कः यस्य तथोक्तः, वलक्षः धवलः, गौः किरणो यस्य सः चन्द्र इति। (अत्र अर्जुनशब्दः कार्त्तवीर्य्यार्जुनपाण्डवयोः प्रसिद्धः श्वेतवर्णे अप्रसिद्ध इति निहतार्थत्वदोषदुष्टः, अब्जन्मशब्दस्य उत्पले केनापि न प्रयुक्ततया अप्रयुक्तदोषाक्रान्तः, सदृक्षशब्दस्य उपमागर्भबहुव्रीहिणैवार्थबोधनात् अधिकः प्रयुक्त इति अधिकपदता-दोषयुक्त एव, तथा वलक्षशब्दोऽपि अप्रयुक्तता-दोषक्रान्तः, श्रुतिकटु च सदृक्षवलक्षशब्दौ, तथा वृषादौ प्रसिद्धस्य गोशब्दस्य अप्रसिद्धे किरणे प्रयुक्तत्वात् तत्रापि निहतार्थतादोषः, 'अनत्यर्जुनाब्जन्म' इत्यत्र सन्धौ कष्टत्वञ्च; इत्यञ्च बहुदोषमपि काव्यं सानुप्रासप्रबन्धस्य गाढ़त्वात् गौडाः काव्यत्वेनाद्रियन्ते। एवञ्च कष्टत्वादिदोषासद्भावेन झटित्यर्थोपस्थापकत्वं प्रसाद इति वैदर्भाः, गौड़ीयकविभिस्तथाविधप्रसादो नाङ्गीक्रियते इति ततो भेदः। किञ्च सरस्वतीकण्ठाभरणे तु गुणविपर्य्ययादरीतिमदाख्यदोषोदाहरणत्वेन पद्यार्द्धतया निबद्धमिदम्—"अप्रसन्नं भवेत् वाक्यं प्रसादस्य विपर्य्ययात्। यथा—अनङ्गकमलं चक्रे सयमाना मरालिका। यस्यानत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः॥" इति, तेन च वैदर्भाणामिदं पद्यं दोषतयैव उदाहरणीयमित्यभिप्रायः। अयञ्च प्रसादाख्यगुणः अर्थगत एव, शब्दगतस्तु "ओजोमिश्रितशैथिल्यात्मा" इति दर्पणकारोक्तो वेदितव्यः; उदाहृतञ्च तेनैव यथा—"यो यः शस्त्रं

समतालक्षणम् ।—

समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।
बन्धा मृदुस्फुटोन्मिश्र-वर्णविन्यासयोनयः ॥ ४७ ॥

विभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां यो यः पाञ्चाल-गोत्रे शिशुरधिकवया गर्भशय्यां गतो वा । यो यस्तत्कर्म-साक्षी चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥" इति । ननु विरुद्धयोः ओजःप्रसादयोः कथं मेलनमित्यपि नाशङ्कनीयम्, ओजोमिश्रितशैथिल्यस्य प्रसादगुणत्वेन विशुद्धशैथिल्यस्य तु दोषत्वेन सर्वैरेवाङ्गीकृतत्वात्, तथा हि "गाढबन्धत्वमोजः" (का० सू० वृ० ३अधि० १अ० ५सू०) "शैथिल्यं प्रसादः" (का०सू० वृ० ३अधि० १अ० ६सू०) इति सूत्रयता वामनेन ओजोविपर्य्ययरूपस्य शैथिल्यस्य गुणविपर्य्ययदोषत्वमेव स्यादिति शङ्कां पराकर्त्तुम् ओजसा मिश्रितस्य शैथिल्यस्य गुणत्व-मित्युक्तं, यथा—"गुणः संप्लवात्" (का० सू० वृ० ३अधि० १अ० ७सू०) इति "न शुद्धः" (का० सू० वृ० ३अधि० १अ० ८सू०) इति सूत्रेण पुनः तदमिश्रितशैथिल्यस्य गुणत्वं निराकृत्य दोषत्वमेव स्थापितम् । विरुद्धयोरोजःप्रसादयोः कथं संप्लवः ? इत्यतः उक्तं—"स त्वनुभवसिद्धः" (का० सू० वृ० ३अधि० १अ० ९सू०) इति । अत्र च श्लोकः,—"करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः । यथाऽनुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥" इति ) ॥ ४६ ॥

समतां निरूपयति, सममिति ।—बन्धेषु रचनासु, अवि-षमम् अविलक्षणम्, उपक्रमोपसंहारयोः सदृशमित्यर्थः, समं समताख्यगुणयुक्तं, तथा च मृदुस्फुटोन्मिश्रवर्णानामन्यतमेन उपक्रमोपसंहारयोः यदवैषम्येण भणनं सा समता इत्यर्थः,

**कोकिलालापवाचालो मामेति मलयानिलः।**
**उच्छलच्छीकराच्छाच्छ-निर्झराम्भःकणोच्चितः ॥४८॥**

ते बन्धाः त्रिविधाः, मृदुः कोमलः, स्वरेषु ह्रस्वान्त्याः व्यञ्जनेषु वर्गान्त्याः दन्त्याश्च मृदुवर्णा इत्यर्थः, स्फुटः तीव्रः, स्वरेषु दीर्घस्वराः व्यञ्जनेषु नकारवर्जटवर्गरेफशषहाः दन्त्य-संयोगाश्च वर्णाः इत्यर्थः, मध्यमः उभयात्मक इति बन्धानां त्रिविधतया समतायास्त्रैविध्यमत्रावगन्तव्यम्। बन्धानां मृदुत्वादिहेतुमाह, मृद्विति।—मृदुवर्णानां ह्रस्वस्वरादीनां, स्फुटानां दीर्घस्वरादीनां, तथा उभयेषाम् उभयात्मकानां वर्णानां, विन्यासः योनिः कारणं येषां तादृशाः। (अत्र मृद्वादिवर्णघटितत्वं यथा त्रिविधभेदहेतुस्तथा असमास-दीर्घसमास-मध्यमसमासा अपि, यदुक्तम्—"असमासा समासेन मध्यमेन च भूषिता। तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता॥" इति। अयञ्च गुणः शब्दगत एव, अर्थगुणस्तु समता यादृशेन प्रकृतिप्रत्यययोगेन प्रक्रान्तं तादृशेनैव यत्र समापनं भवेत्, तत्रैवेति बोध्यम्, अत एव "प्रक्रान्तप्रकृति-प्रत्ययाविपर्यासेन अर्थस्य विसंवादिताविच्छेदः, स च प्रक्रम-भङ्गरूपदोषविरह एव" इति दर्पणकारेणोक्तम्, उदाहृतञ्च यथा—"उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यादि। विपर्ययस्तु यथा—"प्रसीद चण्डि! त्यज मन्युमञ्जसा जन-स्तवायं पुरतः कृताञ्जलिः। किमर्थमुत्कम्पितपीवरस्तन-द्वयं त्वया लुप्तविलासमास्यते?"॥ इति। अत्र प्रसीद त्यज इति कर्त्तृ-वाचितया प्रक्रान्तस्य आस्यते इत्यत्र त्यागान्न समता)॥४७॥

उक्तायाः समतायाः त्रैविध्यं दर्शयति, कोकिलेत्यादि द्वाभ्याम्।—कोकिलानाम् आलापेन वाचालः मुखरः,

चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।
स्पर्द्धते रुद्धमद्धैर्य्यो वररामामुखानिलैः ॥ ४९ ॥

मलयानिलः माम् एति, पीडयितुं सुखयितुं वा इति शेषः । (अत्र मृदुनोपक्रान्तस्य तेनैव समापनमिति मृदुबन्धगा समता) उच्छलन्तः उद्गच्छन्तः, शीकराः जलकणा यस्य तादृशम्, स्वच्छाच्छम् अतिस्वच्छं, यत् निर्झराम्भः तस्य कणैः विन्दुभिः, उक्षितः अभिषिक्तः, सुशीतल इति यावत्, मलयानिलः मामेति । (अत्र स्फुटबन्धेन उपक्रान्तस्य सन्दर्भस्य तेनैव उपसंहार इति स्फुटबन्धगता समता ) चन्दनेति ।—चन्दने प्रणयः संसर्गः चन्दनप्रणयः, तेन उद्गन्धिः उद्गतगन्धः, मन्दः मृदुलः, मलयमारुतः मलयानिलः, ( अत्र स्फुटमृदुमिश्रवर्णघटितबन्धत्वान्मध्यमो बन्धः, तेनैवोपक्रमोपसंहाराविति मध्यमबन्धगतेयं समता। एवं समतायाः त्रैविध्यमन्यत्रापि दृश्यते, यथोक्तं—"यन्मृदुप्रस्फुटोन्मिश्र-वर्णबन्धविधिं प्रति । अवैषम्येण भणनं समता साऽभिधीयते ॥" इति ; अयञ्च शब्दगतः समतागुणः, अर्थगतस्तु "अवैषम्यं क्रमवतां समत्वमिति कीर्त्तितम्" इत्युक्तलक्षणः ; तत्रोदाहरणं यथा—"अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयोः बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति । ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी मुग्धत्वस्य च यौवनस्य च सखे ! मध्ये मधुश्रीः स्थिता ॥" इति । अत्र मधुश्रियो मौग्ध्यत्यागो यौवनारम्भकृतानां विशेषणानाम् अवैषम्यात् समता। भोजस्त्वत्र श्लोकार्द्धगतं समतायास्त्रिविधमुदाहरणं रुचिरममन्यमानः "भवेत् स एव विषमः समताया विपर्य्ययः" इति लक्षणमभिधाय प्रथमश्लोकं समताविपर्य्ययरूपविषमदोषस्योदाहरणत्वेन लक्षयित्वा च "अत्र पूर्वार्द्धस्य मृदुबन्धत्वात्

इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरौ।
अपेक्षमाणा ववृधे पौरस्त्या काव्यपद्धतिः॥ ५० ॥

उत्तरार्द्धस्य च गाढ़बन्धत्वात् समबन्धेषु विषममिति विषमो नाम शब्दप्रधानः समताविपर्य्ययो दोषः" इत्याह ; तत्र रुचिरं, सर्व्वत्रोदाहरणदर्शनानन्तरमेव प्रत्युदाहरणदर्शनस्य क्रम-दर्शनादित्यवधेयम्) समतात्रयमित्थं सार्द्धश्लोकेन दर्शयित्वा गौड़ामितद्विपर्य्ययं लक्षयितु वैषम्यं दर्शयति, स्पर्द्धते इति।—तथा रुद्धं निराकृतं, मम धैर्य्यं येन तथाभूतः, मम धैर्य्यं नाशयन्नित्यर्थः, वररामाणाम् उत्तमाङ्गनानां, मुखानिलैः मुखनिःसृतसुगन्धिमारुतैः, स्पर्द्धते सादृश्यं लभते इति यावत्, सौगन्ध्यसाम्यादिति भावः। (अत्र स्फुटबन्धेन उपक्रमः मृदुबन्धेनोपसंहार इति वैषम्यात् प्रोक्तलक्षण-समताया नावसरः ; गौड़ीयास्तु समतामत्रापि स्वीकुर्व्वन्ति इत्यभिप्रायः)॥ ४८॥४९ ॥

निरुक्तलक्षणसमतायां गौड़ीयानामनादरं दर्शयति, इतीति।—इति उक्तप्रकारं, "स्पर्द्धते" इत्यादिश्लोकोक्तमिति यावत्, वैषम्यं समताविपर्य्ययजन्यदोषम्, अनालोच्य अविचार्य्य, अर्थानां काव्यार्थानाम्, अलङ्काराणाम् अनुप्रासोपमादीनाञ्च, डम्बरौ आड़म्बरौ, उत्कर्षौ इत्यर्थः,अपेक्षमाणा अनुसरन्तीत्यर्थः, पौरस्त्या पूर्व्वदेशीया, गौड़ीया इत्यर्थः, काव्यानां पद्धतिः ववृधे, ते हि अर्थानुसारेण अलङ्कारानुसारेण च कदाचित् बन्धस्य मार्दवं कदाचित् वैकट्यं कुर्व्वाचिद्वा मिश्रीभावमाद्रियन्ते, न तु गुणपक्षपातेन पूर्व्वोक्तरूपां वैदर्भैरादृतां समताम्। अयं भावः,—यत्रार्थस्य मृदुत्वं तत्र मृदुलो बन्धः, यत्र तु अर्थस्य वैकट्यं तत्र विकटो बन्धः, यत्र च अर्थस्य मिश्रीभावः तत्र

माधुर्य्यलक्षणम् ।—

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।**

रसलक्षणम् ।—

**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ ५१ ॥**

मध्यमो बन्धः, न तु येनैवारम्भस्तेनैव समापनमिति । (युक्तञ्चैतत्,तथा हि—"सारङ्गाः! किमु वल्गितैः? किमफलैराडम्बरैर्जम्बुकाः!? मातङ्गाः! महिषाः! मदं व्रजत किम्? शून्येऽथ शूरा न के?। कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥" इत्यत्रोत्तरार्द्धे कुपितसिंहवर्णनरूपार्थस्य वैकल्यात् उपक्रान्तमृदुबन्धत्यागो गुण एवेति; अत एव पतत्प्रकर्षतादोषस्यापि क्वचिद्गुणत्वं दर्पणकृता दर्शितं, यथा—"पतत्प्रकर्षता तथा । तथेति क्वचिद्गुणः, यथा—'चञ्चद्भुज' इत्यादि । अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः" इति । वैदर्भास्तु अर्थवैषम्येऽपि येन बन्धेन उपक्रमः तेनासमापनं दोषत्वेनैव मन्यन्ते इत्यनयोर्भेदः । एवमलङ्कारेऽपि गुणवदलङ्कारा अपि रसस्योत्कर्षकाः, न तु रसनिरपेक्षकाः इति वैदर्भमतं, गौड़ानान्तु रसनिरपेक्षा अपीत्यनयोर्भेदः इति ) ॥ ५० ॥

माधुर्य्यं निरूपयति, मधुरमिति ।—रसवत् रसाः शृङ्गारादयः, तद्गुणयोगात् भाव-तदाभासा अपि रसशब्दवाच्याः, ते विद्यन्ते यत्रेति तत् वाक्यं, मधुरं माधुर्य्यगुणयुक्तम् । (केचित्तु शृङ्गारकरुणान्यतरप्रकाशानुगुणव्यापारावेशेन शब्दार्थयोः चित्तद्रुतिविधायित्वं माधुर्य्यमित्याहुः, यथा—"शृङ्गार एव मधुरः परः प्रह्लादनो रसः । तन्मयं काव्यमाश्रित्य माधुर्य्यं प्रतितिष्ठति ॥ शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् । माधुर्य्यमार्द्रतां

याति यतस्तत्राधिकं मनः ॥" इति ) तर्हि रस एव माधुर्य्यमित्यर्थत एव आयातं,परं गुणानां साक्षात् परम्परया वा रसोपकारकत्वं सर्व्वैरेव कविभिः अङ्गीकृतं, न तु रसात्मकत्वमित्याशङ्क्याह, वाचीति।—वाचि वाक्यप्रतिपादकताहृशवर्णे, वस्तुन्यपि वाक्यप्रतिपाद्यभूते अर्थेऽपि, रसस्थितिः रसानां शृङ्गारादीनां, स्थितिः व्यञ्जकत्वसम्बन्धेनावस्थानम्। (रसव्यञ्जकवर्णाश्च शृङ्गारकरुणशान्तरसे—"मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना। रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः॥ अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा॥" इत्युक्तलक्षणाः। वीरबीभत्सरसेषु च—"वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ। उपर्य्यधो द्वयोर्वा सरेफष्टठडढैः सह॥ शकारश्च षकारश्च तस्य व्यञ्जकतां गताः। तथा समासबहुला—" एतल्लक्षणोक्ताः। हास्याद्भुतभयानकरसेषु च तत्तदवशिष्टा मध्यवर्णा मध्यमसमासाश्च विज्ञेयाः, तथा रसव्यञ्जका अर्थाश्च रत्यादिस्थायिभावाः एव ; ततश्च रसव्यञ्जकवर्णार्थादिमत् वाक्यं माधुर्य्यम् इति लक्षणम्) रसवत् इत्यनेन प्राप्तस्य रसस्य लक्षणमज्ञात्वा तद्व्यञ्जकवर्णादीनां परिज्ञानासम्भवात् रसलक्षणमाह, येनेति।—येन धीमन्तः सामाजिकाः, न तु कुधिय इत्यर्थः, मधुव्रताः भ्रमराः, मधुनेव माद्यन्ति मत्ता भवन्ति, तस्य लोकोत्तराह्लादरूपत्वादिति भावः, स रस इति शेषः ; तथा च सुधियां मादहेतुः ताहृशकाव्यार्थानुशीलनजन्मा भावविशेष एव रसः। [स च "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ताः शमोऽपि च॥" इत्युक्तलक्षणस्थायिभावरूपः। रत्यादिस्थायिभावश्च ललनादिभिरालम्बनविभावैः जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, कटाक्षादिभिरनुभावैः प्रतीतियोग्यक्रियमाणः, उत्कण्ठादिभि-

र्व्यभिचारिभिः परिपोषितः नायकनिष्ठतया अनुमीयमानः वासनासन्निकर्षेण सामाजिकैः साक्षात् क्रियमाणश्च रसः इति संज्ञां लभते; उक्तञ्च—"व्यक्तः स तैर्विभावाद्यैः स्थायिभावः रसः स्मृतः" इति, "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादिः स्थायिभावः सचेतसाम्॥" इति च। शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतरसानां वक्ष्यमाणानां स्थायिभावाश्च क्रमेण रतिहासशोकक्रोधोत्साह-भयजुगुप्साविस्मया वेदितव्याः, शान्तरसस्य च शमः। अत्र च रसानामष्टत्वमेव प्रतिपादयिष्यते, तत्तु "अष्टौ नाट्ये रसाः स्मृताः" इत्युक्तेः नाट्याभिप्रायेण, श्रव्यकाव्ये शान्तरसस्यापि सम्भवात्; यदुक्तं—"न यत्र दुःखं न सुखं न चिन्ता न द्वेष-रागौ न च काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः॥" इति सुधीभिर्विभाव्यम्।
केचित्तु—"बन्धे पृथक्पदत्वञ्च माधुर्य्यमुदितं बुधैः" इत्युक्त-लक्षणं पृथक्पदत्वं माधुर्य्यं शब्दगुण इत्याहुः, यथा —"स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपात-चूर्णिताः" इत्यादि। अत्र पदेषु संहिताभावात पृथक्पदत्वेन माधुर्य्यं, तच्च वामनेनाप्युक्तं—"पृथक्पदत्वं माधुर्य्यम्" (का० सू० वृ० ३अधि० १अ० २१सू०) इति। अर्थगुणमाधुर्य्यन्तु "माधुर्य्यमुक्तमाचार्य्यैः क्रोधादावप्यतीव्रता" इत्युक्तलक्षणं ज्ञेयं, यथा—"भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रतामीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम्। अन्तर्वाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं कोपश्च प्रकटीकृतो दयितया मुक्तश्च नो प्रश्रयः॥" अत्र वामवदत्तालक्षणस्यार्थस्य कोपेऽपि योऽयं विनयावलम्बनेन कोपचिह्ननिह्नवः तन्माधुर्य्यम्। वामनस्तु— "उक्तिवैचित्र्यं माधुर्य्यम्" (का० सू० वृ० ३अधि० २अ० १०

श्रुत्यनुप्रासलक्षणम् ।—

**यया कयाचित् श्रुत्या यत् समानमनुभूयते ।**
**तद्रूपा हि पदासत्तिः सानुप्रासा रसावहा ॥५२॥**

श्रुत्यनुप्रासोदाहरणम् ।—

**एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः ।**
**ततः प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥५३॥**

सू० ) इत्युक्तलक्षणं माधुर्य्यम् अर्थगुण इत्याह, तदुभयमतवैषम्यं परिलक्ष्यते ] ॥ ५१ ॥

श्रुत्यनुप्रासघटितवर्णसंहतेः रसव्यञ्जकतां दर्शयति, ययेति ।—यया कयाचित् कण्ठताल्वादिरूपया इत्यर्थः, श्रुत्या श्रवणसाधनीभूतेन उच्चारणेन, समानं सदृशं, प्रागुच्चरितव्यञ्जन-तुल्यमित्यर्थः, अनुभूयते प्रतीयते, तद्रूपा तादृशानुभव-विषयभूतव्यञ्जनवती, पदासत्तिः पदानाम् आसत्तिः अव्यव-धानेन अवस्थितिः, सानुप्रासा श्रुत्यनुप्रासवती, अत एव रसम् आवहतीति रसावहा, हिरवधारणार्थः, निश्चितमेव रसपोषिकेत्यर्थः । [ अनुप्रासस्य काव्योत्कर्षकरत्वमुक्तञ्च— "यथा ज्योत्स्ना शरच्चन्द्रं यथा लावण्यमङ्गनाम् । अनुप्रासस्तथा काव्यमलङ्कर्त्तुमिह क्षमः ॥" इति, एतेन तालुरदाद्येकस्थानो-च्चार्य्यतया व्यञ्जनवर्णानां सादृश्यं श्रु अनुप्रास इत्यर्थात् आयातम्; उक्तञ्च दर्पणकारेण यथा—"उच्चार्य्यत्वात् यदेकत्र स्थाने तालुरदादिके । सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥" इति । अस्य च अलङ्कारप्रकरणीयत्वेऽपि इह गुणप्रसङ्गात् लक्षणमुक्तं, वक्ष्यते च—"काश्चिन्मार्गविभागार्थमुक्ताः प्राग-प्यलङ्क्रियाः" ( २५० श्लोकः ) इति ] ॥ ५२ ॥

उदाहरणं दर्शयति, एष इति ।—ब्राह्मणाः प्रिया यस्य

इतीदं नादृतं गौड़ैरनुप्रासस्तु तत्प्रियः।
अनुप्रासादपि प्रायो वैदर्भैरिदमिष्यते ॥ ५४ ॥

अनुप्रासलक्षणम्।—

वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च।
पूर्वानुभवसंस्कार-बोधिनी यद्यदूरता ॥ ५५ ॥

अथवा ब्राह्मणानां प्रियः, एष राजा यदा लक्ष्मीं राजश्रियं, प्राप्तवान्, ततः प्रभृति लोके जगति, धर्मस्य उत्सवः अभवत्, असौ धर्मेण प्रजाः पालयामास इत्यर्थः। (इह षकारवकारयोः एकस्मात् मूर्द्धः जकारयकारयोस्तालुनः दकारलकारयोश्च दन्तादुच्चरितत्वेन सादृश्यमित्यतः श्रुत्यनुप्रासः, ततश्च तस्य राजविषयकरतिभावव्यञ्जकतया माधुर्य्यगुणयोगः, पदेषु संहिताऽभावात् पृथक्पदत्वेनास्य शब्दगतत्वञ्च इति विभावनीयम्) ॥ ५३ ॥

अत्र वैदर्भीगौड्योर्मतभेदं दर्शयन्नाह, इतीति।—इतिपदं पूर्वोक्तद्योतकम्; इति पूर्वोक्तम्, इदं पद्यं, गौड़ैः गौडवासिभिः कविभिः, न आदृतं माधुर्य्यगुणवत्तया वैचित्र्यात्मकत्वन्तु न स्वीकृतं, विभिन्नवर्णानामेकस्थानोच्चारितत्वेऽपि रसानुगुण्यस्याननुभवादिति भावः; अनुप्रासस्तु वक्ष्यमाणवर्णावृत्तिरूपः, तत्प्रियः तेषां गौड़ानां, प्रियः रसानुकूल्यतया आदृतः, वैदर्भैस्तु अनुप्रासात् पूर्वोक्तात् श्रुत्यनुप्रासादपि, प्रायः बाहुल्येन, इदम् एष राजेत्यादि पद्यम्, इष्यते आद्रियते। (इत्थञ्च वैदर्भाणां श्रुत्यनुप्रासवर्णावृत्तिरूपानुप्रासयोरुभयोरेव प्रियता, गौड़ानान्तु केवलं वर्णावृत्तिरूपे इति अनयोर्मतभेद इति दिक्) ॥ ५४ ॥

अनुप्रासमाह, वर्णावृत्तिरिति।—वर्णानाम् अक्षराणां,

व्यञ्जनानाम् इत्याशयः, आवृत्तिः पुनरुच्चारणम, आवृत्तिगत-साहृश्यप्रतीतिरित्यर्थः, अनुप्रासः, साहृश्यस्यैव वैचित्र्यजनकत्वे-नालङ्कारत्वाङ्गीकारात् । ( आवृत्तिशब्दोऽत्र तद्गतसाहृश्यार्थकः, एकस्य वर्णस्य पुनरुच्चारणेन कथं साहृश्यम ? तयोरभिन्नत्वा-दित्यपि न चोद्यम, एकस्यापि उच्चारणकालभेदेन भेदात् तयोर्विभिन्नत्वं बोध्यम् ; एतेन वर्णस्य वर्णयोर्वर्णानां वा पुन-रुच्चारणेन साम्यप्रतीतिरनुप्रास इति लक्षणमायातम् ; अत एवोक्तं प्रकाशकारेण—"वर्णसाम्यमनुप्रासः" इति । वर्णाना-मिति एकशेषद्वन्द्ववशात् वर्णस्य वर्णयोरपीति बोध्यम ) स च द्विविधः, पादेषु पदेषु च, पादाः पद्यचतुर्थभागाः तेषु, पदेषु तत्तत्पादस्थसुप्तिङन्तेषु च, पादपदगत इत्यर्थः । [ पादेषु चेति बहुवचनेन सर्वपादेषु अनुप्रासस्थितिर्विशेषेण मनोरमेति सूचितम् ; तल्लक्षणमुक्तं वामनेन—"पादानुप्रासः पादयमक-वत्" (का० सू० वृ० ४ अधि० १ अ० १० सू०) इति, उदाहरणं यथा—"कविराजमविज्ञाय कुतः काव्यक्रियादरः । कवि-राजञ्च विज्ञाय कुतः काव्यक्रियादरः ॥" इति । आवृत्तिश्च स्वरवैषम्येऽपि वैचित्र्यमावहति ; तथा चोक्तं दर्पणकारेण—"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्" इति] आवृत्तिश्च अव्यवहिता मुख्या, व्यवधानेऽपि प्रथमोच्चरितवर्णानां सन्नि-कृष्टत्वेन पूर्वानुभवसंस्कारस्थित्यवधि ग्राह्येति प्रतिपादयितु-माह, पूर्वेति ।—पूर्वमुच्चरितस्य वर्णस्य यः अनुभवः श्रावणज्ञानं, तज्जनितः संस्कारः भावनाविशेषः, तस्य बोधिनी पालनी, अदूरता द्वितीयादिवर्णस्य सान्निध्यं, यदि, वर्त्तते इति शेषः, तदैवानुप्रास इत्यन्वयः ; अयं भावः,—संस्कारस्य प्रथमक्षणे उत्पत्तिः, द्वितीयक्षणे स्थितिः, तृतीयक्षणे निवृत्तिः इति नियमेन अव्यवधानेन किञ्चिद्व्यवधानेन वा वर्णोच्चारणस्य

अनुप्रासोदाहरणम् ।—

चन्द्रे शरन्निशोत्तंसे कुन्दस्तवकसन्निभे ।
इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम् ॥५६

सादृश्यप्रतीतिजननात् सादृश्यस्यैव वैचित्र्यजनकत्वेनालङ्कारत्वात् सादृशवर्णावृत्तिजन्यसादृश्यमनुप्रास इति। (अयञ्च द्विविधः उल्वणः अनुल्वणश्च, उल्वण उत्कटपदविन्यासात्मकः, अनुल्वणः कोमलपदात्मकः; तत्रोल्वणो यथा—"वल्गद्वल्गुजटोद्भटभटा नटत्कोटिकोदण्डदण्डः" इति। नव्यास्तु अस्य पञ्चविधत्वमाहुः छेकानुप्रासः,वृत्त्यनुप्रासः,श्रुत्यनुप्रासः,अन्त्यानुप्रासः,लाटानुप्रासश्चेति; तदुक्तं दर्पणकारेण—"छेको व्यञ्जनसङ्घस्य सकृत् साम्यमनेकधा। अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते॥ उच्चार्य्यत्वात् यदेकत्र स्थाने तालुरदादिके। सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते॥ व्यञ्जनञ्चेद् यथाऽवस्थं सहाद्येन स्वरेण तु। आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥ शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः लाटानुप्रास इत्युक्तोऽनुप्रासः पञ्चधा ततः॥" इति। तत्र लाटानुप्रासोदाहरणं यथा तत्रैव—"स्मेरराजीवनयने! नयने किं निमीलिते?। पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम्॥" इति)॥ ५५॥

उदाहरति, चन्द्रे इति।—शरन्निशायाः शारदीयरजन्याः, उत्तंसे शिरोभूषणरूपे, कुन्दस्तवकसन्निभे माध्यकुसुमगुच्छसदृशे, चन्द्रे इन्द्रनीलनिभं श्यामलम् इत्यर्थः, लक्ष्म कलङ्कः, अलिनः भ्रमरस्य, श्रियं शोभां, सन्दधाति धारयति। (अत्र प्रथमद्वितीयतृतीयेषु पादेषु शकार-ककार-नकार-लकाराणां वर्णानाम् अनतिदूरवर्त्तिनो पुनरावृत्तिरिति साम्यप्रतीतिः

चारु चान्द्रमसं भीरु ! विम्बं पश्यैतदम्बरे।
मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥५७॥
इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम्।
न तु रामामुखाम्भोज-सदृशश्चन्द्रमा इति ॥५८॥

वृत्त्यनुप्रासः, चतुर्थे च दकार-धकार-तकार-नकाराणां दन्तरूपैकस्थानोच्चार्य्यत्वात् वैदर्भप्रियः श्रुत्यनुप्रास इति द्विविधेनानुप्रासालङ्कारेण व्यञ्जितं माधुर्य्यं शृङ्गाररसं पद्यनिष्ठं परिपुष्णाति। अत्र रूपकोपमाभ्यामनुप्राणिता निदर्शना नाम अलङ्कृतिः, ततश्च शब्दार्थोभयनिष्ठं माधुर्य्यमिति सुधीभिर्विभावनीयम् )॥ ५६ ॥

स्वरवैषम्येण अनुप्रासो दर्शितः, इदानीं तत्साहृश्येन दर्शयति, चार्विति।—हे भीरु! भयशीले! मन्मथाक्रान्तं कामार्त्तं, मन्मनः मम मानसं, निर्दयं यथा तथा हन्तुमुद्यतं चारु मनोज्ञम्, एतत् परिदृश्यमानमित्यर्थः, चान्द्रमसं विम्बं चन्द्रमण्डलम्, अम्बरे आकाशे, पश्येत्यन्वयः। ( मानिनीं कामिनीं प्रति कस्यचित् नायकस्य उक्तिरियम्। इह प्रथमे पादे चाकाररुकारयोः स्वरसहितयोः साहृश्यात् वृत्त्यनुप्रासः, द्वितीयतृतीययोश्च यथाक्रमं मकारयोर्मन्ममन्मयोश्च साम्यात् छेकानुप्रासोऽपि, तथा चतुर्थे दकारयोस्तकारयोश्च स्वरवैषम्येण साहृश्यात् अन्यविधो वृत्त्यनुप्रासश्च। माधुर्य्यगुणोऽप्यत्र शब्दार्थोभयनिष्ठत्वेन चमत्कारजननात् विप्रलम्भाख्यं शृङ्गारं परिपुष्णाति )॥ ५७ ॥

अदूरतैवानुप्रासस्य प्रयोजकमित्याह, इतीति।—अतिदूरं समधिकम्, अन्तरं व्यवधानं यस्याः सा अतिदूरान्तरा, न अतिदूरान्तरा नातिदूरान्तरा, तादृशी श्रुतिः श्रवणं यस्य तादृशम्,

स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः ।
च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः ५९

इति प्राक् प्रदर्शितोदाहरणद्वयरूपम्, अनुप्रासम् इच्छन्ति, गौड़ा इति शेषः, रामामुखाम्भोजसदृशः चन्द्रमा इति एवंविधं, तृतीयचतुर्थयोः पादयोः माकारयोः साम्येऽपि अतिदूरान्तरश्रुतिम् इत्यर्थः, अनुप्रासमिति शेषः, न तु, इच्छन्तीति च शेषः, 'रामा' 'चन्द्रमा' इति पदस्थयोर्माकारयोरतिदूरस्थतया पूर्ववर्णसंस्कारोद्बोधाभावादिति भावः ॥ ५८ ॥

अनुप्रासस्य रसावहत्वकीर्त्तनात् यत्र वाक्यस्य सदोषत्वेन रसस्य अपरिपुष्टता तत्र न माधुर्य्यसद्भाव इत्याह, स्मर इति ।— स्मरः कामः, खरः अतितीक्ष्णः, कान्तः प्रियः, खलः निष्ठुरः, नः अस्माकं, कायः शरीरं, कोपश्च, कान्तं प्रतीति शेषः, कृशः क्षीणः नष्टश्च, मानः गौरवं, च्युतः विनष्टः, रागः कान्तप्राप्त्यभिलाषः, अधिकः, मोहः मूर्च्छा, जातः, सर्गे सर्गे इति शेषः, असवः प्राणाः, गताः, प्रायेणेति शेषः । ( इदं नायकं निराकृतवत्याः गलितमानायाः कस्याश्चित् कामिन्याः पश्चात्तापवचनम् । अत्र प्रथमे पादे रेफयोः खकारयोश्च द्वितीये ककाराणां साम्यात् वृत्त्यनुप्रासस्य, तथा उत्तरार्द्धे तकारादिदन्त्यवर्णानां साम्यात् श्रुत्यनुप्रासस्य दोषाकुलतया तादृशविप्रलम्भशृङ्गारस्य न अतिपरिपोषकता इति न माधुर्य्यं, प्रत्युत ओजोविपर्य्ययाख्यदोषत्वेनेदमुदाहृतं कण्ठाभरणे, यदुक्तं पद्यमिदमुदाहृत्य—"अत्र सत्यसमस्तपदाभिधाने सत्यपि च अर्थस्य सौकुमार्य्ये श्लेषादिगुणसामग्र्याभावान्न वैदर्भीरीतिः, नापि यथोक्तलक्षणाभावात् गौड़ीयादयः इति खण्डितरीतित्वादयम् ओजोविपर्य्ययः शब्दार्थप्रधानो गुणविपर्य्ययो दोषो भवति ।"

इत्यादि बन्धपारुष्यं शैथिल्यञ्च नियच्छति।
अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ६० ॥

यमकलक्षणम्।—

आवृत्तिं वर्णसङ्घात-गोचरां यमकं विदुः।
तत्तु नैकान्तमधुरमतः पश्चात् विधास्यते ॥६१॥

तत्रैव ओजोविपर्य्ययस्य लक्षणमुक्तं, यथा—"वाक्ये यः खण्डयन् रीतिं भवत्योजोविपर्य्ययः। असमस्तमिति प्राहुर्दोषं तमिह तद्विदः॥" इति )॥ ५८ ॥

पूर्वोक्ते पद्ये दोषमाह, इत्यादीति।—इत्यादि एवमादिकं सानुप्रासमपि पद्यं, बन्धपारुष्यं बन्धे रचनायां, पारुष्यं दुःश्रवत्वं, शैथिल्यं पतत्प्रकर्षतादिकञ्च, नियच्छति प्राप्नोति। (अत्र पूर्वार्द्ध बहुविसर्गसत्तया पारुष्यम्; तदुक्तम्—"अनुस्वारविसर्गौ तु पारुष्याय निरन्तरौ" इति। पूर्वार्द्धे यादृशी तीव्ररचना उत्तरार्द्धे तथा नेति पतत्प्रकर्षता ) अतः कारणात्, एवं सदोषमित्यर्थः, अनुप्रासं दाक्षिणात्याः विदर्भदेशीयाः पण्डिताः, न प्रयुञ्जते न व्यवहरन्ति, माधुर्य्यस्य असद्भावादिति भावः। ( दाक्षिणात्या इत्युपलक्षणं, तेन गौड़ीया अपि दोषबहुलं सानुप्रासमित्यादिकमुदाहरणं नेच्छन्ति। यत्र तु पारुष्यादिके रसानुकूलतया माधुर्य्यमस्ति, तत्र पारुष्यादिकं न दोषः, प्रत्युत गुण एव; तथा चोक्तं—"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते। रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥" इति )॥ ६० ॥

ननु रसवतो माधुर्य्यगुणत्वात् वर्णावृत्तेश्च रसावहत्वात् अलङ्कृतौ यथा अनुप्रासलक्षणं निरूपितं,तथा वर्णावृत्तिरूपं यमकमपि कथमत्र न निरूप्यते इत्याह, आवृत्तिमिति।—वर्णसङ्घातः

स्वरव्यञ्जनात्मकवर्णसमूह एव, गोचरः विषयो यस्याः तथोक्ताम्, आवृत्तिं पूर्वक्रमेण पुनरुच्चारणं, यमकं विदुः जानन्ति, कवय इति शेषः। ( अत्र वर्णसङ्घातपदस्य स्वरव्यञ्जनसमुदायपरत्वं ज्ञेयम्, अन्यथा अनुप्रासलक्षणेन सङ्कैक्यम् आपतितं स्यात्, तथा भिन्नार्थकेति तद्विशेषणं देयम्, अन्यथा 'यामि यामि' इत्यादौ एकार्थस्यापि यमकत्वं प्रसज्येत, निरर्थकयोरपि यमकत्वाङ्गीकारात्, अर्थसम्भवे सति भिन्नार्थत्वं बोध्यम्। आवृत्तिश्चात्र पूर्वक्रमानुसारिणी, तेन च 'दमो मोद' इत्यादेर्भिन्नविषयत्वं सूचितम्; एतेन अर्थसम्भवे सति भिन्नार्थकस्वरव्यञ्जनात्मकवर्णसङ्घातस्य पूर्वक्रमवत्यावृत्तिर्यमकमिति लक्षणम्; तदुक्तं दर्पणकारेण, यथा—"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः। क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते॥" इति। अत्र द्वयोरपि पदयोः क्वचित् सार्थकत्वं, क्वचित् निरर्थकत्वं, क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वम्; अत उक्तं—"सत्यर्थे" इति; उदाहृतञ्च तत्रैव —"नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्। मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः॥" इति। अन्यैरप्युक्तं यथा—"तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम्। वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते॥" इति ) तत्तु सयमकं पद्यं, न एकान्तमधुरं न अतिशयेन माधुर्यवत्, तथा हि तथाविधे वाक्ये प्रथमम् अर्थानुसन्धानव्यग्रतया रसप्रतीतेर्व्यवहितत्वात् इति, अनुप्रासे तु अर्थानुसन्धानव्यग्रताया अभावात् रसप्रतीतेः अव्यवहितत्वमिति सानुप्रासे वाक्ये माधुर्यमस्तीति च भावः। ( एकान्तेति पदेन यमकेऽपि रसावहं माधुर्यमस्त्येव, परम् अनुप्रासवत् सम्यक् न इति वक्तव्यम्, अन्यथा अस्य अनलङ्कारत्वापत्तिरापद्येत, शब्दार्थशोभाजननेन

ग्राम्यताया माधुर्य्यप्रतिबन्धकत्वम्।—

**कामं सर्व्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति।**
**तथाऽप्यग्राम्यतैवैनं भारं वहति भूयसा॥ ६२॥**

काव्यात्मभूतरसोपकारित्वस्य एव अलङ्कारत्वात् इति ध्येयम्) अतः पश्चात् अलङ्कारप्रस्तावे इत्यर्थः, विधास्यते वक्ष्यते, यमकमिति शेषः॥ ६१॥

माधुर्य्यस्य शब्दगतत्वं लक्षयित्वा तस्य अर्थगतत्वं दर्शयन्नाह, काममिति।—सर्व्वोऽपि शब्दगतः अर्थगतः उभयगतश्च, अलङ्कारः अनुप्रासशब्दश्लेषपुनरुक्तवदाभासोपमादिः, अर्थे वाच्यलक्ष्यव्यङ्ग्य-रूपे प्रतिपाद्ये, कामं यथेष्टं यथा तथा, रसं निषिञ्चति पुष्णाति उद्बोधयतीत्यर्थः। [ "वस्तुन्यपि रसस्थितिः" ( १८० ५१ श्लो॰ ) इत्यनेनैव सूचितमर्थगतमाधुर्य्यमत्र दर्शितम्; एतेन सालङ्कार-रसवदर्थः अर्थगतमाधुर्य्यमिति लक्षणमायातम्] ग्राम्यता-दोषस्य विशेषेणार्थगतमाधुर्य्यप्रतिबन्धकतां दर्शयितुमाह, तथा-ऽपीति।—तथाऽपि अग्राम्यता ग्राम्यः इतरजनव्यवहृतः शब्दो ऽर्थश्च स न भवतीति अग्राम्यः तस्य भावः, भूयसा बाहुल्येन एनं भारं रसनिषेकरूपं, वहति। (तथा च सालङ्कारस्य रसव्यञ्जकस्य एव अर्थस्य माधुर्य्यमिति प्रतिपादितम्। अत्र अग्राम्यताशब्दः अनश्लीलादीनामुपलक्षकः, ततश्च अन्य-दोषाणामपि माधुर्य्यस्य प्रतिबन्धकत्वेऽपि ग्राम्यदोषस्य विशेष-प्रतिबन्धकत्वसूचनार्थं ग्राम्यपदोपादानम्। एवञ्चान्यैरुक्तस्य माधुर्य्यविपर्य्ययस्यापि दोषस्यात्र ग्रहणम्; तच्चोक्तं यथा— "माधुर्य्यव्यत्ययो यस्तु जायते रीतिखण्डनात्। तदनिर्व्यूढमित्युक्तं काव्यसर्वस्ववेदिभिः॥" यथा—"नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्। विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च॥"

ग्राम्यतादोषः ।—

कन्ये ! कामयमानं मां न त्वं कामयसे कथम् ?।
इति ग्राम्योऽयमर्थात्मा वैरस्याय प्रकल्पते ॥६३॥

अत्र नखिनाञ्च नदीनाञ्चेति षष्ठ्यन्ताच्चकारेण रीतिरुपक्रमे शृङ्गिणां शस्त्रपाणिनामिति चकारानिर्वाहात् स्त्रीषु राजकुलेषु चेति षष्ठीपरित्यागात् असधुरार्थत्वाच्च माधुर्य्यविपर्य्ययनामायं शब्दार्थप्रधानो गुणविपर्य्ययो दोषः इति, ततश्चात्रापि न माधुर्य्य-गुणसद्भावः। भूयसा इति ग्रहणात् इतरजनकथनेषु ग्राम्यता न दोषः, प्रत्युत गुण एव ; तदुक्तं—"ग्राम्यत्वमधमोक्तिषु" गुण इति शेषः इति ) ॥ ६२ ॥

अर्थगतायाः ग्राम्यताया उदाहरणं दर्शयति, कन्ये इति ।— ( विदग्धजनोक्तिरियम् । "विरहे ते विषोदन्तं निषोदन्तवान्तिके" इत्यस्य पूर्वार्द्धम् ) हे कन्ये ! त्वं ते तव विरहे विषोदन्तं तवान्तिके निषोदन्तं कामयमानं मां कथं न कामयसे ? इत्यत्र कन्ये ! इति सम्बोधनं दुहितृ-स्थानीयानामेव सम्भवति, नायिकासम्बोधने तु "प्रिये" "सुन्दरि" इत्यादि प्रयोग एव साधुः। (अन्ये तु उक्तः ग्राम्यतया कान्तिहीनमित्यर्थप्रधानोऽयं कान्तिविपर्य्ययाख्यः दोष इत्याहुः; तदुक्तं—"कान्तेर्विपर्य्ययाद्वाक्यं ग्राम्यमित्यपदिश्यते" इति ; तस्मादत्र अर्थस्य ग्राम्यता, न तु कन्याशब्दस्य, शब्दस्य ग्राम्यत्वे हि विदग्धजना न तद्व्यवहरन्ति, कन्याशब्दस्तु तेषामपि प्रयोगे दृश्यते, यथा—"कन्येयं कलधौतकोमलरुचिः कीर्त्तिस्तु नातः परा" इत्यादि। प्राचीनैस्तु ग्राम्यजनमात्र-व्यवहृतानां कन्यादिशब्दानामेव ग्राम्यत्वमुक्तम्। किञ्च, कामयमानमित्यादौ च कामिनां सुरतेच्छारूपः कामः

अग्राम्यार्थप्रदर्शनम्।—

कामं कन्दर्पचाण्डालो मयि वामाक्षि ! निर्दयः।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥६४॥

शब्देनाप्रतिपाद्यमानः कथञ्चित् सूच्यमानः एव शोभां जनयति, अगूढ़स्तु शब्देन स्पष्टतयोक्तः सहृदयानां लज्जाजनकत्वेन वैरस्यमावहतीति स्पष्टशब्दार्थाभिधीयमानकामत्वात् 'कामयमानम्' इत्यत्रापि अर्थगतः ग्राम्यतादोषः। अत्र च नायककामरूपकारणे सत्यपि नायिकाकामरूपस्य कार्य्यस्याभावात् विशेषोक्तिरलङ्कारः; तदुक्तं दर्पणकारेण—"सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा" इति। एवमलङ्कारयुक्तः अनुप्रासवानपि शब्दार्थः ग्राम्यत्वेन वैरस्यमेव प्रतिपादयति इति न माधुर्य्यसद्भावः) तच्च विवृणोति, इतीति।—इति उक्तरूपः, अयं ग्राम्यः तदाख्यदोषयुक्तः, अर्थात्मा प्रतिपाद्यस्वरूपं, वैरस्याय रसोद्बोधव्याघाताय, प्रकल्पते प्रभवति ॥ ६३ ॥

अग्राम्यतां दर्शयति काममिति।—हे वामाक्षि ! वामे सुन्दरे कुटिले वा, अक्षिणी यस्याः तत्सम्बुद्धौ, कन्दर्पचाण्डालः मयि कामं निर्दयः, दिष्ट्या भाग्येन, त्वयि निर्मत्सरः सदय इत्यर्थः, इति पूर्वश्लोकार्थः एव गूढ़तया उक्तरूप इत्यर्थः, अर्थः अहं त्वां कामये त्वन्तु मां न कामयसे इत्येवंरूपः, अग्राम्यः ग्राम्यदोषरहितः, भङ्ग्या सूच्यमानस्य वैचित्र्यजनकत्वेन रसोद्बोधकत्वादिति भावः, अत एव रसम् आवहति पुष्णातीति रसावहः रसोपकारकत्वेन माधुर्य्यगुणयुक्त इत्यर्थः। अयं भावः,—वामाक्षीति सम्बोधनपदं नायिकायाः सौन्दर्य्यं नायकस्य च तां प्रति चाटूक्तिं व्यञ्जयति, कन्दर्पो मयि निर्दयः त्वयि तु निर्मत्सर इत्यनेन कामयमानं मां त्वन्तु न

शब्दगतग्राम्यतानिरूपणम् ।—

शब्देऽपि ग्राम्यताऽस्त्येव सा सभ्येतरकीर्त्तनात् ।
यथा यकारादिपदं रत्युत्सवनिरूपणे ॥ ६५ ॥

अश्लीलत्वस्यापि ग्राम्यत्वम् ।—

पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः ।
दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥६६॥

---

कामयसे इति पूर्वोक्तपदार्थ एव भङ्ग्या सूचित इति अग्राम्यता सहृदयहृदयङ्गमतया रसं व्यञ्जयन्ती माधुर्य्यगुणम् आवहति इति ॥ ६४ ॥

ग्राम्यतायाः शब्दगतत्वमपि दर्शयति, शब्देऽपीति ।—शब्देऽपि ग्राम्यता अस्ति एव, सा शाब्दग्राम्यता, सभ्यं साधु, तदितरत् असभ्यं, ग्रामीणहालिकादिप्रयोज्यं वचनमिति यावत्, तस्य कीर्त्तनात् कथनात्, विदग्धजनैः इति भावः, भवतीति शेषः; यथा रत्युत्सवस्य निरूपणे यकारादिपदं यकार आदिर्यस्य तत् पदं, "यभ मैथुने" इत्यस्मात् निष्पन्नं पदं यभनादिकमित्यर्थः, तादृशपदप्रयोक्तुः ग्राम्यतया उपहसनीयत्वं श्रोतुश्च लज्जितत्वमेव जायते, सुतरां रसास्वादस्य तिरोहितत्वात् न अत्र माधुर्य्यगुणप्रसर इति भावः ॥ ६५ ॥

अपरैः दोषत्वेन उक्ताया अश्लीलतायाः स्वमते ग्राम्यतायाममन्तर्भावयन्नाह, पदेति ।—पदानां सन्धानं सम्प्रवेशो यस्मिन् तत् पदसन्धानं वाक्यमित्यर्थः, ("वाक्यसङ्घात" इति पाठे—स एवार्थः) तद्वृत्त्या वा तद्गतत्वेन वा, पुनः अथवा, वाक्यार्थत्वेन वा तदर्थगतत्वेन वा इत्यर्थः, दुर्दुष्टा, प्रतीतिः दुष्प्रतीतिः, तत्करं लज्जाजुगुप्साऽमङ्गलादिव्यञ्जकं वाक्यं वा वाक्यार्थं वा [illegible]

अर्थगतग्राम्यत्वम् ।—

**खरं प्रहृत्य विश्रान्तः पुरुषो वीर्य्यवानिति ।**
**एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥ ६७ ॥**

जनकत्वरूपम् अश्लीलत्वमित्यर्थः, ग्राम्यं ग्राम्यतायामन्तर्भूतं, तदपि माधुर्य्यव्याघातकमिति भावः । तत्र वाक्यगतमुदाहरति, यथेति ।—भवतः तव, या प्रिया प्रणयिनी इति प्रकृतार्थः, ततश्च या भवत इत्यंशे याभः मैथुनं, ( "यभ मैथुने" इत्यस्मात् घञि निष्पन्नः ) स विद्यते अस्येति याभवान् तस्येति प्रतीतौ व्रीड़ाव्यञ्जकत्वात् वाक्यमिदमश्लीलत्वदोषदूषितम्, अतोऽत्र न माधुर्य्यसङ्गतिरिति भावः ॥ ६६ ॥

वाक्यगतामश्लीलतामुक्त्वा तदर्थगतां निर्दिशति, खरमिति ।—कश्चित् वीर्य्यवान् पराक्रमशाली, पुरुषः खरम् अतितीक्ष्णं यथा तथा, प्रहृत्य, शत्रूनिति शेषः, विश्रान्त इति प्रकरणसङ्गतोऽर्थः, परं वीर्य्यवान् शुक्रलः, कश्चित् पुरुषः खरं गाढं यथा तथा, प्रहृत्य मैथुनं कृत्वा, विश्रान्तः, ( इत्यपि असभ्यार्थो वक्त्रादिवैलक्षण्येन प्रतीयते, तेन च व्रीड़ाव्यञ्जकतया अर्थगताश्लीलत्वरूपग्राम्यत्वम् ; न च अत्र वाक्यगतमश्लीलत्वमिति मन्तव्यं, यत्र तु शाब्द्या व्यञ्जनया द्वितीयार्थस्य बोधस्तत्र एव वाक्यगतत्वं, यत्रार्थ्या व्यञ्जनया वक्त्रादिवैशिष्ट्यादपरोऽर्थः प्रतीयते तत्रार्थगतत्वम् ; तथा हि अनेकार्थसङ्केतितानां पदानामेकार्थे प्रकरणादिना नियमनात् शाब्द्या व्यञ्जनयैवापरोऽर्थः प्रतीयते ; तथा चोक्तं दर्पणकारेण यथा—"अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते । एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ॥" इति । अत्र तु 'खरम्' इत्यादिवाक्यस्थपदानाम् एकार्थमात्रप्रतिपादकानां [illegible]

ग्राम्यताया अदुष्टत्वम् ।—

भगिनीभगवत्यादि सर्वत्रैवानुमन्यते ।
विभक्तमिति माधुर्य्यमुच्यते सुकुमारता ॥६८॥

वक्त्रादिवैशिष्ट्येनार्थ्यां व्यञ्जनयैवासभ्यरूपद्दितोयार्थस्य प्रती रित्यर्थगतत्वमेव ; किञ्च, दोषगुणालङ्कारादीनां शब्दार्थगः व्यवस्थायां शब्दपरिवृत्तिसहत्वासहत्वाभ्यां व्यवस्थि अत्र तु वलशुक्रोभयार्थवाचकस्यापि वलस्य शुक्रजत्वेनै स्योकारादेकार्थस्य वीर्य्यशब्दस्य परिवृत्तावपि असभ्यरू प्रत्ययनादश्लीलत्वाखण्डनमित्यर्थगतत्वमेव ; यत्र तु परिवर्त्तने दोषस्यापि खण्डनं, तत्रैव शब्दगतत्वमिति ध्ये एवमादि प्रोक्तग्राम्यतादिदोषाकलितं, काव्यमिति (आदिपदेन दोषान्तरवतां ग्रहणम्) उभयोरपि गौड़वैद मार्गयोः न शंसन्ति न आद्रियन्ते, विद्वांस इति शेषः । ( गौड़वैदर्भयोः वैपरीत्यमेव दृश्यते, तत्कथमत्र साम्यमित्या वाच्यम्, "एषां विपर्य्ययः प्रायो दृश्यते गौड़वर्त्मनि" प्राय इत्यनेन कुत्रचित् साम्यमिति स्वयमेवोक्तत्वात् ) ॥ ६

ग्राम्यतायाः प्रतिप्रसवमाह, भगिनीति ।—भगिनी भग आदिर्यस्य तत् पदम्, आदिपदग्राह्यं योनिलिङ्गादिकञ्च, काव्येषु व्यवहारेषु च, अनुमन्यते अदुष्टतया लोकैः अङ्गीकि तत्तच्छब्दप्रयोगे दोषानुसन्धानविरहेण साधारणानां वैर दयात् इति भावः । ( उक्तञ्च—"ग्राम्यं घृणावदश्लीलामङ्ग यदीरितम् । तत् संवीतेषु गुह्येषु लक्षितेषु न दुष्यति ॥" तत्र संवीतं यथा—"तस्मै हिमाद्रेः प्रयतां तनूजां यत योजयितुं यतस्व । योषित्सु तद्वीर्य्यनिषेकभूमिः सैव क्षमेत

सौकुमार्य्यलक्षणम्।—

**अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते।**
**बन्धशैथिल्यदोषस्तु दर्शितः सर्व्वकोमले॥ ६८॥**

---

संवीतत्वात् गुणत्वम् इति। संवीतत्वं हि अनादिप्रयोगत्वेन सर्व्वजनव्यवहृतत्वम्; तच्चोक्तं यथा—"संवीतस्य हि लोकेऽस्मिन्न दोषान्वेषणं क्षमम्। शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावनम्?"॥ इति। गुप्तेषु असभ्यार्थे अप्रसिद्धेषु; यथा—"सुदृस्त्यजा यद्यपि जन्मभूमिर्गजैरसम्बाधमयाम्बभूवे। स तेऽनुमेयः सुभगोऽभिमानी भगिन्ययं नः प्रथमाभिसन्धिः॥" अत्र जन्मभूमि-सम्बाधभगिनीशब्दानाम् अश्लीलार्थान्तरत्वेऽपि प्रथमार्थप्रभाव-भावनागुप्तत्वात् गुणत्वम्। तच्चोक्तं—"वस्तुमाहात्म्यगुप्तस्य पदार्थस्य विभावनात्। भगिनीभगवत्यादि नासभ्यत्वेन भाव्यते॥" इति। लक्षितेषु लक्षणया असभ्यार्थप्रतिपादकेषु; यथा—"ब्रह्माण्डकारणं योऽप्सु निदधे वीजमात्मनः। उपस्थानं करोम्येष तस्मै शेषाहिशायिने॥" अत्र ब्रह्माण्डोपस्थान-शब्दयोः असभ्यार्थस्मृतिहेतुत्वेऽपि अन्यत्र लक्षितत्वात् गुणत्वम्। तथा सुरतप्रसङ्गसभायां शान्तबीभत्सरसादौ व्यङ्ग्ये च अश्लीलत्वस्य गुणत्वमन्यैरङ्गीकृतम्) इति उक्तप्रकारेण, माधुर्य्यं विभक्तं विभज्य दर्शितम्। अधुना सुकुमारता क्रमप्राप्तस्तदाख्य-गुणः, उच्यते॥ ६८॥

अनिष्ठुरेति।—अनिष्ठुराणि अपरुषाणि, अक्षराणि प्रायो बाहुल्येन यत्र तादृशं, पद्यमिति शेषः, सुकुमारं सौकुमार्य्यगुण-युक्तमित्यर्थः, 'प्रायः'पदेन अन्तराऽन्तरा परुषाक्षराण्यपि निवेशनीयानीति सूचितम्। (अत एवोक्तञ्च—"बन्धस्याजरठ-त्वञ्च सौकुमार्य्यमुदाहृतम्" इति) तु-शब्दोऽत्र हेतुवाचकः;

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥७०॥

---

यतः सर्वकोमले केवलसुकुमाराक्षरप्रयोगे, बन्धस्य रचनायाः, शैथिल्यदोषः श्लथत्वरूपदोषः, अगाढ़ता इति यावत्, दर्शितः "मालतीमालालोलालिकलिला यथा" इत्यत्राभिहितः, मयैव इति शेषः। [तथा च कोमलाक्षराणां बहूनां मध्ये परुषाक्षरविन्यासेन बन्धस्य गाढ़तया यत् सहृदयहृद्यत्वं तदेव सौकुमार्य्यपदवाच्यं, अल्पप्राणमहाप्राणाक्षरघटितबन्धाः, शैथिल्ये तु श्लेष इत्यनयोर्भेदः। इदञ्च सौकुमार्य्यं शब्दगुणः, अर्थगुणस्तु—अर्थस्याश्लीलत्वाभावरूपत्वेनापारुष्यम्; तदुक्तं वामनेन—"अपारुष्यं सौकुमार्य्यम्" (का० सू० वृ० ३अधि० २अ० ११सू०) इति। सामग्रीसम्भवेऽपि चित्तद्रुतिमनासादयन् नीरसः पारुष्यमभिधीयते, अतथाभूतस्तु झटिति तन्मयीभवनयोग्यान्तःकरणः सुकुमारः, तदिदमपारुष्यमिति तदर्थः। यथा—"सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी सीता जवात्त्रिचतुराणि पदानि गत्वा। गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम्॥" इति, अत्र सीतायाः पुरीपरिसरेऽपि कियदस्ति गन्तव्यमिति वचनं शृण्वतो रामस्य शिरीषमृदुतदङ्गावलोकनेन अश्रुणः पातात् तदश्रुनिमित्तभूता चित्तद्रुतिरेव सौकुमार्य्यमिति सुधीभिर्विभाव्यम्॥ ६९॥

अस्य उदाहरणमाह, मण्डलीति।—कलापिनः मयूराः, जीमूतमालिनि काले वर्षासु, बर्हाणि पुच्छानि, मण्डलीकृत्य मण्डलाकारेण विस्तार्य्य, मधुरगीतिभिः मधुरगीतिसदृशस्वनैः इत्यर्थः, कण्ठैः उपलक्षिताः [illegible] ( [illegible] )

इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः।
सुकुमारतयैवैतदारोहति सतां मनः॥ ७१॥

प्रनृत्यन्ति। (अत्र मकारककारादीनां कोमलाक्षराणां मध्ये प्रथमपादे 'मण्ड' इति 'क्रत्य' इति 'बर्ह' इति संयोगत्रयाणां, द्वितीये 'रुहै' इति 'र्म' इति संयोगद्वयस्य, तृतीये पादे च 'नः' इति 'प्रनृत्यन्ति' इति च विसर्ग-संयुक्ताक्षरयोः, चतुर्थे दीर्घस्वराणामन्तराऽन्तरा सन्निवेशात् परुषत्वं, ततः अनिष्ठुरप्राया रचनेयं सौकुमार्य्यमाश्रयति। अत्र च कलापिषु नर्त्तकव्यवहारसमारोपात् समासोक्तिरलङ्कारः, तदुक्तं दर्पण-कारेण—"समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति)॥ ७०॥

उक्तरूपसौकुमार्य्यस्य गुणत्वमनङ्गीकुर्वतो नव्यान् प्रत्याह, इतीति।—इति उक्तविधः, अर्थः मण्डलीकृत्येतिपद्यप्रतिपाद्यः कलापिनृत्यरूपः इत्यर्थः, न ऊर्जितः न तेजस्वल एव, न अति-मनोरम इत्यर्थः, अलङ्कारश्च समासोक्त्यनुप्राणितः स्वभावोक्ति-रूपः, तादृशः वैचित्र्यजनकः न, तथाऽपि एतत् पद्यं, सुकुमार-तया तादृशसौकुमार्य्यगुणयुक्ताक्षरविन्यासेन, सतां सामाजि-कानां, न तु साधारणानामिति भावः, मनः आरोहति आश्रयति, मोहयति इति यावत्। अयं भावः,—अर्थालङ्कारौ यथा पर्य्या-लोचनया प्रतीयेते गुणास्तु न तथा, यतः अर्थस्य अलङ्कारस्य च बोधनात् पूर्वमेव गुणकृतवैशिष्ट्यं प्रतीयते, गुणस्य विन्यास-विशेषरूपत्वात्। (अत एवोक्तं—"तया कवितया किं वा तया वनितया तथा। पदविन्यासमात्रेण यया न ह्रियते मनः?"॥ इति। एतेन असति गुणवैचित्र्ये अर्थालङ्कार-वैचित्र्यं सदपि काव्यं न तथा शोभयति; अत एवोक्तं भोज-

दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते ।
न्यक्षेण क्षयितः पक्षः क्षत्रियाणां क्षणादिति ॥७२॥

राजेन—"अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितम् ।" अन्यच्च—"यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः । अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥" एतेन गुणानामात्मनिष्ठत्वम् अलङ्काराणां शब्दार्थनिष्ठत्वमुक्तं भवति ; उक्तञ्च—"प्राणाः दश गुणाः" इति । वामनादिभिः रीतेरात्मत्वं गुणानाम् आत्मभूतरीतिनिष्ठत्वम् अलङ्काराणां तच्छरीरभूतशब्दार्थनिष्ठत्वञ्चोक्तम् । ध्वनिकारेणापि ध्वनेरात्मत्वं गुणानाञ्च तन्निष्ठत्वं प्रतिपाद्यशब्दार्थयुगलस्य शरीरत्वमलङ्काराणाञ्च तन्निष्ठत्वमेवाङ्गीकृतम् । एवञ्च गुणत्वात् श्लेषादीनामात्मनि समवायसम्बन्धेन स्थितिः ; अलङ्कारत्वात् यमकोपमादीनां शरीरे संयोगवृत्त्या स्थितिरिति ग्रन्थकारस्याभिमतमिति मन्यामहे । न ह्यविपश्चिदपि कश्चिदभिवदेदभिजानीयाद्वा गुणानामात्मनि रीताविव अलङ्काराणां शरीरभूते शब्दार्थयुगले समवायवृत्त्या स्थितिरिति ध्येयम् ) ॥ ७१ ॥

गौड़वैदर्भयोः सौकुमार्य्ये मतभेदं दर्शयितुमाह, दीप्तमिति । —अपरैः गौड़ीयकविभिः, दीप्तिरौज्ज्वल्यम्, उत्साहोद्बोधेन चित्तविस्फारत्वमित्यर्थः, तद्युक्तं दीप्तं वीररौद्रबीभत्सरसात्मकतया समुत्तेजनमित्यर्थः, इति अस्मात् कारणात्, ओजस्वित्वादित्यर्थः भूम्ना बाहुल्येन, कृच्छ्रोद्यमपि ओजोव्यञ्जकतया परुषवर्णात्मकत्वात् कष्टेनोच्चार्य्यमपि, सौकुमार्य्यरहितमपि इति भावः बध्यते ग्रथ्यते, विरच्यते इति यावत् ; गौड़ीया हि वीररसादिरूपतेजस्विव्यङ्ग्ये तद्व्यञ्जकपरुषाक्षरविन्यासस्यैवौचित्यात् तः सौकुमार्य्यं न अङ्गीकुर्वते इति भावः । यथा न्यक्षेण नेवशेषे-

अर्थव्यक्तिलक्षणम् ।—

**अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।**
**भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ॥७३॥**

अन्धेनेत्यर्थः, धृतराष्ट्रेणेति शेषः, क्षणात् अल्पेनैव कालेन, क्षत्रियाणां पक्षः समूहः, समग्रक्षत्रियकुलमित्यर्थः, क्षयितः नाशितः, कुरुक्षेत्रयुद्धे इति शेषः। केचित्तु क्षण्वन्ति नीचकर्म कुर्वन्ति इति क्षणः कार्त्तवीर्य्याः, तान् स्यति विनाशयति इति क्षणः परशुरामः इति क्षणपदस्य कष्टार्थं सुष्ठु मन्यन्ते, धृत-राष्ट्रस्य क्षत्रियक्षये वीररसस्यासङ्गतेः। ( अत्र वीररसवर्णनायां तादृशश्रुतिकटुपरुषवर्णप्रयोग एव चमत्कारमातनोतीति सौकुमार्य्यत्यागो गुण एवेति मन्यन्ते गौड़ीयाः। वैदर्भास्तु ईदृशेऽपि वीरबीभत्सरौद्ररसादिमत्प्रबन्धे सौकुमार्य्यमाद्रियन्ते इत्यनयोर्भेदोऽत्र मन्तव्यः; यथा—"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिः निर्मर्य्यादैर्भवद्भिरुदायुधैः। नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनामयमहमसृङ्मांसैः करोमि दिशां बलिम्॥" इति। अत्र रौद्रेऽपि रसे न अति-परुषाक्षराणि विन्यस्तानि, अतो वैदर्भाः सौकुमार्य्यगुणम् अपेक्षन्ते। एतन्मते क्षणेण इत्यादौ सौकुमार्य्यत्यागात् दोष एव; यदुक्तं भोजराजेन दोषप्रसङ्गे—"सौकुमार्य्यविपर्य्यासात् कठोर उपजायते" इति )॥ ७२॥

अर्थव्यक्तिं नाम गुणं सोदाहरणमाह, अर्थव्यक्तिरिति।— अर्थस्य अनेयत्वम् अध्याहारादिकष्टकल्पनामन्तरेण प्रयुक्त-पदेभ्य एवोपस्थितिरित्यर्थः, अर्थव्यक्तिः। [ उक्तञ्च क्रमदीश्वरेण— "यावद्वाच्याभिधानं यत्तदर्थव्यक्तिलक्षणम्" इति। तथा भोजे-नाप्युक्तं—"यत्र सम्पूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम्" इति।

इत्थञ्च यत्र यादृशो यावांश्च विशेषणविशेष्यप्रकारोऽभिमतः स सर्व एव उपात्तशब्दसमुदायमात्रेण निष्प्रत्यूहमवगम्यते तत्रार्थव्यक्तिरिति निष्कर्षः; यथा—"वागर्थाविव सम्पृक्तौ" अत्र 'वन्दे' इत्युत्तमपुरुषैकवचनेनैवाहमिति प्राप्तम्, "अस्मद्युत्तमः" ( १।४।१०७ पा० ) इत्यत्र "स्थानिनि" इत्यभिधानात्; किम्? इति कर्मापेक्षायां 'पार्वतीपरमेश्वरौ' इति, तौ च कीदृशौ? 'जगतः पितरौ' इति, किमर्थं नमस्कुरुते? 'वागर्थप्रतिपत्तये' इति वाक्यस्य सम्पूर्णत्वेनार्थव्यक्तिरिति। इयञ्च शब्दमात्रगा, अर्थगायास्तु स्वभावोक्त्यलङ्कारेण परिगृहीतत्वात् न पृथगुक्तिरिति नव्याः। प्राञ्चस्तु आर्थीमप्यर्थव्यक्तिमङ्गीकुर्वन्ति; तदुक्तं दर्पणकारेण—"अर्थव्यक्तिः स्वभावोक्त्याऽलङ्कारेण तथा पुनः" इति। वामनस्तु वस्तुस्वभावस्फुटीकरणमार्थीमर्थव्यक्तिमाह, यथा—"वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः" (का० सू० वृ० ३ अधि० २ अ० १३ सू० ) इति। तथा भोजेनापि उक्तम्—"अर्थव्यक्तिः स्वरूपस्य साक्षात् कथनमुच्यते" इति; स्वरूपस्य कविप्रतिभैकगोचरचमत्कारिरूपस्य, यत् साक्षात् कथनं कविशक्तिवशात् साक्षात्कारसोदरप्रतीतिजनकपदवत्त्वमर्थव्यक्तिरिति तदर्थः। तत्रोदाहरणं यथा—"पृष्ठेषु शङ्खशकलच्छविषु च्छदानां रेखाभिरङ्कितमलक्तकलोहिताभिः। गोरोचनाहरितबभ्रु बहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य॥" इति, अत्र कुमुदस्वरूपस्य साक्षादिव प्रतीयमानत्वेन यत् स्पष्टरूपाभिधानम् असौ अर्थगता अर्थव्यक्तिरिति। अपरे तु, पदानां झटित्यर्थबोधकत्वं शाब्दीमर्थव्यक्तिमाहुः; यदुक्तम्—अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम्" इति। अन्यच्च—"पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः। यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुणः॥" इति। यथा हरिणा वराहरूपिणा

**मह्यी महावराहेण लोहितादुद्धृतोदधेः ।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ॥७४॥**
**नेदृशं बहु मन्यन्ते मार्गयोरुभयोरपि ।**
**न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥७५॥**

विष्णुना, खुरैः स्वीयैः इति भावः, क्षुण्णानां नागानां पन्नगानां, रसातलवासिनाम्, असृग्भिः शोणितैः, लोहितात् रक्तात्, उदधेः समुद्रात्, भूः पृथ्वी, उद्धृता ऊर्द्धं नीता। अत्र यावन्त एव शब्दास्तावन्तामेव अर्थाः विना कष्टकल्पनां प्रतीयन्ते इति॥७३॥

अनेयत्वमर्थव्यक्तिरित्यभिधानेन नेयत्वज्ञानस्यापेक्षणात् तत् कीदृगित्यपेक्षायां नेयत्वं दर्शयति, मह्यीति।—महावराहेण लोहितात् उदधेः मही उद्धृता, इतीयति एवंप्रकारे, निर्दिष्टे प्रयुक्ते सति, उरगासृजः एतत् पदस्य, नेयत्वम् अध्याहारेण बोध्यत्वं, भवतीति शेषः ; तथा हि, लोहितादित्युक्ते कथमित्यपेक्षायां खुरक्षुण्णनागासृजा इत्यंशो वक्तव्यः, तच्चाध्याहारमन्तरेण न सम्भवति इति नेयत्वम्, अन्यथा अर्थस्य स्फुटता न स्यात् इति भावः। (शक्त्या लक्षणया च यत्र अन्वयबोधानन्तरमनुपपत्तिरर्थस्य भवेत् तत्राध्याहारादिना तदुपपत्तिः नेयत्वं, तथा रूढ़िप्रयोजनाभावे कृतायाः लक्षणायाः अङ्गीकृतेऽप्यर्थबोधेऽपि अर्थस्य नेयत्वं, न तत्रार्थव्यक्तिरिति ) ॥७४॥

अत्र उभयोरपि मार्गयोः साम्यं दर्शयति, नेति।—उभयोरपि वैदर्भीगौड्योः, मार्गयोः रीतिविशेषयोः, कवय इति शेषः, ईदृशं पूर्वोक्तरूपं नेयत्वयुक्तं वाक्यं, न बहु मन्यन्ते न आद्रियन्ते, किन्त्वत्र अन्येऽत्र: अर्थव्यक्तिविपर्य्ययरूपो गुणगतदोष एव भवति ; ( तदुक्तं—"वाक्यं भवति नेयार्थ-

उदारलक्षणम्।—

उत्कर्षवान् गुणः कश्चित् यस्मिन्नुक्ते प्रतीयते।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः॥ ७६॥

मर्थव्यक्तेर्विपर्य्ययात्" इति) हि यतः, शब्दन्यायः शाब्दबोधनियमः, शब्दोपात्तानां वृत्त्युपस्थाप्यानामेवार्थानामन्वयबोध इत्येवंस्वरूपः इत्यर्थः, तस्य विलङ्घिनी व्यतिक्रमसाधनी, प्रतीतिः अध्याहारादिकष्टकल्पनेन अन्वयबोधः इत्यर्थः, न सुभगा न साध्वीत्यर्थः। (अध्याहृतोपस्थापितार्थप्रतीतेः तात्पर्य्यार्थालोचनेनार्थान्तरप्रतीतेश्च शाब्दबोधोत्तरजायमानत्वात् न शाब्दबोधत्वं, विशिष्टशक्तिवादमतमवलम्ब्य उक्तमिदमित्यवधेयम्)॥ ७५॥

औदार्य्यं गुणं निरूपयति, उत्कर्षेति।—यस्मिन् वाक्ये, उक्ते कथिते सति, कश्चित् उत्कर्षवान् वर्णनीयस्य विषयस्य उत्कर्षप्रतिपादको लोकोत्तरचमत्कारकः, गुणः धर्मविशेषः, प्रतीयते बुध्यते, तत् उदाराह्वयम् औदार्य्यगुणयुक्तम्, एवञ्च उत्कर्षजनकधर्मप्रतीतिमद्वर्णनम् उदारत्वमिति लक्षणम्। [उत्कर्षश्च क्वचित् दीप्तत्वेन, क्वचित् कोमलत्वेन, क्वचित् त्यागशौर्य्यादिना, क्वचित् ग्राम्यत्वेन, क्वचिदग्राम्यत्वेन च सम्भवति; अत एवोक्तं वामनेन ग्राम्यत्वप्रसङ्गे अग्राम्यत्वमुदारता इति, लक्षणञ्च—"अग्राम्यत्वमुदारता" (का० सू० वृ० ३ अधि० २अ० १२सू०) इति; उदाहृतञ्च तेनैव तत्र—"त्वमेवं-सौन्दर्य्या स च रुचिरतायां परिचितः कलानां सीमानं परमिह युवामेव भजथः। अयि! द्वन्द्वं दिष्ट्या तदिति सुभगे! संवदति वा-मतः शेषञ्चेत् स्याज्जितमिह तदानीं गुणितया॥" इति] ततश्च स्फुटभेदयोरपि गौड़वैदर्भयोरीदृशौदारत्वे साम्यमेव दर्शित-

अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिताऽसकृत्।
तदवस्था पुनर्देव! नान्यस्य मुखमीक्षते॥ ७७॥

मित्याह, तेनेति।—तेन उदारत्वगुणेन, काव्यपद्धतिः गौड़-वैदर्भीया काव्यरीतिः, सनाथा पूर्णा, उत्कर्षवतीति भावः। ["एषां विपर्य्ययः प्रायो दृश्यते गौड़वर्त्मनि" इत्यत्र प्रायः-पदोपादानात् कुत्रचित् गौड़वैदर्भयोः साम्यमपीत्यभिप्रायः। इदञ्च अर्थगतं, शब्दगतन्तु विकटत्वलक्षणं, विकटत्वञ्च पदानां नृत्यत्प्रायत्वं, यस्मिन् सति पदानि नृत्यन्तीव इति जनस्य वर्णभावना भवति तत् विकटत्वमित्यर्थः, उक्तञ्च वामनेन —"विकटत्वमुदारता" (का० सू० वृ० ३अधि० १अ० २१सू०) इति; उदाहृतञ्च तेनैव यथा—"स्वचरणविनिविष्टैर्नूपुरै-र्नर्त्तकीनां झणिति रणितमासीत् तत्र चित्रं कलञ्च" इति। प्रत्युदाहरणं यथा—"चरणकमललग्नैर्नूपुरैर्नर्त्तकीनां झणिति रणितमासीत् मञ्जु चित्रञ्च तत्र" इति। एतेनैतदपि सूच्यते, विकटत्वं हि वक्रत्वं, न हि शब्दार्थयोर्वक्रतामन्तरेण काव्य-पदवीप्राप्तिः सम्भवति; तच्चोक्तं—"यत्तु वक्रं वचः शास्त्रे लोके च वच एव तत्। वक्रं यदनुरागादौ तच्च काव्यमिति श्रुतिः॥" इति; एतद्विपरीत्ये तु अलङ्कारहीनम् औदार्य्यविपर्य्यय-दोषमङ्गीकुर्वन्त्यन्ये; यदाहुः,—"यस्तु रीतेरनिर्वाहादौदार्य्यस्य विपर्य्ययः। वाक्यं तदनलङ्कारमलङ्कारविदो विदुः॥" यथा—दीर्घपुच्छश्चतुष्पादः ककुद्मान् लम्बकम्बलः। गोरपत्यं बलीवर्द्दस्तृणमत्ति मुखेन सः॥" तदिदमपुष्टार्थत्वादनुत्कृष्टविशेषण-मनुदारं निरलङ्कारमाचक्षते। सोऽयमौदार्य्यविपर्य्ययो नाम शब्दार्थप्रधानो गुणविपर्य्ययदोषः इति]॥ ७६॥

उदारत्वस्य उदाहरणं दर्शयति, अर्थिनामिति।—हे देव!

इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते ।
अनेनैव पथाऽन्यत्र समानन्यायमूह्यताम् ॥ ७८ ॥
श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।
यथा लीलाम्बुजक्रीड़ा-सरो हेमाङ्गदादयः ॥७६॥

अर्थिनां कृपणा दीना, दृष्टिः त्वन्मुखे असकृत् वारंवारं, पतिता पुनः किन्तु, तदवस्था दीनेत्यर्थः, अन्यस्य मुखं न ईक्षते । (एतेन राज्ञः एतादृशी प्रभूतदानशक्तिर्यत् दात्रन्तरोपसर्पणमर्थिनां नास्तीति सूचितं सहृदयानाम् अतिशयेन चमत्कारोति हृदयमिति ) ॥ ७७ ॥

इतीति ।—इति उक्तरूपे, अस्मिन् वाक्ये, त्यागस्य दानस्य, उत्कर्षः वैचित्र्यविशेषाधायकत्वं, साधु सम्यक्, लक्ष्यते प्रतीयते, सामाजिकैरनुभूयते इत्यर्थः । "साधु" इत्यत्र "खलु" इति पाठे—खलु निश्चितमित्यर्थः, अन्यत्रापि पद्ये, अनेन एव प्राक्प्रदर्शितेनैव, पथा रीत्या, समानः सदृशः, न्यायः नियमः यत्र तत् यथा तथा, ऊह्यतां विभाव्यताम्, एताम् एव रीतिमवलम्ब्य पद्यं विरच्यतामित्यर्थः ॥ ७८ ॥

मतभेदं दर्शयति, श्लाघ्यैरिति ।—श्लाघ्यैः विशेष्यस्य उत्कर्षाधायकत्वेन सामाजिकमनोरमैः विशेषणैः ( बहुवचनात् एकस्य द्वयोः वा विशेषणयोः सद्भावे न अयं गुण इति सूचितम् ) युक्तं समन्वितं, वाक्यम् उदारम् औदार्य्यगुणयुक्तं, कैश्चित् कविभिः, इष्यते । ( अभिप्रायानुरूपविशेषणवद्वाक्यस्यापुष्टार्थत्वदोषराहित्यात् परिकरालङ्कारत्वाच्च गुणत्वकथनमयुक्तमित्यस्मिन् पक्षे स्वस्यानभिमतमिति सूचनार्थं कैश्चित् इत्युक्तिरित्यवधेयम् ) उक्तमर्थमुदाहरति, यथेति ।—यथा लीलाम्बुजक्रीड़ा-

ओजोगुणलक्षणम् ।—

**ओजः समासभूयस्त्वमेतत् गद्यस्य जीवितम् ।**
**पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥८०॥**

---

अत्रो हेमाङ्गदादयः 'लीलाम्बुज' इत्यत्र लीलेति विशेषणेन तदुपयोगिनो वर्णाकारसौरभ्यातिशयस्य, 'क्रीड़ासरः' इति कथिते तत्र क्रीड़ार्थक-कमलकैरवादिजनितशोभादिकस्य, तथा 'हेमाङ्गद' इत्युक्ते अङ्गदस्य हेमनिर्मितत्वेन सुदृश्यत्वादिकस्य प्रतीतिः सहृदयमनोहारिणीति विभावनीया ॥ ७९ ॥

ओजोगुणं निरूपयति, ओज इति ।—समासः द्वयोर्बहूनां वा पदानाम् एकीकरणं, तस्य भूयस्त्व बाहुल्यं, दीर्घता इत्यर्थः, बहुभिः पदैः समास इति यावत्, ओजः, एतत् गद्यस्य पूर्वोक्तस्य उत्कलिकादिरूपस्य प्रबन्धविशेषस्य, जीवितं प्राणभूतम्, इदञ्च उभयोरपि मार्गयोः सामान्यम् । वैषम्यं दर्शयितुमाह, पद्येऽपीति ।—अदाक्षिणात्यानां दाक्षिणात्यव्यतिरिक्तानां गौड़ानाम् इत्यर्थः, पद्येऽपि अपिशब्दोऽत्र गद्यसङ्ग्रहार्थं प्रयुक्तः, इदम् एकम् अद्वितीयं, परायणं परमा गतिः, तेषां बन्धगाढ़ताप्रियत्वादिति भावः । [ इदञ्च शब्दगतं, समासस्य शब्दमात्रगतत्वात् । वामनस्तु बन्धस्य यत् गाढ़त्वं तत् शब्दगतमोजः इत्याह, यथा—"गाढ़बन्धत्वमोजः" ( का० सू० वृ० ३ अधि० १ अ० ५ सू० ) इति । अभिधेयस्य प्रौढ़त्वमर्थगतमोज इति च, यथा—"अर्थस्य प्रौढ़िरोजः" ( का० सू० वृ० ३ अधि० २ अ० २ सू० ) इति तल्लक्षणमभिधाय "पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा । प्रौढ़िर्व्याससमासौ च साभिप्रायत्वमस्य च ॥" इति तस्याः पञ्चविधत्वं व्यवस्थापितवान् । तत्र पदार्थे वाक्यवचनं यथा—"अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।" अत्र "चन्द्र"

तत् गुरूणां लघूनाञ्च बाहुल्याल्पत्वमिश्रणैः ।
उच्चावचप्रकारन्तत् दृश्यमाख्यायिकादिषु ॥८१॥

---

इत्येकस्मिन् पदार्थे वक्तव्ये "अत्रेर्नयनसमुत्थं ज्योतिः" इति वाक्यवचनम् । वाक्यार्थे पदाभिधा यथा—"दिव्येयं न भवति, किन्तर्हि मानुषी" इति वक्तव्ये "निमिषति" इत्याह इति । यथा वा क्वचित्—"निदाघशीतलहिमकालोष्णशरीरा सुकुमारी वरयोषित्" इति वाक्यार्थे वक्तव्ये "वरवर्णिनी" इति पदाभिधानम् । क्वचित् एकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैः वाक्यैरभिधानं व्यासः, क्वचित् बहुवाक्यप्रतिपाद्यस्य एकवाक्येन अभिधानमित्येवंरूपः समासश्च इति । तत्र व्यासो यथा —"अयं नानाकारो भवति सुखदुःखव्यतिकरः सुखं वा दुःखं वा न भवति भवत्येव च ततः । पुनस्तस्मादूर्द्धं भवति सुखदुःखं किमपि तत् पुनस्तस्मादूर्द्धं भवति न च दुःखं न च सुखम् ॥" इति । समासो यथा—"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् । सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥" इति । पदान्तरप्रयोगमन्तरेण तदर्थप्रत्यायनप्रागल्भ्यं साभिप्रायत्वं, तद्यथा—"सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा । जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः ॥" इति, आश्रयः कृतधियामित्यस्य च सुबन्धुसाचिव्योपक्षेपपरत्वात् साभिप्रायत्वम् इति । केचित्तु प्रोक्तचतुर्विधं प्रौढ़रूपमोजः शब्दगुणः, साभिप्रायत्वन्तु अर्थगुण इत्याहुः । ॥ ८० ॥

तदिति ।—तत् समासभूयस्त्वरूपम् ओजः, गुरूणां समासघटकपदावयवदीर्घप्रयत्नोच्चार्यमाणवर्णानां महाप्राणाक्षराणामिति यावत्, लघूनाम् अल्पप्रयत्नोच्चार्यमाणकोमलवर्णानाम् अल्पप्राणाक्षराणाञ्च, बाहुल्यं प्रयोगाधिक्यम्, अल्पत्वम् ऊन-

अस्तमस्तकपर्य्यस्त-समस्तार्कांशुसंस्तरा।
पीनस्तनस्थितातास्र-कम्रवस्त्रेव वारुणी ॥८२॥

प्रयोगः, मिश्रणं साम्यं तैः करणभूतैः, उच्चावचप्रकारं बहुविधं, तच्च क्वचित् गुरूणां बाहुल्येन लघूनाम् अल्पत्वेन, क्वचित् लघूनां बाहुल्येन गुरूणामल्पत्वेन, क्वचिच्च तेषामुभयविधानां मिश्रणेन च भवेत्, तत् आख्यायिकादिषु गद्यग्रन्थेषु, दृश्यं लक्षणीयम्। (आदिना चम्पूविरुदादीनां ग्रहणम्। किन्तु आख्यायिकेत्युपादानात् कथायां रौद्रादिरसेऽपि दीर्घसमासो न विधेयः इत्यायातम; गौड़ीयानान्तु पद्यग्रन्थेऽपि सूर्य्यशतकादौ समासबाहुल्यं पूर्वमुक्तमवधेयम्। तृतीयपादे "तत्" इत्यत्र "मत्" इति "प्रकारम्" इत्यत्र "प्रकारेण" "दृश्यम्" इत्यत्र "दृष्टम्" इति च पुस्तकान्तरे पाठः इति) ॥ ८१ ॥

गौड़ाभिमतं पद्येऽपि समासभूयस्त्वप्रकारं दर्शयति, अस्तेति।—अस्तमस्तके अस्ताचलशृङ्गे, पर्य्यस्ताः पतिताः, समस्ता ये अर्कांशवः सूर्य्यकिरणाः, तैः संस्तरः आच्छादनं यस्याः तादृशी, वारुणी वरुणाधिष्ठिता, दिगिति शेषः, पीनस्तने स्थितम् आतास्रम् ईषल्लोहितं, सायङ्कालीनसौरकिरणस्य तथात्वात् इति भावः, कम्रं कमनीयं, वस्त्रं यस्याः तथाभूता कामिनीव, राजते इति शेषः। (अत्र द्वयोरप्यर्द्धयोः समासबाहुल्यम्। भोजराजेनापि—"ओजः समासभूयस्त्वम्" इति लक्षणमभिधाय समासबहुलं पद्यमेव उदाहृतं, यथा—"जयति भुजगरज्जुग्रन्थिनिष्पीड़ितेन्दुः स्रवदमृतनिवृत्तप्रेतभावैः कपालैः। विरचितनतिबन्धो मूर्द्ध्नि सद्यः पुरारेः परिणतबहुकल्पब्रह्मणां ब्रह्मघोषः।" अत्र भुजगरज्जुग्रन्थि इत्यादिना समासबाहुल्यादोजोनाम शब्दगुण इति) ॥ ८२ ॥

इति पद्येऽपि पौरस्त्या बध्नन्त्योजस्विनीर्गिरः।
अन्ये त्वनाकुलं हृद्यमिच्छन्त्योजो गिरां यथा ॥८३

पयोधरतटोत्सङ्ग-लग्नसन्ध्याऽऽतपांशुका।
कस्य कामातुरं चेतो वारुणी न करिष्यति?॥८४

गौड़ाभिमतं समासभूयस्त्वं दर्शयित्वा मतान्तरमवतारयति, इतीति द्वाभ्याम्।—पौरस्त्याः गौड़वासिनः, इति पूर्वोक्त-प्रकारे, पद्येऽपि ओजस्विनीः समासबहुलाः, गिरः बध्नन्ति, अन्ये तु पण्डिताः, गिरां वाचाम्, अनाकुलम् (अत्र भाव-निर्देशः) अनाकुलत्वमित्यर्थः, दीर्घसमासादीनां झटिति प्रतीति-षन्तरायत्वात् तद्राहित्यरूपमिति यावत्, हृद्यं सहृदयमनो-हारि च, ओजः इच्छन्ति, तथा च समासस्य दीर्घत्वम् अल्पत्वम् अभावो वा भवतु श्रोतॄणां बुद्धेरनाकुलत्वसम्पादनेन तन्मनो-हारित्वम् ओजःपदार्थः इति निष्कर्षः। अत्र उदाहरति, यथेति। —पयोधरो मेघ एव, पयोधरः स्तनः, स एव तटः प्रदेशः, तस्य उत्सङ्गे लग्नं सन्ध्याऽऽतपः सायङ्कालीनसौरकिरणाभास एव, अंशुकं यस्याः तादृशी, वारुणी प्रतीची दिक् इत्यर्थः, कस्य चेतः कामातुरं न करिष्यति ? इत्यन्वयः। (अत्र पूर्वार्द्धे समासबाहुल्य-मपि पूर्ववत् न श्रोतृबुद्धिमाकुलयति परं श्रोतृसुखमेव तेषां समुत्पादयति, परार्द्धे 'कामातुरम्' इत्यत्र समासस्याल्प-त्वम्, अन्यत्र च समासो नास्ति, तथाऽपि बन्धशैथिल्याभावात् सामाजिकान् सुखयति; एवञ्च दीप्तरसानुप्रविष्टार्थप्रतिपादक-सन्दर्भेऽपि समासमन्तरेण यत्र दीप्तार्थता न प्रतिहन्यते तत्र समासाभावेऽपि गुणत्वमेवाङ्गीकृतं, न तु गुणविपर्य्ययात् दोषत्वम्; उक्तञ्च—"ओजः समासभूयस्त्वं तद्दीप्तार्थेषु बध्यते।

कान्तिगुणलक्षणम्।—

**कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात्।**
**तच्च वार्त्ताऽभिधानेषु वर्णनास्वपि दृश्यते॥ ८५॥**

विपर्य्ययोऽस्यासमस्तं तद्दोषत्वेन दोषभाक्॥" इति। तत्रोदाहृतं यथा—"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्" इत्यादि, "अत्रासमस्तत्वेऽपि प्रौढत्वसत्त्वात् गुणत्वम्" इति समावेशश्च दर्शितः। अत एवात्र ओजःशैथिल्यात्मकशब्दगुणः प्रसादः इति प्राक् प्रतिपादितः इति विभावनीयम्)॥ ८३॥ ८४॥

कान्तिगुणं निरूपयति, कान्तमिति।—लौकिकस्य लोकसिद्धस्य, अर्थस्य अनतिक्रमात् अत्यागात्, तन्मात्रस्यैव वर्णनात् इत्यर्थः, सर्वजगतां साधारणानां, कान्तं मनोरमम्, अध्याहारादिदोषाभावादन्वयबोधसौकर्य्येणार्थसुगमत्वात् सहृदयानां हृद्यमित्यर्थः, पद्यमिति शेषः, कान्तं कान्तिगुणविशिष्टं, तथा च सहृदयमनोरञ्जकलोकसिद्धवस्तुवर्णनमेव कान्तिगुण इति। (उक्तञ्च क्रमदीश्वरेण यथा—"वर्णनाऽत्युक्तिशून्या या सा कान्तिरभिधीयते" इति। इयं कान्तिरर्थगा, अर्थानुसन्धानमन्तरेणास्याः प्रतीतिविरहात्) तच्च कान्तिमत् वाक्यं, वार्त्ता प्रियालापः, ("अनामये प्रियालापे वार्त्तं वार्त्ता च कथ्यते" इति वचनात्) तस्याः अभिधानेषु कथनेषु, तथा वर्णनासु वस्तुस्वरूपमात्रनिरूपणेषु, दृश्यते, अनामयप्रश्नेषु प्रियालापेषु वर्णनासु च यथावत् सत्यनिरूपणस्यैव औचित्यात् अयथावर्णने लौकिकव्यवहारविसंवादः स्यादिति भावः। (केचित्तु वार्त्ताभिधानेषु इत्यस्य इतिहासवर्णनेषु इत्यर्थं कल्पयन्ति, इतिहासानां यथावद्वर्णनस्य एव न्याय्यत्वात्, असत्यवर्णने सामाजिकानां तत्र

गृहाणि नाम तान्येव तपोराशिर्भवादृशः।
सम्भावयति यान्येव पावनैः पादपांशुभिः॥ ८६
अनयोरनवद्याङ्गि ! स्तनयोर्जृम्भमाणयोः।
अवकाशो न पर्य्याप्तस्तव बाहुलतान्तरे॥ ८७॥

मिथ्याज्ञानेन प्रवृत्तिरेव न स्यात्, ततश्च प्रबन्धस्य रामादिवत् प्रवर्त्तितव्यं न रावणादिवत् इति कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशश्च न सम्भवतीत्याहुः। एतेन वार्त्तावर्णनाभ्यामन्यत्र अयथावद्वर्णनेऽपि न दोषः, अत एव नवीनैः व्यञ्जकार्थस्य स्वतः सम्भवित्वेन प्रौढोक्तिसिद्धत्वेन च काव्यस्य द्वैविध्यमुक्तम्)॥८५॥

वार्त्ताभिधाने कान्तिं दर्शयति, गृहाणीति।—तानि एव गृहाणि गृहपदवाच्यानि, प्रशंसनीयानि गृहाणि इत्यर्थः, गृहपदस्य लक्षणया प्रशस्तगृहपरत्वादिति भावः; तपोराशिः अधिकतपाः, भवादृशः महात्मजनः, पावनैः पवित्रैः, पादपांशुभिः चरणरजोभिः, यानि गृहाणि, सम्भावयति संशोधयति। (इयं हि प्रियालापरूपवार्त्ता, ततश्च महात्मजनपदस्पर्शेन स्थानस्य प्राशस्त्यरूपवर्णनीयार्थस्य लोकसिद्धत्वादियं धार्त्ताभिधानरूपा कान्तिरिति अवधेयम्)॥ ८६॥

वर्णनायां कान्तिं दर्शयति, अनयोरिति।—अनवद्याङ्गि! हे सुन्दरि!, जृम्भमाणयोः वर्द्धमानयोः, अनयोः स्तनयोः तव बाहुलतान्तरे वक्षसि, अवकाशः स्थानं, न पर्य्याप्तः न प्रभूतः, स्तनयोरतिपीनोन्नततया वक्षसश्च क्षुद्रतया यथेष्टस्थानालाभात् इति भावः। (अत्र पीनोन्नतयोः स्तनयोः क्षुद्रायतने वक्षसि स्थानाप्राप्तिवर्णनं लोकसिद्धमिति कान्तिगुणः)॥ ८७॥

इति सम्भाव्यमेवैतत् विशेषाख्यानसंस्कृतम्।
कान्तं भवति सर्वस्य लोकयात्राऽनुवर्त्तिनः॥८८॥

उक्तयोः पद्ययोः कान्तिं सङ्घटयति, इतीति।—इति पूर्वोक्त-श्लोकद्वयप्रतिपाद्यं वस्तु, सम्भाव्यमेव भवितुमर्हति एव, न तु असम्भववदपि प्रौढ़ोक्त्या कल्पनीयम् इति भावः; एतच्च विशेषा-ख्यानेन विशेषः आख्यायते अनेनेति विशेषाख्यानं वैचित्र्यप्रति-पादकविशेषणं, तेन संस्कृतं शोभितं सत्, लोकयात्राऽनुवर्त्तिनः लौकिकाचारपरायणस्य, सर्वस्य जनस्य, कान्तं मनोरमं, भवति। [एतेन औत्कर्षप्रतिपादकविशेषणवतो लोकप्रसिद्ध-वस्तुनो वर्णनेनैव कान्तेः सम्भवः, न तु लोकसिद्धवस्तुमात्र-वर्णनेनेति, तथात्वे "सूर्य्योऽस्तं याति" "गौः शेते" इत्यादे-रपि लोकसम्भाव्यत्वेन कान्तिमत्त्वात् काव्यत्वापत्तिः, तादृशविशेषणवद्वर्णनस्य वैचित्र्यजनकत्वात् वैचित्र्यस्यैव गुणादिरूपत्वात्, गुणालङ्कारादिमत्त्वस्यैव काव्यत्वमिति सुधीभिर्विभाव्यम्। अन्ये तु यत्र शृङ्गारादयो रसा दीप्ततया प्रतिभान्ति, तत्रैवार्थगा कान्तिरित्याहुः; तथा ह्युक्तं वामनेन—"दीप्तरसत्वं कान्तिः" (का० सू० वृ० ३अधि० २अ० १४सू०) इति। उदाहरणञ्च तत्रैव यथा—"प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया द्वित्राण्येव पदानि वासभवनात् यावन्न यात्युन्मनाः। तावत् प्रच्युतपाणिसम्पुट-लसन्नीवीनितम्बं धृतो धावित्वैव कृतप्रणामकमहो! प्रेम्णो विचित्रा गतिः॥" इति। औज्ज्वल्यरूपा तु शब्दगुणः; यथोक्तं वामनेन—"औज्ज्वल्यं कान्तिः" (का० सू० वृ० ३अधि० १अ० २५सू०) इति। औज्ज्वल्यञ्च ह्यालिकादिव्यवहृतपद-परित्यागेनालौकिकशोभाशालित्वं, तच्च "पत्रम्" इति वक्तव्ये

लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः ।
योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः॥८९॥
देवधिष्ण्यमिवाराध्यमद्य प्रभृति नो गृहम् ।
युष्मत्पादरजःपात-धौतनिःशेषकिल्बिषम् ॥९०॥

"किसलयम्" इत्यादि, "जलधौ" इति वक्तव्ये "अधिजलधि" इति, "रात्रि" इति वक्तव्ये "रजनि" इति, "कमलमिव" इति वक्तव्ये "कमलायते" इत्यादि। अन्यच्च—"यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरिष्यते" इति, यथा—"कुरङ्गीनेत्रालीस्तवकितवनालीपरिसरः" इति ] ॥ ८८ ॥

निरुक्तकान्तौ गौड़ानां वैमत्यमाह, लोकेति।—इवशब्दोऽत्र अप्यर्थकः। अत्यर्थम् अतिशयेन, लोकातीतः अलौकिकः अपि, योऽर्थः अध्यारोप्य कल्पयित्वा, विवक्षितः वक्तुमिच्छया प्रयुक्त इत्यर्थः, तेन विदग्धाः सहृदयाभिमानिनः, (इति सोल्लुण्ठनोक्तिः ) गौड़ीया इत्यर्थः, अतितुष्यन्ति, तेषां प्रौढ़ोक्तिप्रियत्वात् इति भावः। ( अध्यारोपादिना विवक्षितार्थस्य योग्यताऽभावादन्वयबोधाभाव इत्यपि न वाच्यं, "बाहुलता" इत्यादौ रूपकालङ्कारे "सत्यपि बाधे प्रमातुरिच्छाप्रयुज्यत्वमाहार्य्यम्" इत्युक्ताहार्य्यज्ञानेनाभेदान्वयः सर्वैरपि आलङ्कारिकैरङ्गीकृतत्वात्। अत एवोक्तम्—"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति ) इतरे जनाः वैदर्भीयाः कवयः, न, तेषां यथावद्वर्णनप्रियत्वादिति भावः, सुतरामुक्तलक्षणा कान्तिर्गौड़ैः न अङ्गीक्रियते इति फलितार्थः ॥ ८९ ॥

वार्त्तायां निरुक्तकान्तेर्वैपरीत्यं वर्णयति, देवेति।—अद्य प्रभृति नोऽस्माकं, गृहं युष्माकं पादरजःपातेन चरणरेणुपातेन,

कान्तिवैपरीत्यम्।—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥ ९१ ॥
इदमत्युक्तिरित्युक्तमेतत् गौडोपलालितम्।
प्रस्थानं प्राक् प्रणीतन्तु सारमन्यस्य वर्त्मनः ॥९२॥

धौतं निःशेषं, समस्तं किल्बिषं पातकं यस्य तथाभूतं सत्, देवधिष्ण्यं देवतास्थानमिव, आराध्यं सेवनीयं, भविष्यति इति शेषः। (अत्र महात्मनां चरणरजःस्पर्शे गृहस्य पावनत्वं लोकसिद्धमपि देवावासस्येव आराध्यत्वकीर्त्तनमारोपितमिति कान्तिविपर्य्ययोऽवगन्तव्यः) ॥ ९० ॥

वर्णनायां निरुक्तकान्तेर्वैपरीत्यं वर्णयति, अल्पमिति।— भवत्याः स्तनयोर्जृम्भणं वृद्धिः, एवंविधं व्यापकमित्यर्थः, भावि भविष्यति, इदम् अनालोच्यैव अविचार्य्यैव, वेधसा विधात्रा, आकाशम् अल्पं निर्मितम्। (अत्र सर्वविमृष्यकारिणोऽपि विधातुरनालोचनादेव महतोऽप्याकाशस्याल्पत्वनिर्माणम् इत्येवमत्युक्तिमूलकवर्णनेन विल्वदाड़िम्बफलसदृशयोरपि स्तनयोरसाधारणपीनोत्तुङ्गत्वमसम्भाव्यमानमपि प्रतिपादितं सर्वमेतद्वर्ण्यमानं लोकाप्रसिद्धमेव, ततश्च प्रागुक्तलक्षणा कान्तिर्नात्र सम्भवतीति विभाव्यम्। केचित्तु एवंविधकान्तिविपर्य्यये वैदर्भीरीतिमनुसृत्य कान्तिविपर्य्ययाख्यं गुणगतदोषमाहुः; यथा—"कान्तेर्विपर्य्ययाद्वाक्यं ग्राम्यमित्यभिधीयते।" यथा—विरहे ते विषीदन्तं निषीदन्तं तवान्तिके। कन्ये! कामयमानं मां त्वं न कामयसे कथम्?॥" इदमुक्तेर्ग्राम्यतया कान्तिहीनमित्यर्थप्रधानोऽयं कान्तिविपर्य्ययो दोषः।) ॥ ९१ ॥

इदमिति।—इदम् ईदृशं काव्यम्, अत्युक्तिः इति उक्तम्,

समाधिलक्षणम्।—

अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥९३॥

अत्युक्तिसंज्ञया कथितं,कविभिः इति शेषः। (उक्तञ्च भोजराजेन यथा—"लौकिकार्थमतिक्रम्य प्रस्थानं यत्र वर्ण्यते। तदत्युक्ति-रिति प्रोक्तं गौड़ानां मनसो मुदे॥" इति) एतत् पद्यं, गौड़ैः कविभिः, उपलालितं हृद्यतया गृहीतं, प्राक् पूर्वं, प्रणीतं कथितं,प्रस्थानं लोकसिद्धवस्तुवर्णनरूपम्,अन्यस्य वर्त्मनः वैदर्भी-यस्य मार्गस्य, सारं समुत्कर्षरूपं, मनोहरमिति यावत्। अय-मेव कान्तगुणे प्रसिद्धाप्रसिद्धवस्तुवर्णनरूपः गौड़वैदर्भयोर्भेद इति भावः॥ ९२॥

समाधिं सोदाहरणं निरूपयति, अन्यधर्म इत्यादि।—लोक-सीमानुरोधिना लोकस्थितिमनुवर्त्तमानेन, लोकप्रसिद्धिमनु-सरतेति यावत्, वक्ता इति शेषः, (एतेन स्वेच्छया लोकविरुद्ध-विसदृशधर्मारोपे नायं समाधिरिति सूचितम्। यथा—"हंसन्ति मशका यत्र तत्र निद्रा सुदुर्लभा" इत्यादौ करिधर्मस्य हंहणस्य मशककर्त्तृ अध्यारोपः लोकविरुद्धः इति) अन्यस्य अपरस्य अप्रकृतस्य, यो धर्मः गुणक्रियादिः, ततः तस्मात् अप्रकृतात्, अन्यत्र तद्भिन्ने प्रकृते इत्यर्थः, यत्र वाक्यार्थे, सम्यक् आधीयते साध्यवसानगौण्या लक्षणया आरोप्यते, स समाधिः तदाख्यगुणयुक्तः, तथा च प्रकृते वस्तुनि तद्धर्मनिगरणेन सदृशस्याप्रकृतधर्मस्याहार्य्येण तादात्म्यारोपः लोकप्रसिद्धश्चेत् समाधिरिति फलितार्थः। (अन्यैरप्युक्तं—"समाधिः सोऽन्य-धर्माणां यदन्यत्राधिरोपणम्" इति। धर्म इत्यनेन धर्मिणः समारोपे न अयं गुणस्तत्रातिशयोक्तिरलङ्कार एवेति सूच्यते;

कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च।
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः॥९४॥

यथा—"लतामूले लीनो हरिणपरिहीनो हिमकरः स्फुरत्ताराकारा गलति जलधारा कुवलयात्। धुनीते बन्धूकं तिलकुसुमजन्माऽपि पवनः बहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः॥" इत्यादौ धर्मिणि मुखादौ धर्मिणश्चन्द्रादेरध्यारोपः)॥ ९३॥

कुमुदानीति।—यथा, कुमुदानि उत्पलानि, निमीलन्ति सङ्कोचतां प्राप्नुवन्ति, कमलानि उन्मिषन्ति विकाशन्ते च; (प्रभातवर्णनमिदं, दिवा कुमुदनिमीलनस्य कमलोन्मेषस्य च कविसमयप्रसिद्धत्वात्। अत्र निमीलनोन्मेषौ अप्रकृतस्य नेत्रस्य धर्मौ कुमुदकमलयोः दलसङ्कोचविकाशताढात्म्येन आरोपितौ, धर्मधर्मिणोरनयोः सादृश्यातिशयमहिम्ना लोकसिद्धौ च) एतदेव स्वयं निर्दिशति, इतीति।—इति उक्ताभ्यां, नेत्रक्रियाभ्यां निमीलनोन्मेषाभ्यां सह, अध्यासात् कुमुदकमलदलसङ्कोचविकाशयोस्तादात्म्यारोपात्, तद्वाचिनी तयोः निमीलनोन्मेषयोः, वाचिनी प्रतिपादिका, श्रुतिः निमीलन्तीत्यादि तत्तत्क्रियावाचकः शब्द इत्यर्थः, लब्धा सङ्कोचविकाशप्रतिपादकतया प्राप्ता; अनयोः सादृश्यातिशयवत्त्वेनाभिन्नप्रायत्वादेकशब्दप्रतिपाद्यत्वञ्च दृश्यते, यथा कुमुदं निमीलति चक्षुर्निमीलति कमलमुन्मिषति चक्षुरुन्मिषति इत्यादि। [अत्र हि प्रस्तुतधर्मं सङ्कोचविकाशरूपं निगीर्णस्वरूपं, तच्च सदृशतया निमीलनोन्मेषताढात्म्येन प्रतीयते इति समाधिगुणः। अयञ्च अर्थगत एव, प्रकृतेऽर्थे अप्रकृतस्य अर्थस्यैव आरोपादिति। अन्ये तु अर्थदृष्टिरूपस्यार्थगुणस्य समाधेः

अयोनिरन्यच्छायायोनिश्च इति द्वैविध्यमाहुः ; तत्राह वामनः,—"अर्थदृष्टिः समाधिः" (का० सू० वृ० ३ अधि० २अ० ६सू०) इति, "अर्थो द्विविधः अयोनिरन्यच्छायायोनिश्च" (का० सू० वृ० ३अधि० २अ० ७सू० ) इति, तत्र अयोनिरकारणः, अवधानमात्रकारण इत्यर्थः ; तद्यथा—"अश्वपेहि मम सीधुभाजनात् यावदग्रदशनैर्न दश्यसे" इत्यादि। अन्यच्छायायोनिः अन्यस्य काव्यस्य छाया तद्योनिश्च ; यथा—"मा भैः शशाङ्क ! मम सीधुनि नास्ति राहुः" इत्यादि। विश्वनाथस्त्वत्रैवं मन्यते—अयोनिरर्थः कविप्रसिद्धिमन्तरेणापि स्वकपोलकल्पितः उपमानोपमेयभावादिस्वरूपः, यथा—"सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्" इति, अत्र हूणचिबुकेन सह नारङ्गकस्य सादृश्यं प्राचीनकविभिः कैरपि न प्रतिपादितं केवलं स्वबुद्ध्या उद्भावितम्। अन्यच्छायायोनिः प्राचीनकविभिः सम्यक् व्यवहृतः, कविसमयप्रसिद्धोऽपि किञ्चित् वैचित्र्यभावेन रचितः ; यथा—"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता काऽपि। नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥" अत्र नयननीलोत्पलयोः प्रसिद्धमपि सादृश्यं किञ्चिद्विच्छित्तिविशेषेण निबद्धम्। शब्दगुणः समाधिस्तु गाढबन्धमध्ये शिथिलबन्धोपादाने शिथिलबन्धमध्ये च गाढबन्धोपादाने वैरस्याभावः ; यदाह वामनः,—"आरोहावरोहक्रमः समाधिः" ( का० सू० वृ० ३ अधि० १अ० १२सू० ) इति। "आरोहावरोहयोः क्रमः आरोहावरोहक्रमः समाधिः परिहारः। आरोहस्यावरोहे सति परिहारः, अवरोहस्य वा आरोहे सति इति ; तत्र आरोहपूर्वकः अवरोहो यथा—निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे" इति। अवरोहपूर्वकस्तु आरोहो यथा—"नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः"

निष्ठ्यूतोद्गीर्णवान्तादि-गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ ९५ ॥
पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ९६ ॥

(का० सू० वृ० ३अधि० १अ० १३सू० वृ०) इति। पूर्वत्र 'निरानन्दः कौन्दे' इत्यत्र गुर्वक्षरबाहुल्यादारोहः, 'मधुनि' इत्यत्र लघ्वक्षरप्राचुर्य्यात् अवरोहः, अवरोहे प्रवर्त्तमाने सति आरोहस्य परित्यागः। उत्तरत्र 'नराः' इत्यत्र शैथिल्यादवरोहः, 'शीलभ्रष्टाः' इत्यत्र गुर्वक्षरप्रचुरत्वादारोहः, आरोहे प्रवर्त्तमाने च अवरोहस्य परित्यागः इति समाधेर्द्वैविध्यम् इत्यभिप्रायः। केचित्तु क्रमेण आरोहणं क्रमेण अवरोहणम् इत्यर्थं कल्पयन्ति ] ॥ ९४ ॥

समाधिं गौणलक्षणाक्रान्तं दर्शयति, निष्ठ्यूतेति।—निष्ठ्यूतम् उद्गीर्णं वान्तम् इत्यादिपदं, गौणी या वृत्तिर्लक्षणा, गुणयोगात् इति भावः, सैव व्यपाश्रयः विशिष्टः आश्रयो यस्य तत्, मुख्यार्थसदृशेऽर्थे प्रयुक्तमित्यर्थः, अतिसुन्दरम् अतिमनोरमं, तदेव समाधिस्थानमिति भावः, अन्यत्र तदभावे, गौणवृत्त्याश्रयाभावे मुख्यार्थे एव प्रयोगे इत्यर्थः, ग्राम्यकक्षां ग्राम्यतादोषकालुष्यं, विगाहते लभते, तथा च मुख्यार्थे प्रयुक्तं निष्ठ्यूतादिपदं ग्राम्यमेव लाक्षणिकेऽर्थे तु तादात्म्यारोपात् गुणवदिति फलितार्थः; (तथा चोक्तं— "ग्राम्यं घृणावदश्लीलामङ्गलार्थं यदीरितम्। तत् संवीतेषु गुह्येषु लक्षितेषु न दुष्यति॥" इति) ॥ ९५ ॥

उक्तमर्थमुदाहरति, पद्मानीति।—पद्मानि अर्कांशु-

इति हृद्यमहृद्यन्तु निष्ठीवति वधूरिति।
युगपन्नैकधर्माणामध्यासश्च स्मृतो यथा ॥ ९७ ॥

निष्ठ्यूताः सूर्यमयूखैर्निक्षिप्ताः, पावकविप्रुषः अग्निस्फुलिङ्गान्, पीत्वा उद्गीर्णा अरुणा रेणवः परागाः यैः तादृशैः, मुखैः ( विशेषणे तृतीया ) भूयः पुनः पुनः, वमन्तीव। ( सायङ्कालीनपवनासङ्गेन स्रवत्परागाणां पद्मानां वर्णनमिदम्। अत्र निष्ठ्यूतोद्गीर्णशब्दौ दैहिककफादिनिक्षेपे शक्तौ अपि सामान्यनिक्षेपरूपेऽर्थे लाक्षणिकौ, लक्षणा चात्र कफनिक्षेपो वह्निकणानिक्षेप इव इति सादृश्यप्रतीत्या गौणी ; यदुक्तं विश्वनाथेन—"सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि। सादृश्यात्तु मता गौण्यः॥" इति ; तेन च सादृश्यप्रतीत्या तदर्थस्य सहृदयहृद्यतया समाधिरव्याहतः। 'वमन्ति इव' इत्यत्र तु पद्मकर्तृकवमनस्यान्वयबोधाभावात् सादृश्यासम्भवाच्च लक्षणा अवश्यमङ्गीकार्य्या इति चेन्न, इवशब्दस्य सम्भावनार्थत्वात् सम्भावनायामपि बाधोदयस्याकिञ्चित्करत्वेन आहार्य्यवदन्वयबोधाप्रतिबन्धकत्वात् अन्वयबोधो निर्बाध एव ; प्रत्युत सम्भावनायाः लक्षणाजन्यताद्रूप्यप्रतीतेरिव वैचित्र्यजनकत्वमित्यवधेयम् ; एतेन प्रागभिहितगौणवृत्तिपदं सम्भावनाया उपलक्षणमवगन्तव्यम् ) ॥ ९६ ॥

इतीति।—इति पूर्वोक्तं निष्ठ्यूतादिपदं, हृद्यं गौणलक्षणायोगेन समाधिमत्त्वादिति भावः। वधूः निष्ठीवति कफादिकं त्यजति, इति वाक्यन्तु, अहृद्यं ग्राम्यतादोषकलुषिततया सहृदयानाम् अप्रियम्। ( अभिधया वृत्त्या मुख्यार्थे प्रयुक्तं निष्ठीवति इति पदं जुगुप्सां प्रकटयति, तत्रापि वधूपदं ग्राम्यतामतिशयं वर्द्धयति स्त्रियाः कफत्यागस्यात्यन्तजुगुप्साकरत्वात् )।

**गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।**
**अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ ९८ ॥**
**उत्सङ्गशयनं सख्याः स्तननं गौरवं क्लमः ।**
**इतीमे गर्भिणीधर्मा बहवोऽप्यत्र दर्शिताः ॥९९॥**

प्रागुक्तस्य अन्यधर्मस्यान्यत्रारोपः समाधिरित्युक्तलक्षणस्य चारुत्वातिशयप्रदर्शनार्थं बहूनां धर्माणामारोपमाह, युगपदिति । —तत्र नैकधर्माणां बहूनाम् अन्यधर्माणां, युगपत् समकालमेव, न तु कालभेदेन अन्यत्र अप्रस्तुतादन्यत्र प्रस्तुते इत्यर्थः, अध्यासः तद्धर्मनिगरणेन सदृशतया तादात्म्यारोपः, स्मृतः चारुत्वातिशयजनकत्वादुत्कृष्टसमाधित्वेन पण्डितैः स्वीकृतः; तथा च एकस्य अन्यधर्मस्य अन्यस्मिन्, तथा बहूनामपि अन्यधर्माणामन्यत्र समारोपः समाधिरिति फलितार्थः ॥ ९७ ॥

उक्तमर्थमुदाहरति, गुर्विति । —गुरवः जलपूर्णतया महत्यः, अन्यत्र—भ्रूणस्थत्वेन स्थूलोदरा इत्यर्थः ; यद्वा—गुरोः महतः, प्रभूतस्येत्यर्थः, अन्यत्र—परिपुष्टस्येत्यर्थः, (गर्भविशेषणम्) तथा गर्भस्य अन्तर्वर्तिजलपूरस्य, अन्यत्र—कुक्षिस्थजीवस्य, भरेण क्लान्ताः मन्थराः, स्तनन्त्यः गर्जन्त्यः, अन्यत्र—क्लान्तिजनितकुन्थनादिकं कुर्वन्त्यः, इमाः मेघपङ्क्तयः, अचलस्य पर्वतस्य, अधित्यका ऊर्द्धभूमिः, ("उपत्यकाऽद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः) तस्या उत्सङ्गं मध्यभागम्, अन्यत्र—सख्याः क्रोडं, समधिशेरते । (अत्र मेघपङ्क्तिधर्मेषु तद्धर्मनिगरणेन सादृश्यात् गर्भिणीधर्माणां बहूनां युगपदध्यासात् वैचित्र्यातिशयः सहृदयहृदयहारीति भाव्यम्, अलङ्कारश्च समासोक्तिरिति) ॥ ९८ ॥

उक्तश्लोके गर्भिणीधर्मं दर्शयति, उत्सङ्गेति । —अत्र उक्तो

तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः ।
कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥१००॥

श्लोके, सख्या उत्सङ्गशयनं स्तननं गौरवं क्लम इति उक्तरूपाः, इमे बहवः, गर्भिणीधर्माः दर्शिताः, आरोपितत्वेनेति शेषः । ( यदि च "स्तनितं गर्जितं मेघनिर्घोषे" इत्याद्यमरोक्त्या स्तननशब्देन मेघगर्जितमेव बुध्यते, तथाऽपि शब्दमात्रार्थकस्तनधातुनिष्पन्नत्वेन 'स्तनन्त्यः' इति पदस्य गर्भिण्यांस्त्वादृशेऽपि शब्दे प्रयोगः युज्यते । अन्यच्च—"मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् इति वचनान्तरेण स्तनितशब्दस्य सुरतवाचकत्वमपि सिद्धं तस्मात् स्तनधातोः केवलं मेघगर्जितमेवार्थो न, अपि तु सामान्यशब्दमात्रमपि । ननु शब्दमात्रार्थकतायां सिद्धायामपि कथं स्तनन्त्य इति पदेन गर्भिण्याः कुन्थनादिशब्दविशेषस्य उपप्राप्तिरिति चेन्न, उत्सङ्गशयनादीनाम अनाधारणगर्भिणीधर्माणाम् अन्तःपातात् वैचित्र्याधायकत्वाच्च स्तननस्यापि गर्भिणीधर्मरूपत्वस्य युक्तत्वात् वैचित्र्यस्यैव काव्यत्वात् अवश्यमेव तदपेक्षणं न्याय्यम् इति विवेचनीयम् ) ॥ ९९ ॥

समाधिगुणम् उपसंहरति, तदिति ।—तत् तस्मात्, उक्तप्रकारेण भतीववैचित्र्यावहत्वात् इत्यर्थः, समाधिर्नाम यो गुणः एतत् काव्यस्य सर्वं स्वं धनं, सारभूतमित्यर्थः, समग्रः सकलः कविसार्थः अपि कविसमुदायोऽपि, गौडीयः वैदर्भीयो वा इत्यर्थः, तं तथाभूतम्, एनं समाधिम्, अनुगच्छति एतदनुसारेण काव्ये प्रवर्त्तते इत्यर्थः । ( यदि च एतेषां गुणानां दशानां मध्ये केचित् तत्तद्दोषाभावरूपतया केचिच्च अलङ्कृतिरूपतया नव्यैरनाहृताः केवलं त्रय एव गुणा दर्शिताः, यथा—"माधुर्य्यौज

गीतिभेदविवेचनम्।—

**इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात्।**
**तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः॥१०१॥**

प्रसादाख्यास्त्रयस्ते न पुनर्दश" इति,तथाऽपि प्राचां मतमनुसृत्य ग्रन्थकृता गुणत्वेन दश एव निरूपिताः इत्यवधेयम्)॥१००॥

इत्थं गौड़वैदर्भयोर्भेदं वर्णयित्वा तन्निरूपणम् उपसंहरति, इतीति।—इति उक्तप्रकारेण, तयोः गौड़वैदर्भयोः, स्वरूपनिरूपणात् लक्षणकीर्त्तनात्, मार्गद्वयम् उल्लिखितरीतिद्वयं, भिन्नं परस्परविलक्षणं, तद्भेदाः ताभ्यां मार्गाभ्यां, भेदाः भिन्ना इत्यर्थः, लाटपाञ्चालादयः इति यावत्, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्; यद्वा—तद्भेदाः तस्य काव्यमार्गस्य, भेदाः गौड़वैदर्भाभ्यामन्ये प्रकारविशेषाः, प्रतिकवि तत्तद्देशीयकविषु, स्थिताः, तु किन्तु, ते वक्तुं न शक्यन्ते, अतिविस्तारादिति भावः। (तेषां लक्षणानि अन्यैः उक्तानि यथा—"तत्रासमासा निःशेष-श्लेषादिगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥ समस्तपञ्चषपदामोजःकान्तिविवर्जिताम्। मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥ समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम्। गौड़ीयेति विजानन्ति रीतिं रीतिविचक्षणाः॥ अन्तराले तु पाञ्चाली-वैदर्भ्योर्याऽवतिष्ठते। साऽवन्तिका समस्तैः स्यात् द्वित्रैस्त्रिचतुरैः पदैः॥ समस्तरीतिर्व्यामिश्रा लाटीया रीतिरिष्यते। पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी॥" इति। तासु पाञ्चाली यथा—"गात्राभिघातदलिताङ्गदजर्जराणां गण्डस्थलीलुलितकुण्डलताड़ितानाम्। क्षोभस्फुटन्मुकुटकोटिविघट्टितानां नादोऽभवज्झणझणामुखरो मणीनाम्॥"

इक्षुक्षीरगुड़ादीनां माधुर्य्यस्यान्तरं महत्।
तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते॥१०२॥

अत्रौजःकान्तिविरहिता माधुर्य्यसौकुमार्य्यवती षड़धिके पदे समासरहिता च पाञ्चालीरीतिः। तथा आवन्तिका यथा— "एतानि निःसहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति पदानि तस्याः। एते च वल्कतरवः प्रथयन्ति तापमालिङ्गितोज्झितपरिम्लपितैः प्रवालैः॥" सेयं समस्तद्वित्रिचतुष्पदा वैदर्भीपाञ्चाल्योरन्तरालवर्त्तिनी आवन्तिकानाम रीतिः। तथा लाटीया यथा—"अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम्। विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोड़ताम्रस्तमांसि॥" सेयं समस्तरीतिमिश्रा लाटीया नाम रीतिः। तत्र मागधी यथा— "करिकवलनशिष्टैः शाकशाखाग्रपत्रैः अरुणसरणयोऽमी सर्वतो भीषयन्ते। चलितशवरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः॥" सेयमारब्धरीतेरनिर्वाहात् खण्डरीतिमागधी) अथवा तद्भेदाः तयोः गौड़वैदर्भयोः, भेदाः अन्तर्गतविशेषा इत्यर्थः॥ १०१॥

उक्तमर्थं दृष्टान्तेन समर्थयति, इक्ष्विति।—इक्षुक्षीरगुड़ादीनाम् (आदिना मधुरमात्राणां परिग्रहः) माधुर्य्यस्य अन्तरं भेदः, महत् स्फुटतया प्रतीतियोग्यं, तथाऽपि सरस्वत्याऽपि वाग्देव्याऽपि, किमु अन्यैरिति भावः, तत् अन्तरम्, आख्यातुं कथयितुं, न शक्यते; एवमिक्षुप्रभृतीनामिव काव्यमार्गाणां मधुरिम्णः आनन्त्यात् तद्भेदाख्यानमसम्भवमिति स्फुटतया प्रतीयमानभेदं भेदद्वयमेव विशिष्य निरूपितमिति तात्पर्य्यार्थः॥ १०२॥

काव्यस्य कारणानि ।—

नैसर्गिकी च प्रतिभा श्रुतञ्च बहु निर्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥ १०३ ॥

इत्थं काव्यस्वरूपं निरूप्य तत्कारणमाह, नैसर्गिकीति ।— नैसर्गिकी स्वभावसिद्धा, प्रतिभा स्फुरन्ती मतिः, बहु नानाविधं, व्याकरणकोषकलाच्छन्दोगजाश्वादिलक्षणात्मकमित्यर्थः, निर्मलं सम्यक् परिशीलनेन सर्वथा विशुद्धं, श्रुतं शास्त्रज्ञानं लोकाचारादिज्ञानञ्च. तथा अमन्दः प्रगाढः, अभियोगः अभिनिवेशः, काव्याभिज्ञात् शिक्षणेनाभ्यास इत्यर्थः, एतत् त्रयम् अस्याः काव्यसम्पदः काव्यरूपायाः सम्पत्तेः, कारणं हेतुः । । कारणमिति एकवचननिर्देशेन समस्तस्यैव कारणता, न तु प्रत्येकस्य इति सूचितम् । तथा हि काव्यनिर्मितौ यत्नव्युत्पत्तिहीनानां बालकादीनां सत्यामपि प्रतिभायां काव्योत्पत्तेरभावदर्शनात्, तदनन्तरे च काले सञ्जातव्युत्पत्तीनामभ्यासवतां तेषामेव काव्यदर्शनात् तथा यत्नव्युत्पत्तियुक्तानाञ्च केषाञ्चित् प्रतिभामन्तरेण तदभावदर्शनात्, तथा कृतयत्नानां दर्शनात्, अकृतयत्नानाञ्चादर्शनात् समस्तस्यैव कारणत्वं युक्तमिति निर्णयः ; उक्तञ्च प्रकाशकारेण—"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् । काव्यज्ञ-शिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥" व्याख्यातञ्च तत्रैव—"इति त्रयः समुदिता न तु व्यस्ताः, तस्य काव्यस्य, उद्भवे निर्माणे समुल्लासे च, हेतुः, न तु हेतवः" इति । केचित्तु—प्रतिभा एव काव्यकारणं, व्युत्पत्तिस्तु तस्य चारुत्वे हेतुः, अभ्यासो वृद्धिहेतुश्च, प्रतिभा च क्वचित् स्वतः प्रसरति क्वचित् वा देवानुग्रहात्, भक्ति-कवित्वानां बालानां सत्यामपि प्रतिभायां काव्यानुदयात् कालस्य तत्सहकारित्व-

मङ्गोकार्यमित्याहुः । उक्तञ्च—"कवित्वं जायते शक्तेर्वर्द्धते-ऽभ्यासयोगतः । तस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी ॥" एतान्येव वामनेन काव्याङ्गतया दर्शितानि ; तत्र हि प्रथमं स्थावरजङ्गमात्मकस्य लोकस्य वृत्तज्ञानमन्तरेण किं वर्ण्यते इत्यपेक्षायां लोकवृत्तं, ततश्च संस्कृताः शब्दाः, तदनु तदर्थाः, अनन्तरमितिवृत्तवैचित्र्यहेतुः शृङ्गाराङ्गं कलाकौशलं, ततो रसोपयोगी कामव्यवहारः, ततश्चार्थानर्थविवेकहेतुर्दण्डनीतिः, पश्चात् लक्ष्यज्ञत्वादयः इत्यादि क्रमेणोपदेशार्थं "लोको विद्या प्रकीर्णञ्च काव्याङ्गानि" (का० सू० वृ० १अधि० ३अ० १सू० ) इत्येतत् सूत्रं कृतं, ततश्च तस्यैव परिस्फुटार्थं— "लोकवृत्तं लोकः" (का० सू० वृ० १अधि० ३अ० २सू० ) "शब्दस्मृत्यभिधानकोषच्छन्दोविचितिकलाकामशास्त्रदण्डनीति-पूर्वा विद्या" (का० सू० वृ० १अधि० ३अ० ३सू० ) "लक्ष्य-ज्ञत्वमभियोगः वृद्धसेवाऽवेक्षणं प्रतिभानमवधानञ्च प्रकीर्णम्" (का० सू० वृ० १अधि० ३अ० ११सू० ) "तत्र काव्यपरिचयो लक्ष्यज्ञत्वम्" (का० सू० वृ० १अधि० ३अ० १२सू० ) "काव्यबन्धोद्यमोऽभियोगः" (का० सू० वृ० १अधि० ३अ० १३ सू०) "काव्योपदेशगुरुशुश्रूषणं वृद्धसेवा" (का० सू० वृ० १अधि० ३अ० १४सू० ) "पदाधानोद्धरणमवेक्षणम्" (का० सू० वृ० १अधि० ३अ० १५सू०) "कवित्वबीजं प्रतिभानम्" (का० सू० वृ० १अधि० ३अ० १६सू० ) "चित्तैकाग्र्यमवधानम्" (का० सू० वृ० १अधि० ३अ० १७सू० ) इत्येतैः सूत्रैः काव्याल-ङ्कारसूत्रकृता यत् सूचितं, तेन प्रतिभादित्रयस्य काव्यानां निर्माणे समुल्लासे वा हेतुत्वमपि दर्शितम्, एतैर्विना काव्य-शरीरं न सम्भवतीति काव्याङ्गत्वमेतेषां सिध्यति, तदिदं सर्वमनवद्यम् ] ॥ १०३ ॥

कवित्वलाभोपायः।—

न विद्यते यद्यपि पूर्ववासना
गुणानुबन्धि प्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम्॥ १०४॥

तदस्ततन्द्रैरनिशं सरस्वती
श्रमादुपास्या खलु कीर्त्तिमीप्सुभिः।
कृशे कवित्वेऽपि जनाः कृतश्रमा
विदग्धगोष्ठीषु विहर्त्तुमीशते॥ १०५॥

इति आचार्य्य-श्रीदण्डिनः कृतौ काव्यादर्शे मार्गविभागो
नाम प्रथमः परिच्छेदः।

---

उक्तकारणानां सर्व्वेषामभावेऽपि यत्नवतां शास्त्रानुशीलन-पराणां कथञ्चित् फलसिद्धिरित्याशयेनाह, नेति।—यद्यपि पूर्ववासना प्राक्तनसंस्कारः, स्वाभाविकी शक्तिरित्यर्थः, तथा अद्भुतम् अलौकिकं, गुणानुबन्धि वैचित्र्यावहं, काव्यनिर्माणो-त्कर्षजनकमित्यर्थः, प्रतिभानं सुचिक्कणा बुद्धिः, न विद्यते, तथाऽपि श्रुतेन शास्त्रानुशीलनेन, काव्यज्ञोपदेशेन वा, यत्नेन अभिनिवेशेन च, उपासिता सेविता, वाक् ध्रुवं निश्चितं, कमपि अनुग्रहं करोति एव अवश्यमेव काव्यनिर्माणे किञ्चित् सामर्थ्य-मातनोति इत्यर्थः। (सम्यक् सामर्थ्यं तु उक्तत्रितयमेव हेतु-रिति न परस्परं विरोध इति)॥ १०४॥

उपसंहरति, तदिति।—तत् तस्मात्, अस्ततन्द्रैः अस्ता तन्द्रा येषां तैः आलस्यरहितैः इत्यर्थः, कीर्त्तिं कवित्वजनितयशः,

# द्वितीयः परिच्छेदः ।

अलङ्कारसामान्यलक्षणम् ।—

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति? ॥ १

इत्युभिः, जनैः इति शेषः, श्रमात् परिश्रममवलम्ब्य, सरस्वती खलु निश्चयेन, अनिशम् उपास्या सेव्या, अवश्यमेव शास्त्रं परिशीलितव्यमिति भावः । कथमित्याह, कृश इति ।—कवित्वे काव्यकरणसामर्थ्ये, कृशे अल्पेऽपि, कृतश्रमाः कृतशास्त्रपरिशीलनप्रयासा जनाः, विदग्धगोष्ठीषु कविसमाजेषु, विहर्त्तुम् ईशते प्रभवन्ति, अल्पस्यापि शब्दज्ञाने कारणे च ऐहिकामुष्मिकफलसिद्धिर्भवति, "एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे लोके च कामधुग्भवति" इति श्रुतेः ॥ १०५ ॥

इति श्रीजीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां
काव्यादर्शटीकायां प्रथमः परिच्छेदः ।

काव्यनिरूपणानन्तरं तदुत्कर्षजनकधर्मान् अलङ्कारान् निरूपयितुं यतमानः परिच्छेदेऽस्मिन् तत्तद्विशेषालङ्कारान् निरूपयिष्यन् प्रथमं तेषां सामान्यलक्षणं निरूपयति, काव्यशोभाकरानिति ।—काव्यस्य "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली" इत्युक्तलक्षणस्य काव्यशरीरस्येत्यर्थः, शोभा सौन्दर्य्यं, तत्तद्विशेषकृतचमत्कारजनकवैचित्र्यमित्यर्थः, तत्करान् तत्साधनानि, धर्मान् शब्दार्थगतानतुप्रासोपमादीन्, अलङ्कारान् प्रचक्षते वदन्ति, कवय इति शेषः; यथा हारकुण्डलादयः शरीरशोभा-

सम्पादनात् अलङ्कारपदवाच्याः, तथा अनुप्रासोपमादयः काव्य-शरीरभूतयोः शब्दार्थयोरुत्कर्षजननादलङ्कारा इति भावः। [ अत्रैवं विवेकः,—काव्यस्य शब्दार्थस्वरूपेणोक्तत्वात् तच्छोभा-सम्पादकधर्मा अलङ्काराः पुनः शरीरभूतशब्दार्थनिष्ठा एवेति निश्चीयते। ननु गुणानामपि उपक्रमोपसंहारलिङ्गैराचार्य्य-तात्पर्य्यपर्य्यालोचनायां शब्दार्थनिष्ठत्वेनालङ्कारैरभेदापत्तिरिति चेन्न, काव्यशोभाकरपदस्य शोभातिशयहेतुत्वे विवक्षणीय-त्वात् तद्दोषपरिहारः, तथा हि कैवल्येन शब्दार्थशोभाकरा गुणाः, गुणसाहचर्य्यभावेन शब्दार्थशोभातिशयहेतवश्चालङ्कारा इति प्राचीनोक्त एवानयोर्भेदः मन्तव्यः। उक्तञ्च वामनेन —"काव्यशोभायाः कर्त्तारो धर्मा गुणाः" ( का० सू० वृ० ३ अधि० १ अ० १ सू०) "तदतिशयहेतवस्त्वलङ्काराः"(का० सू० वृ० ३ अधि० १ अ० २ सू० ) इति। नव्यास्तु "काव्यस्य शब्दार्थौ शरीरं, रसादिश्चात्मा, गुणाः शौर्य्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादि-वत्" एवं प्रमाणीकुर्वाणाः गुणालङ्कारयोर्भेदं कल्पयन्ति ; तथा हि काव्यात्मभूतस्य रसस्यैव धर्माः माधुर्य्यौजःप्रसादास्त्रय एव गुणशब्दवाच्याः अलङ्काराश्च शब्दार्थशोभाजननेन रस-स्योत्कर्षकाः इति गुणानां रसाश्रयत्वेनालङ्काराणां शब्दार्था-श्रयत्वेन च पृथगाश्रयत्वादनयोः भेदः। गुणत्वादोजःप्रभृतीना-मात्मनि समवायवृत्त्या स्थितिः, अलङ्कारत्वादनुप्रासोपमादीनां शरीरे संयोगवृत्त्या स्थितिरिति तेषामाशयः। नैतत् युक्तमुत्पश्यामः, नव्यानां मते गुणानां रसधर्मत्वात् शब्दार्थ-गतत्वव्यवस्थायाः असम्भवात् प्रोक्तलक्षणात्मकमाधुर्य्यादीनां रसत्वाङ्गीकारेणैव सिद्धे गुणत्वाङ्गीकारवैफल्यात्, तादृश-गुणानां रसाव्यभिचारित्वाच्च, तथा नीरसेऽपि बहुलाक्ष-

पूर्वाचार्य्यपथानुसरणम् ।—

किन्तु वीजं विकल्पानां पूर्वाचार्य्यैः प्रदर्शितम् ।
तदेव परिसंस्कर्त्तुमयमस्मत्परिश्रमः ॥ २ ॥

---

ङ्कारिकैः काव्यत्वेनाङ्गीकृते संलच्यक्रमव्यङ्गप्रभेदे चित्ते अलङ्कार-लक्षणायोगात् इति । किञ्च काव्यस्य रसस्यात्मा इति यदुच्यते, तत्र किं गुणसमष्टिविशिष्टं काव्यम् ? तद्व्यष्टिविशिष्टं वा ? नाद्यः, एकैकगुणोदाहरणेषु काव्यत्वाभावप्रसङ्गात्, नापि द्वितीयः, वस्त्वलङ्कारध्वनिषु रसाभावादेव गुणस्यैवाभावात् । किञ्च, किं रसाः सर्वे सम्भूय काव्यात्मीभवन्ति ? उत एको रसः ? तत्र प्रथमपक्षे न कुत्रापि काव्यात्मसम्भावना, विरोधिरसानामेकाधिकरणत्वासम्भवात्, द्वितीये वस्त्वलङ्कारध्वनिषु रसाभावात् काव्यव्यवहाराभावप्रसङ्गः । अतः प्राचां मतमेव प्रागुक्त-मस्माभिः सादरमाश्रीयते ; उक्तञ्च—"यदि भवति वचश्च्युतं गुणेभ्यः वपुरिव यौवनवन्ध्यमङ्गनायाः । अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥" इति ] विवक्षितव्येषु अलङ्काराणां विशेषलक्षणेषु स्वकीयायोग्यताप्रकाशपुरःसर-मौद्धत्यं परिहरति, ते चेति ।—ते च अलङ्काराः, अद्यापि विकल्पान्ते विविधरूपेण उद्भाव्यन्ते, भङ्ग्या किञ्चिद्वैचित्र्यं प्रतिपाद्य विस्तार्य्यन्ते इत्यर्थः, नवीनैः कविभिरिति शेषः, अतः कः पण्डितः, तान् कार्त्स्न्येन साकल्येन, वक्ष्यति निरूपयिष्यति ? न कोऽपि निरूपयितुं शक्यतीत्यर्थः, उक्तिवैचित्र्यस्यैवालङ्कार-त्वात् तस्य च कल्पनैकमूलत्वात् कल्पनायाश्च कदाऽप्यविरामात् साकल्येन तन्निरूपणं नैव सम्भवति इति भावः ॥ १ ॥

यदि कार्त्स्न्येन वक्तुमशक्या अलङ्कारविशेषास्तदा भवता किं न निरूपणीयाः ? इत्याशङ्कामपनेतुमाह, किन्त्विति ।—किन्तु

शब्दालङ्कारस्य प्रागभिहितत्वम् ।—

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः ।
साधारणमलङ्कारजातमन्यत् प्रदर्श्यते ॥ ३ ॥

अर्थालङ्कारविभागाः ।—

स्वभावाख्यानमुपमा रूपकं दीपकावृती ।
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ॥४॥
समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः ।
प्रेयो रसवदूर्जस्वि पर्य्यायोक्तं समाहितम् ॥५॥

---

विकल्पानां विविधकल्पनानां, नवीनप्रोक्तालङ्कारभेदानामित्यर्थः, बीजं मूलं, 'सादृश्यम् उपमा' इत्यादिसामान्यलक्षणरूपमित्यर्थः, पूर्वाचार्य्यैः प्रदर्शितं निरूपितं, यत् उपजीव्य नव्यानां वैचित्र्यभेदेन नाना कल्पना इति भावः, तदेव पूर्वाचार्य्यप्रदर्शितबीजीभूतम् अलङ्कारलक्षणमेव इत्यर्थः, परिसंस्कर्त्तुं सम्यक् स्फुटीकर्त्तुम्, अयम् अस्माकं परिश्रमः प्रयासः ॥२॥

रीतिभेदप्रसङ्गात् पूर्वनिरूपितश्रुत्यनुप्रासादिभिन्नानामेव निरूपणं विधेयमित्याह, काश्चिदिति ।—काश्चित् अलङ्क्रियाः श्रुत्यनुप्रासादयः अलङ्काराः, मार्गविभागार्थं रीतिविभेददर्शनार्थं, प्रागपि पूर्वमेव, उक्ताः, अलङ्कारनिरूपणप्रतिज्ञया तेषामपि प्राप्तौ निरूपितनिरूपणं व्यर्थमेवेति पुनर्न ते वक्तव्या इति भावः, इदानीमन्यत् उक्तेभ्यो भिन्नं, साधारणं मार्गद्वयसमानम्, अलङ्कारजातं प्रदर्श्यते निरूप्यते ॥ ३ ॥

अलङ्कारान् निर्दिशति, स्वभावेत्यादिचतुर्भिः श्लोकैः ।—स्वभावाख्यानं स्वभावोक्तिः, दीपकञ्च आवृतिरावृत्तिश्च ते दीपकावृतौ, समासः समासोक्तिः, अतिशयः अतिशयोक्तिः,

उदात्तापह्नुतिश्लेष-विशेषास्तुल्ययोगिता।
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुति-निदर्शने॥ ६॥
सहोक्तिः परिवृत्त्याशीः सङ्कीर्णमथ भाविकम्।
इति वाचामलङ्कारा दर्शिताः पूर्वसूरिभिः॥७॥

(कलापकम्)।

स्वभावोक्तिः।—

नानावस्थं पदार्थानां रूपं साक्षात् विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या साऽलङ्कृतिर्यथा॥८॥

---

समाहितं समाधिः, अप्रस्तुतस्तोत्रम् अप्रस्तुतप्रशंसा, इति उक्तप्रकारेण नामतो निर्दिष्टाः, वाचां वाक्यानाम्, अलङ्काराः स्वभावोक्त्यादिभाविकपर्य्यन्ताः पञ्चत्रिंशत्सङ्ख्यकाः, पूर्वसूरिभिः प्राचीनकविभिः, दर्शिताः। (वाचाम् इत्यनेन लक्षितानामलङ्काराणामेषामर्थगतत्वेऽपि वाक्यगतत्वोक्तिर्वाच्यवाचकयोरभेदाङ्गीकारादित्यवधेयम्। तथा चोक्तं पातञ्जलसूत्रभाष्यव्याख्याने महर्षिणा व्यासेन—"स्थितोऽस्य वाचकस्य वाच्येन सहाभेदः सम्बन्धः" इति)॥ ४॥ ५॥ ६॥ ७॥

स्वभावोक्तिं निरूपयति, नानेति।—पदार्थानां जातिगुणक्रियाद्रव्याणां, नाना अवस्था बहुविधा दशा यस्य तादृशं, रूपं स्वरूपं, वर्णात्मकं संस्थानात्मकञ्च धर्ममित्यर्थः, साक्षात् प्रत्यक्षमिव, विवृण्वती प्रदर्शयन्ती, सा प्रसिद्धा, आद्या प्रथमा सर्वाद्या वा, यथार्थनिरूपणसारत्वादिति भावः, अलङ्कृतिः अलङ्कारः, स्वभावोक्तिश्च जातिश्च इति नामद्वयवती, (अस्याः प्राथम्यं जातिसंज्ञाञ्च भोजराजेनाप्युक्तं—"ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसंज्ञया। जातिर्विभावना हेतुः—" इत्यादि। तत्र जातिलक्षणं यथा—"नानाऽवस्थासु जायन्ते यानि रूपाणि

**तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः।**
**त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः॥८॥**

वस्तुनः। स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते॥" इति। तथा च पदार्थानां नानावस्थस्वरूपस्य कविप्रतिभया वैचित्र्येण वर्णनं स्वभावोक्तिरिति निष्कर्षः। (नानावस्थमित्यनेन एकरूपाया अवस्थायाः कीर्त्तने न अयमलङ्कारः, वैचित्र्याभावात्, वैचित्र्यस्य एव अलङ्कारत्वात् इति सूच्यते; यथा—"अम्भोदमुदितं दृष्ट्वा मुदा नृत्यन्ति बर्हिणः" इत्यत्र वस्तुस्वरूपनिरूपणेऽपि वैचित्र्याभावात् न अलङ्कारता। अत्र रूपपदं क्रियाया उपलक्षणम् इति केचित्। उक्तञ्च प्रकाशकारेण यथा—"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्" इति। वस्तुतस्तु क्रियारूपयोर्वर्णने प्रकाशकृता स्वभावोक्तिरित्युक्तम्, आचार्य्यस्तु रूपवर्णनमेव स्वभावोक्तिरित्याह। तच्च रूपं सहजमागन्तुकञ्च इति द्विविधम्; यदुक्तं—"स्वभाव एव भावानां स्वरूपमभिधीयते। निजमागन्तुकञ्चेति द्विविधं तदुदाहृतम्॥" इति। केचित्तु वस्तुस्वरूपोल्लेखनरूपार्थव्यक्तिमर्थगुणेषु कथयन्ति, तेषां मते स्वभावोक्तेर्गुणत्वम्। सार्वकालिकस्य वस्तुनो रूपोट्टङ्कने गुणत्वं,जायमानागन्तुकरूपवर्णने त्वलङ्कारत्वमिति भोजः; यदाह—"अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते। जायमानमियं वक्ति रूपं सा सार्वकालिकम्॥" इति) यथेति परोक्तस्य उदाहरणस्य सूचकम्॥ ८॥

प्रथमं जातौ उदाहरति, तुण्डैरिति।—एते मञ्जुगिरः मधुरप्रलापिनः, शुकाः आताम्राणि आलोहितानि, कुटिलानि च तैः तुण्डैः मुखैः, हरिताः पालाशवर्णाः, कोमलाश्च तैः पक्षैः तथा त्रयाणां वर्णानां हरितरक्तधूसराणां, राजयः रेखाः येषु

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः।
पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम् ॥१०॥
बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम्।
नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्त्तते ॥ ११ ॥
कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः।
जटाभिः स्निग्धताम्राभिराविरासीत् वृषध्वजः ॥१२॥

तादृशैः कण्ठैः उपलक्षिता इत्यर्थः। (सर्वत्र विशेषणे तृतीया। अत्र शुकजातेः तादृशतुण्डत्वादिकम् असाधारणं रूपं संस्थानञ्च पूर्वमप्रत्यक्षायमाणमपि वर्णनावैचित्र्येण साक्षादिव प्रतीयते इति, तथा शुकशब्दस्य बहुव्यक्तिवाचित्वादियं जातिगता स्वभावोक्तिः) ॥ ९ ॥

क्रियायामुदाहरति, कलेति।—कलं मधुरं, क्वणितं गर्भे यस्य तादृशेन कण्ठेन उपलक्षितः, (विशेषणे तृतीया) तथा आघूर्णिते ईक्षणे नेत्रे यस्य तथाभूतः,पारावतः रिरंसुः रन्तुमिच्छुः सन्, परिभ्रम्य प्रियां चुम्बति। (पारावतानामुक्तविधचुम्बनं स्वाभाविकमिति क्रियागता स्वभावोक्तिरिति अवगन्तव्यम्)॥१०॥

गुणोदाहरणं दर्शयति, बध्नन्निति।—एष प्रियायाः स्पर्शः अङ्गेषु रोमाञ्चं बध्नन् जनयन्, मनसि निर्वृतिं सातिशयानन्दं, कुर्वन् तथा नेत्रे आमीलयन् मुद्रयंश्च, प्रवर्त्तते प्रसरति। (अत्र स्पर्शो गुणः इति गुणगतेयम्)॥ ११ ॥

द्रव्योदाहरणं दर्शयति, कण्ठे इति।—कण्ठे कण्ठदेशे, कालः नीलः, (कण्ठेकालशब्दः अलुक्तत्पुरुषनिष्पन्नः) करस्थेन कपालेन, स्निग्धताम्राभिः जटाभिरिति च (विशेषणे तृतीया) इन्दुशेखरः चन्द्रचूडः, वृषध्वज आविरासीदित्यन्वयः।

जातिक्रियागुणद्रव्य-स्वभावाख्यानमीदृशम् ।
शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम् ॥१३॥

उपमासामान्यलक्षणम् ।—

यथाकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा तस्याः प्रपञ्चोऽयं निदर्श्यते ॥१४॥

( अत्र वृषध्वजशब्दो द्रव्यवाचकः, संज्ञाशब्दस्य द्रव्यवाचकत्वात् । एवञ्च द्रव्यपदं वैयाकरणोक्तैकव्यक्तिवाचकद्रव्यपरं, वैशेषिकोक्तानां क्षित्यादिनवद्रव्याणां जातिपदेन ग्रहणादित्यवधेयम् । द्रव्यभूतस्य शिवस्य कण्ठकालत्वादिनानाधर्मप्रदर्शनपुरःसरवर्णनेन स्वरूपस्फुटीकरणात् वैचित्र्यमावहतीति द्रव्यगता स्वभावोक्तिरिति ) ॥ १२ ॥

स्वभावोक्तिमुपसंहरन्नाह, जातीति ।—जातिक्रियागुणद्रव्याणां जातिः गोपिण्डादिषु गोत्वादिका, क्रिया पूर्वापरीभूतावयवा कर्मरूपा, गुणः रूपादिः, द्रव्यम् एकव्यक्तिबोधकचैत्रमैत्रादिसंज्ञाशब्दप्रतिपाद्यस्वरूपं, तेषां स्वभावाख्यानं स्वभावोक्तिः, ईदृशम् एवम्प्रकारम्, अनयैव दिशा सर्वत्रैव स्वभावो वर्णनीय इति भावः ; अस्यैव स्वभावाख्यानस्यैव, शास्त्रेषु दर्शनेतिहासादिषु, साम्राज्यम् आधिपत्यं, बहुलप्रचार इत्यर्थः, एतच्च काव्येषु काव्यशास्त्रेषु अपि, ईप्सितं प्रियं, कवीनामिति शेषः, कवयः स्वभावोक्तिमेव विशेषेण आद्रियन्ते इति भावः ॥१३॥

उपमां निरूपयति, यथेति ।—यत्र वैचित्र्ये, यथाकथञ्चित् येन केनापि धर्मेण गुणेन क्रियया अन्येन वा इत्यर्थः, उद्भूतं प्रस्फुटम्, अभिधेयमित्यर्थः, सादृश्यं साम्यम्, उपमानोपमेययो-

रेकधर्मवत्त्वमित्यर्थः, (साम्यं सारूप्यं साधर्म्य सादृश्यमिति च पर्य्यायशब्दत्वेनाभिन्नार्थकमिति बोध्यम्) प्रतीयते उपमानोपमेय-तन्निष्ठसमानधर्मादिप्रतीतिर्भवति इत्यर्थः, सा वैचित्र्यरूपा, उपमानाम अलङ्कारः। (अत्रेदं ज्ञेयं यत्—उपमायां घटकतया त्रयः पदार्था विद्यन्ते उपमानमुपमेयं समानधर्मश्चेति; इह तु सादृश्यपदेनैव उपमानोपमेयत्वयोर्लाभः, सादृश्यस्य तदुभय-सम्बन्धित्वात्, तत्रोपमीयते उत्कृष्टगुणेन चन्द्रादिना सादृश्यमानीयते अन्यन्मुखादिकं येन तदुपमानं, यत्तु न्यूनगुणमुत्कृष्टगुणेनान्येनोपमीयते तदुपमेयम्। "उत्कृष्टगुण-वत्त्वया सम्भाव्यमानमुपमानम्, अपकृष्टगुणवत्त्वया सम्भाव्यमान-मुपमेयम्" इति केचित्। "सादृश्यप्रतियोगि उपमानं, सादृश्यानुयोगि उपमेयम्" इत्यपरे। उपमानोपमेयगतो धर्मः समानधर्मः, ततश्च इवादिपदवाच्यमुपमानोपमेयोभय-सम्बन्धि वैचित्र्यजनकं सादृश्यमुपमा इति लक्षणम्। यथा —"कमलमिव मुखं मनोज्ञमेतत्" इत्यादौ मनोज्ञत्वधर्म-संसर्गात् मनोज्ञतया स्वतः प्रसिद्धेन कमलेन मुखमुपमीयते मनोज्ञत्वं समानो धर्मः कमलमुपमानमेवं मुखमुपमेयमिति पदार्थत्रयसमावेशादुपमाऽलङ्कारत्वम् इति। वैचित्र्याभावे तु नायमलङ्कारः, यथा गौरिव गवय इत्यादि। अत एव रस-गङ्गाधरे—"सादृश्यं सुन्दरं वाक्यार्थोपस्कारकम् उपमाऽलं-कृतिः" इत्युपमाऽलङ्कारलक्षणे सुन्दरमिति सादृश्यविशेषणं, व्याख्यातञ्च तत्रैव, "सौन्दर्य्यं चमत्कृत्याधायकत्वं, चमत्कृतिश्च आनन्दविशेषः" इति। उपमानोपमेयगतधर्माश्च गुणक्रियादि-रूपाः यथासम्भवमत्रावगन्तव्याः, यथा—"हंसीव धवला कीर्त्तिः" इत्यत्र धवलत्वं गुणः, "सलीलमियमायाति वधूर्गज-वधूरिव" इत्यत्रागमनक्रिया, "आकाशः काशतेऽत्यर्थं शिववद्भिक्षु-

धर्मोपमा।—

**अम्भोरुहमिवाताम्रं मुग्धे! करतलं तव।**
**इति धर्मोपमा साक्षात् तुल्यधर्मप्रदर्शनात्॥१५॥**

भूषणः" इत्यत्र च विधुरूपद्रव्यं सादृश्यधर्मः, स च शब्दोपात्त एव। क्वचिदनुपात्ता अपि ते धर्माः स्वयमूहनीयाः, यथा—"मुखमिन्दुर्यथा" इत्यत्र मनोज्ञत्वधर्मः अनुपात्तोऽपि प्रतीयते। तस्य च धर्मस्य क्वचिद्वस्तुनोऽभिन्नत्वेनैकरूपत्वं, क्वचिदेकशब्द-प्रतिपाद्यत्वं, क्वचिद्बिम्बानुबिम्बत्वं, तच्चोक्तं विश्वनाथेन—"एक-रूपः क्वचित् क्वापि भिन्नः साधारणो गुणः। भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा॥" इति। एकरूपे यथोदाहृतं—"मधुरः सुधावदधरः" इत्यादि। बिम्बप्रतिबिम्बत्वे यथा—"भल्लाप-वर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्। तस्तार सरघाव्याप्तैः सक्षौद्रपटलैरिव॥" अत्र 'श्मश्रुलैः' इत्यस्य 'सरघाव्याप्तैः' इति दृष्टान्तवत् प्रतिबिम्बनम्। शब्दमात्रेण भिन्नत्वे यथा—"स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं सा।" अत्र एक एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्दभेदेन निर्दिष्टे इति) तस्याः प्रपञ्चः विस्तरः, विविधभेदः इत्यर्थः, अयं वक्ष्यमाणरूपः, निदर्श्यते प्रदर्श्यते॥ १४॥

धर्मोपमाख्यभेदमुदाहरति, अम्भोरुहमिति।—हे मुग्धे! तव करतलम् अम्भोरुहमिव कोकनदमिव, आताम्रम् आलोहितम्, इति उक्तवाक्ये, साक्षात् तुल्यधर्मस्य आताम्रमिति पदोपात्तस्य साधारणधर्मस्य आताम्रत्वस्य, प्रदर्शनात् कीर्त्तनात्, धर्मोपमा। (अत्र 'अम्भोरुहमिव' इति पदमसमस्तम्, इवशब्दः सादृश्यवाची, तत्र अम्भोरुहस्य भेदेनान्वयः, उपमानोपमेय-स्थले हि समानविभक्तिकत्वस्य नियमात् न च भेदलक्षणा

वस्तूपमा।—

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव।
इयं प्रतीयमानैक-धर्मा वस्तूपमैव सा॥ १६॥

षष्ठीविभक्तिः; यदुक्तं—"विभक्तिः पुनरेका स्यादुपमानोपमेययोः" इति। अत एव अभेदान्वयस्थले यथा विशेष्यविशेषणयोः समानविभक्तित्वं, तथा चन्द्र इव मुखं भाति, चन्द्रमिव मुखं पश्यामि, चन्द्रेणेव मुखेन शोभसे इत्यादौ समाना विभक्तिः; ततश्च अम्भोरुहसदृशं करतलमिति बोधः, षष्ठीस्थानीयतया इवशब्द एव उपमानोपमेययोः सादृश्यलक्षणमभिधया बोधयति। केचिदत्र अम्भोरुहमिव इति पदं समस्तम् "इवेन नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वञ्च" इत्यनुशासनात्,लक्षणया अम्भोरुहपदं तत्सदृशार्थकम्, इवशब्दश्च सादृश्यद्योतकः इति मन्यन्ते, तन्मते लक्षणागम्यं सादृश्यम्। उपमानोपमेययोरभेदेनान्वयाच्च सम्भवत्येव समानविभक्तित्वमिति दिक्। पूर्णोपमेयमिति दर्पणकारः; तथा हि, करतलमुपमेयम्, अम्भोरुहमुपमानं, साधर्म्यमातास्रमिव पदञ्चात्र सादृश्यवाचकं, सर्वस्यैव वाच्यत्वात्, तथा इवपदेन सादृश्यप्रतीतेः श्रौती चेयमिति)॥ १५॥

वस्तूपमां लक्षयति, राजीवमिति।—ते तव, वक्त्रं मुखं, राजीवं पद्ममिव, तथा नेत्रे नीलोत्पले इव, प्रतीयमानः गम्यमानः, न तु अभिधीयमानः इति भावः, एकः सामान्यः, धर्मः यस्यां सा तथाविधा, इयम् अलङ्कृतिः, वस्तूपमा एव वस्तुनोरुपमानोपमेययोः एवोपादानात्। एवञ्च सामान्यधर्माप्रयोगेऽपि स्फुटसादृश्यानामौपम्यप्रतीतेर्धर्मं विना साधर्म्यप्रतीतेरभावादिति ज्ञेयम्। (विश्वनाथस्तु श्रौतीं लुप्तोपमामिमामाह।

विपर्य्यासोपमा।—

तवाननमिवोन्निद्रमरविन्दमभूदिति।
सा प्रसिद्धेर्विपर्य्यासात् विपर्य्यासोपमेष्यते ॥१७॥

---

प्राञ्चस्तु तदनङ्गीकुर्वाणाः वस्तूपमेयमित्याहुः; तथा चोक्तमाग्नेये—“यत्र साधारणो धर्मः कथ्यते गम्यतेऽथवा। ते धर्म-वस्तुप्राधान्यात् धर्म-वस्तूपमे उभे॥” इति ) ॥ १६ ॥

विपर्य्यासोपमां लक्षयति, तवेति।—अरविन्दं पद्मं, तवाननमिव त्वदीयं मुखसदृशम्, उन्निद्रं विकसितम्, अभूत्, इति एवं, प्रसिद्धेः विपर्य्यासात् वर्णनीया हि प्रस्तुतमुखादयः उपमेयाः, तदुत्कर्षताप्रतिपत्तये कविनिबद्धैरुपात्ता अप्रस्तुतारविन्दचन्द्रादयः उपमानानीति प्रसिद्धिः, तस्याः विपर्य्यासः वैपरीत्यं, प्रस्तुतानां मुखादीनाम् उपमानत्वरूपम् अप्रस्तुतानां चन्द्रादीनाम् उपमेयत्वरूपमित्यर्थः, तस्मात्, सा विपर्य्यासाख्या उपमा इष्यते इत्यन्वयः। (आननमिव इत्यत्र उपमानपदोत्तरप्रयुज्यस्येवपदस्याननपदसान्निध्यात् आननस्योपमानत्वप्रतीतेरत्र प्रसिद्धिविपर्य्यासः बोद्धव्यः। दर्पणकारस्तु नेयमुपमा किन्तु प्रतीपालङ्कार इत्याह; यथा—“प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥” इति। उदाहृतञ्च तेनैव—“यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी। येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥” इति। अत्र नेत्रादीनामुपमेयत्वमिन्दीवरादीनामुपमानत्वमिति प्रसिद्धौ येयमत्यनुरागान्नेत्रादिषु आधिक्यबुद्धिः, नात्यनुरागादिन्दीवरादिषु

अन्योऽन्योपमा।—

तवाननमिवाम्भोजमम्भोजमिव ते मुखम्।
इत्यन्योऽन्योपमा सेयमन्योऽन्योत्कर्षशंसिनी॥१८॥

---

तदनुकारबुद्धिः, तयेह रामेण विरहिणा अभिधीयमानसादृश्यानाममीषां परस्परम् उपमानोपमेयभावः प्रसिद्धस्योपमानस्योपमेयत्वकल्पनसिद्ध इति )॥ १७॥

अन्योऽन्योपमां निरूपयति, तवेति।—अम्भोजं तव आननमिव, ते मुखम् अम्भोजमिव, इत्यत्र, अन्योऽन्यस्य परस्परस्य, अम्भोजोपमानत्वेन मुखस्य, मुखोपमानत्वेन अम्भोजस्य इत्यर्थः, यः उत्कर्षः वैचित्र्यं, तस्य शंसिनी सूचयित्री, सा प्रसिद्धा, इयम् अन्योऽन्योपमा। (अत्रायं विवेकः,—"यदेव वर्णनीयमाननादिकं तदेव भवति सर्वत्र प्रस्तुततया ख्यातं, तदुत्कर्षविशेषप्रतिपादनार्थञ्च कविभिरप्रस्तुतकमलादिकमुपमानमुपन्यस्यते, इह तु मुखाम्भोजयोर्द्वयोरेव प्रस्तुतत्वमवश्यमङ्गीकार्य्यम्, अन्यथा अप्रस्तुतभूतकमलादेरुत्कर्षप्रकाशप्रयासः क्लेशहेतुरेव स्यात्, अनन्यसदृशत्वप्रतिपादनार्थञ्च परस्परस्योपमानोपमेयत्वकल्पनं, ततश्च उपमेयस्य कस्यापि स्थलान्तरवन्न्यूनगुणत्वमपि नाशङ्कनीयमिति सुधीभिर्विभाव्यम्, एतेन पर्य्यायेण परस्परस्योपमानोपमेयभावविवक्षाया वैचित्र्यजनकत्वात्। मुखमम्भोजञ्च तुल्यमित्यादौ तथा प्रतीतौ अपि वैचित्र्याभावात् न अयमलङ्कारः। दर्पणकारस्तु एतामेव उपमेयोपमामाह; यथा—"पर्य्यायेण द्वयोरेतत् उपमेयोपमा मता" इति। उदाहरणान्तरं यथा—"हासः प्रसूनमिव हासमिव प्रसूनं पाणिः प्रवाल इव पाणिरिव प्रवालः। केशो द्विरेफ इव केश इव द्विरेफः सा भाति वीरुदिव सेव विभाति वीरुत्॥" इति। अत्र च

नियमोपमा।—

त्वन्मुखं कमलेनेव तुल्यं नान्येन केनचित्।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥१९॥

अनियमोपमा।—

पद्मं तावत् तवान्वेति मुखमन्यच्च तादृशम्।
अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा ॥२०॥

---

उपमेयेन उपमा सादृश्यं यत्र सा उपमेयोपमा इत्यन्वर्थबलात् सदृशोपमानान्तराभावत्वं प्रतीयते, ततश्च यत्रोपमानान्तरतिरस्कारो न प्रतीयते तत्र नायमलङ्कारः। यथा—"सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः। यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि॥" इति। न ह्यत्र उपमानान्तरतिरस्करणं विवक्षितं, किन्तु सुखदुःखवशीकृतमनसामिदं विपरीतं भवतीति प्रतीतिः। भोजस्तु एतामुभयोपमामाह )॥ १८ ॥

नियमोपमां लक्षयति, त्वदिति।—त्वन्मुखं कमलेन एव तुल्यम्, अन्येन केनापि न, इति अत्र, अन्यस्य साम्यं सादृश्यं, तस्य व्यावृत्तिः निरासः तस्याः हेतोः, इयं सा प्रसिद्धा, नियमोपमा, उपमानबाहुल्यम् उपमेयस्यापकर्षं गमयति, तद्व्यावृत्त्या एकेन प्रकृष्टतमेन सादृश्यकल्पनात् उत्कर्षातिशयः समधिकवैचित्र्यम् आवहतीति ध्येयम् ॥ १९ ॥

अनियमोपमां निरूपयति, पद्ममिति।—तव मुखं पद्मं तावत् अन्वेति अनुकरोति, अन्यच्च तादृशं पद्मवत् सुन्दरं वस्तु चन्द्रादि, अन्वेतीति पूर्वेणान्वयः। लक्ष्यं प्रदर्श्य लक्षणं सङ्गमयति, अस्तीति।—तत्कारि पद्मानुकारि, सदृशोपमानान्तरभूतं वस्त्वित्यर्थः, अस्ति चेत् अस्तु उपमान-

समुच्चयोपमा।—

समुच्चयोपमाऽप्यस्ति न कान्त्यैव मुखं तव।
ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥२१॥

अतिशयोपमा।—

त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥

---

बाहुल्यं भवति चेत् न काचित् क्षतिरिति भावः; इति अस्मात्, एकोपमानेन साम्यप्रतिपादननियमाभावादित्यर्थः, असौ अनियमोपमा, पद्मस्य तदन्यस्य च यस्य कस्यचित् अपि उपमानकल्पनात् कल्पनायाश्च नियमाभावात् इति भावः। (अत्र केचित् पद्मं कर्त्तृपदं मुखञ्च कर्मपदमिति कृत्वा पद्मं तव मुखमन्वेति इत्यन्वयं विदधुः, तेन च मुखस्योपमानत्वम्, अत एव वैचित्र्यातिशयः, वैपरीत्ये तु न तथेति तेषामाशयः; तन्न समीचीनं, प्रसिद्धस्योपमानस्य उपमेयत्वकल्पने विपर्य्यासोपमाया अभ्युपगमात् इत्यवधेयम्। नियमोपमायामेकमेवोपमानम्, इह तु तत्सदृशमपरमपीति द्वयोर्भेदः) ॥ २० ॥

समुच्चयोपमामाह, समुच्चयेति।—तव मुखं कान्त्यैव केवलया कान्त्या, न, ह्लादनाख्येन प्रह्लादनजनकेन, कर्मणा च, (चकारः समुच्चयद्योतकः) इन्दुं चन्द्रम्, अन्वेति अनुगच्छति, अनुकरोतीत्यर्थः, इति ईदृशी एवम्प्रकारा, समुच्चयोपमा अपि अस्ति। (ईदृशीत्यनेन केवलगुणसमुच्चये केवलक्रियासमुच्चये वा साधारणसमुच्चयेऽपि वा अयमलङ्कारो बोद्धव्यः) ॥ २१ ॥

अतिशयोपमां निरूपयति, त्वयीति।—तव मुखं त्वयि एव दृष्टं, चन्द्रमाः दिवि आकाशे, दृश्यते, इयती आश्रयमात्र-

उत्प्रेक्षितोपमा ।—

**मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।**
**पद्मेऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥**

निबन्धना एव, भिदा प्रभेदः, मुखचन्द्रमसोरिति शेषः, न अन्या न गुणक्रियादिकृता इति भावः, असौ अतिशयोपमा, अतिशयश्च मुखचन्द्रमसोः विभिन्नाश्रयगतत्वेन गुणक्रियाकारादिगतत्वेन च सत्यपि महति भेदे नान्येत्यनेनाभिन्नत्वारोपरूपः, ईदृशातिशयस्य वैचित्र्यातिशयप्रतिपादकत्वात् अतिशयाख्येयमुपमा इति दिक् । ( अत्र साहश्यवाचकेवादिशब्दाप्रयोगात् साहश्यं व्यञ्जनागम्यं, व्यञ्जना च वक्तृतात्पर्यगतया भेदाभेदप्रतीत्या लब्धावकाशा ; न च अत्र रूपकध्वनिः, आश्रयभेदेन भेदस्यैव स्पष्टतया प्रतिपादनेन अभेदप्रतीतेरभावादिति ध्येयम् ) ॥ २२ ॥

उत्प्रेक्षितोपमां लक्षयति, मयीति ।—अस्या मुखश्रीः मुखकान्तिः, मुखसदृशकान्तिरित्यर्थः, मयि एव न अन्यत्र, इन्दोः चन्द्रस्य, इति एवं, विकत्थनैः आत्मश्लाघनैः, अलं, यत् यस्मात्, सा कान्तिः, पद्मेऽपि अस्ति पद्ममपि तत्सदृशकान्तीत्यर्थः, असौ उत्प्रेक्षितोपमा, इन्दौ आत्मश्लाघाया अतात्त्विकत्वेन नायकस्य चाटूक्त्या तथा समारोपितत्वादिति भावः । ( साम्यञ्च अत्र व्यङ्ग्यम् । नव्यास्तु अत्र चन्द्रस्य विकत्थनाऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिरित्याहुः । केचिदत्र उत्प्रेक्षितोपमानामसादृश्येन नवीनमतमनुसृत्य उत्प्रेक्षाऽलङ्कारमाचक्षते, तन्न ; उत्प्रेक्षायाः सम्भावनारूपत्वात् सम्भावनायाश्च उत्कटैककोटिकसंशयरूपत्वात् प्रकृते च तदभावादित्यवधेयम् ) ॥ २३ ॥

अद्भुतोपमा ।—

यदि किञ्चित् भवेत् पद्मं सुभ्रु ! विभ्रान्तलोचनम् ।
तत् ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥२४॥

मोहोपमा ।—

शशीत्युत्प्रेक्ष्य तन्वङ्गि ! त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥२५॥

अद्भुतोपमामाह, यदीति ।—हे सुभ्रु ! यदि किञ्चित् पद्मं, विभ्रान्तलोचनं विघूर्णितनयनं, भवेत्, तत् तदा, ते तव, मुखश्रियं वदनकान्तिं, धत्तां धारयतु, इति एवंरूपा, असौ अद्भुतोपमा ; अत्रोपमेयभूतमुखस्यैव धर्मो विभ्रान्तलोचनत्वं,न तु तत्प्रतियोगिन्युपमानभूते पद्मे तत् सम्भवति, यद्यर्थबलात् सम्भावनया असौ प्रतीयते, तेन च सादृश्योद्बोधात् समधिकचमत्कार इत्युपमाया अद्भुतत्वात् इयमद्भुतोपमा । ( उक्तञ्च—"यत्रोपमेयधर्माः स्युरुपमानेऽधिरोपिताः । चमत्कारविधानार्थं तामाहुरद्भुतोपमाम् ॥" इति । नव्यास्तु एनामतिशयोक्तिमाहुः ; तदुक्तं प्रकाशकारेण यथा—"निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥" इति । उदाहृतञ्च विश्वनाथेन यथा—"यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् । तदोपमीयते तस्या वदनं चारुलोचनम् ॥" अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्भावनया सम्बन्धादसम्बन्धे सम्बन्धरूपातिशयोक्तिरित्यभिप्रायः ) ॥ २४ ॥

मोहोपमां निरूपयति, शशीति ।—तन्वङ्गि ! हे कृशाङ्गि ! तव मुखं शशीति उत्प्रेक्ष्य सम्भाव्य, भ्रान्त्या अभिन्नं बुद्ध्वा इत्यर्थः, तव मुखाशया वदनदर्शनस्पृहया, इन्दुमपि अनु-

संशयोपमा।—

किं पद्ममन्तर्भ्रान्तालि? किं ते लोलेक्षणं मुखम्?।
मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥

निर्णयोपमा।—

न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥

धावामि, इत्यत्र, मोहोपमा स्मृता, कविभिरिति शेषः, मोहो भ्रमज्ञानं, तेन सादृश्यप्रतीतेरियं मोहोपमा इत्यभिप्रायः। अत्र हि मोहेन इन्दोर्मुखत्वेन ज्ञानम् इति बोध्यम्। (तथा चोक्तं —"प्रतियोगिनमारोप्य तदभेदेन कीर्त्तनम्। उपमेयस्य यन्मोहोपमाऽसौ भ्रान्तिमद्वचः॥" इति। दर्पणकारस्तु एनां भ्रान्तिमदलङ्कारमाह; यथा—"साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" इति। साम्यञ्चात्र व्यङ्ग्यम्)॥ २५॥

संशयोपमां निरूपयति, किमिति।—अन्तर्भ्रान्तौ अली यस्य तत् पद्मं किम्? लोले चञ्चले, ईक्षणे नेत्रे यस्मिन् तत् ते तव, मुखं किम्? मम चित्तम् इति इत्थं, दोलायते संशेते, इयं संशयोपमा संशयस्य औपम्यपर्य्यवसायित्वात्। (अत्र चञ्चलनयनवदानने अन्तर्भ्रान्तभ्रमरवत् पद्मस्य सन्देहस्तु प्रकृतसन्देहाभावेऽपि भ्रान्तालित्वलोलेक्षणत्वयोः सादृश्यप्रतीत्या कविप्रतिभोत्थित एव; अत एवात्र नवीनाः पृथगेव सन्देहालङ्कारमिच्छन्ति; उक्तञ्च विश्वनाथेन, यथा—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति। अत्रापि साम्यं व्यञ्जनया गम्यते)॥ २६॥

निर्णयोपमां निरूपयति, नेति।—इन्दुना निग्राह्यस्य तिरस्करणीयस्य, निगृहीतस्य इत्यर्थः, पद्मस्य इन्दुलज्जाकरी

श्लेषोपमा ।—

**शिशिरांशुप्रतिस्पर्द्धि श्रीमत् सुरभिगन्धि च ।**
**अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥२८॥**

इन्दोः चन्द्रस्य, लज्जाकरी लज्जाजननी, चन्द्रापेक्षया मनोज्ञा इत्यर्थः, द्युतिः कान्तिः, न नास्ति इत्यर्थः, इन्दुपराजितः कथमिन्दुं पराजयितुं शक्नुयादिति भावः, अतः इदं तव मुखमेव, न पद्मं, तव मुखस्यैव इन्दुपराजेतृत्वात् इति भावः ; असौ निर्णयोपमा उपमेयस्य निर्णयेन सादृश्यावगमात् तदाख्येयमुपमेत्यर्थः ; मुखं वा पद्मं वा इत्यादिसंशयात् परं निश्चयस्य सम्भवात् संशयोत्तरनिर्णयः एवायमलङ्कारो बोद्धव्यः । ( उक्तञ्च अग्निपुराणे—"उपमेयस्य संशय्य निश्चयान्निश्चयोपमा" इति । इहापि नवीनैरुक्तः निश्चयालङ्कारो भवितुमर्हति, निर्णयस्य संशयोत्तरकालिकत्वात् मुखं पद्मं वा इति संशयानन्तरं मुखमेवेति निर्णयत्वात् निर्णयस्यैवालङ्कारत्वात् । उक्तञ्च विश्वनाथेन—"अन्यन्निषिध्य प्रकृत-स्थापनं निश्चयः पुनः" इति ) ॥ २७ ॥

श्लेषोपमां निरूपयति, शिशिरेति ।—ते वक्त्रं वदनम्, अम्भोजमिव शिशिरांशुप्रतिस्पर्द्धि शिशिरांशुः चन्द्रः, प्रतिस्पर्द्धी विरोधी यस्य तत्, श्रीमत् सुश्रीकं, तथा सुरभिगन्धि च, (विशेषणत्रयम् उभयत्र समानम्) अथवा वक्त्रपक्षे—शिशिरांशुप्रतिस्पर्द्धिनी या श्रीः शोभा तद्वत्, इत्यत्र, श्लेषोपमा स्मृता, कविभिरिति शेषः, श्लेषेण उपमानोपमेयगततत्तत्साधर्म्यस्य द्योतनात् इयं श्लेषोपमेति भावः । ( अत्र श्लेषवैचित्र्यस्याप्रधानत्वात् सादृश्यवैचित्र्यस्य च मुख्यत्वात् विद्यमानेऽपि श्लेषे न [illegible]

समानोपमा।—

**सरूपशब्दवाच्यत्वात् सा समानोपमा यथा।**
**बालेवोद्यानमालेयं सालकाननशोभिनी ॥२८॥**

प्रतिसहशादिशब्दानां परिवृत्तावपि श्लेषत्वाखण्डनात्, अलङ्कारादीनां शब्दार्थगतत्वव्यवस्थितौ हि शब्दपरिवृत्तिसहत्वासहत्वाभ्यां नियमनात्। शब्दपरिवृत्तेनासहायां समानोपमायामस्य शब्दगतत्वमित्यवधेयम् )॥ २८ ॥

समानोपमां लक्षयति, सरूपेति।—सरूपशब्दैः समानरूपैः, अर्थभेदाद्भिन्नैरपि अभिन्नप्रयत्नोच्चार्यत्वेन अभिन्नवत् प्रतीयमानतत्तद्वर्णात्मकस्वरूपैः शब्दैरित्यर्थः, वाच्यत्वात् साधर्म्यस्य प्रतिपाद्यत्वात्, सा प्रसिद्धा, समानोपमा। यथाशब्दः उदाहरणप्रदर्शनार्थः। इयम् उद्यानमाला उपवनराजिः, बाला कामिनीव, सालकाननशोभिनी सालानां वृक्षभेदानां, काननेन वनेन, समूहेन इत्यर्थः, शोभते इति तथोक्ता, अन्यत्र—सालकम् अलकालङ्कृतं, यत् आननं तेन शोभते इति। ( अत्र साधारणधर्मस्य सालकाननशोभित्वस्य शब्दश्लेषेण द्योतनात् शब्दश्लेषमूलेयं, दोषगुणालङ्काराणां शब्दार्थगतत्वव्यवस्थितौ शब्दपरिवृत्तसहत्वासहत्वयोर्मूलत्वेन निर्द्धारणात्। ननु गुणक्रियासाम्यस्यैव उपमाप्रयोजकता युक्ता, तत्र साधर्म्यस्य तात्त्विकत्वात्; शब्दसाम्यस्य तु न तथा इत्यपि न वाच्यं, गुणक्रियासाम्यवत् शब्दसाम्यस्याप्युपमाप्रयोजकत्वात्; तथा चोक्तं रुद्रटेन—"स्फुटमर्थालङ्कारावेतौ उपमासमुच्चयौ किन्तु आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः" इति। इह श्लेषस्य साम्यप्रयोजकत्वात् साम्यस्य च श्लेषानिर्वाहात् उपमाया एवाङ्गित्वेन व्यपदेशः युक्तः। विश्वनाथेनापि "सकलकलं पुरम्" इत्यादौ

निन्दोपमा ।—

पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।
समानमपि सोत्सेकमिति निन्दोपमा स्मृता॥३०॥

प्रशंसोपमा ।—

ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः ।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते ॥३१॥

तथैव व्यवस्थापितम् ; यथोक्तम्—"अत्र श्लेषस्यैव साम्यनिर्वाहकता न तु साम्यस्य श्लेषनिर्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासम्भवात्, इत्युपमाया एवाङ्गित्वेन व्यपदेशो न्यायान् "प्रधानेन हि व्यपदेशा भवन्ति" इति न्यायात्" । "सालकानन" इत्यत्र "सर्जकानन" इति परिवृत्तौ न श्लेषः, पूर्वत्र "शिशिरांशु" इत्यत्र "शीतगु" इति परिवृत्तौ अपि न क्षतिरिति सुधीभिः विभाव्यम् ) ॥ २८ ॥

निन्दोपमां लक्षयति, पद्ममिति ।—पद्मं बहुरजः परागपूर्णं रजोगुणबहुलञ्च, चन्द्रश्च क्षयी कृष्णपक्षे क्षयशीलः क्षयरोगी च, अतः तव आननं समानमपि गुणान्तरेण तुल्यमपि, ताभ्यां पद्मचन्द्राभ्यां, ( ताभ्यामिति पञ्चम्यन्तम् ) सोत्सेकं समधिकोत्कर्षशालि, इति एवंस्वरूपा, उपमाननिन्दापूर्वकसादृश्यप्रत्ययात्मिकेत्यर्थः, निन्दोपमा स्मृता उपमाननिन्दया साम्यस्य कीर्त्तनात् निन्दोपमेति व्यपदेश इति भावः । ( साम्यमात्रपर्य्यवसायित्वे तात्पर्य्यादस्या व्यतिरेकात् भेदः, व्यतिरेके तु भेद एव तात्पर्य्यमिति बोध्यम् ) ॥ ३० ॥

प्रशंसोपमां निरूपयति, ब्रह्मण इति ।—पद्मः ब्रह्मणोऽपि उद्भवः उत्पत्तिस्थानमिति [illegible]

आचिख्यासोपमा।—

**चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः।**
**स गुणो वाऽस्तु दोषो वेत्याचिख्यासोपमां विदुः॥३२॥**

कमलजातत्वात् इति भावः, तथा चन्द्रः शम्भुशिरोधृतः शिवेन मूर्द्धा गृहीतः, तौ पद्मचन्द्रौ, त्वन्मुखेन तुल्यौ सदृशौ, इति प्रस्तुतमुखस्य प्रशंसाऽतिशयात् हेतोरित्यर्थः, सा प्रशंसोपमा उच्यते, जगत्स्रष्टुरपि विधातुरुद्भवत्वेन पद्मस्य तथा जगतां शङ्करेणापि शङ्करेण शिरसा न त्वङ्गान्तरेण धृतत्वाच्च चन्द्रस्य महती प्रशंसा प्रतीयते, प्रशंसिताभ्याञ्च ताभ्यां सादृश्याभिधानात् इति भावः। (अत्र उपमेयतया प्रसिद्धस्यापि मुखस्य उपमानत्वकल्पनात् विपर्य्यासोपमा च, तदुभयोः समावेशात् सङ्करः। विपर्य्यासोपमायाम् उपमानोपमेययोः प्रशंसा नास्ति प्रशंसोपमायां तदस्तीत्यनयोर्भेदः। नव्यास्तु उपमेयतया प्रसिद्धस्य मुखस्य उपमानत्वकल्पनेन केवलमेव प्रतीपालङ्कारमुभयत्रापीच्छन्ति; यदुक्तं—"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥" इति। पद्म इति पुंस्त्वनिर्द्देशेन अप्रयुक्ततादोषश्चेति बोध्यम्)॥ ३१॥

आचिख्यासोपमां लक्षयति, चन्द्रेणेति।—त्वन्मुखं चन्द्रेण तुल्यम् इति आचिख्यासु आख्यातुमिच्छु, मे मनः; स आख्यानाभिलाषः, गुणो वा दोषो वा अस्तु इति शस्मात्, आख्यानाभिलाषप्रकाशनात् इत्यर्थः, इमाम् आचिख्यासोपमां विदुः। (आख्यानकामनाविषयत्वेन मुखस्य चन्द्रेण उपमितत्वेऽपि 'गुणो वा दोषो वा' इति सारल्येन स्वाभिलाषप्रकटनम् अधिकचमत्कारित्वं द्योतयतीति बोध्यम्)॥ ३२॥

विरोधोपमा ।—

शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।
परस्परविरोधीति सा विरोधोपमा मता ॥३३॥

प्रतिषेधोपमा ।—

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ ३४ ॥

विरोधोपमां निरूपयति, शतपत्रमिति ।—शतपत्रं पद्मं, शरच्चन्द्रः शारदीयचन्द्रः, तव आननञ्च एतत् त्रयं परस्परविरोधि अन्योऽन्यस्पर्द्धि, शतपत्रे शोभिते चन्द्रस्य मालिन्यं, चन्द्रे च शोभिते शतपत्रस्य मालिन्यं प्रसिद्धं, तवानने शोभिते च द्वयोरेव मालिन्यं स्यादिति पद्मचन्द्राभ्यां मुखस्य मनोज्ञत्वाद्येकधर्मवत्स्वरूपस्य विरोधस्य सादृश्यपर्य्यवसानात् इति एवंरूपा, सा प्रसिद्धा, विरोधोपमा मता ॥ ३३ ॥

प्रतिषेधोपमामाह, नेति ।—कलङ्किनः तथा जडस्य इन्दोः चन्द्रस्य, ते तव, मुखेन जातु कदाचित्, प्रतिगर्जितुं प्रतिस्पर्द्धितुं, सदृशीभवितुम् इत्यर्थः, शक्तिः सामर्थ्यं, नास्ति, इति एवंरूपा, कलङ्कत्वजडत्वहेतोरुपमानप्रतिषेधात्मिका इत्यर्थः, सा प्रतिषेधोपमा सादृश्यप्रतिषेधेन आधिक्यवैचित्र्यप्रकटनात् इति भावः । ( अत्र कलङ्किनो जडस्य इति विशेषणाभ्यामुपमानस्य निन्दाऽवगमेऽपि प्रतिषेधस्यैव वैचित्र्यप्रतिपादकत्वात् न निन्दोपमा, यत्र तु प्रतिषेधो नास्ति तत्र निन्दोपमा, प्रतिषेधे च प्रतिषेधोपमा इत्यनयोर्भेदः । अत्र नवीनालङ्कारिकाणां मते—"जयतीन्दुं कलङ्किनम्" इत्यादिवत् उपमानादुपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः; तथा चोक्तं विश्वनाथेन—"आधिक्य-

चटूपमा ।—

मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।
तथाऽपि सम एवासौ नोत्कर्षीति चटूपमा ॥३५॥

तत्त्वाख्यानोपमा ।—

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात् तत्त्वाख्यानोपमैव सा ॥३६॥

---

चटूपमां निरूपयति, मृगेक्षणेति ।—ते वक्त्रं मृगस्य ईक्षणाभ्यां नयनाभ्याम्, अवयवविशेषाभ्याम् इति भावः, अङ्कः चिह्नं यत्र तादृशं, शशी तु मृगेण सर्वावयवसम्पन्नेनेति भावः, अङ्कितः, तथाऽपि अधिकसामग्रीमत्त्वेऽपि, असौ सम एव, तव मुखेनेति शेषः, न उत्कर्षी नाधिकगौरवभाजनम्, इति चटुः प्रियोक्तिः, तद्घटितत्वात् चटूपमा । ( अत्र सत्यपि उत्कर्षकारणे न उत्कर्ष इति प्रतिपादनात् विशेषोक्तिः । एवंविधवर्णनाया एव चटूपमात्वाङ्गीकारात् अस्या विशेषोक्तिमूलत्वमवश्यमेव वक्तव्यम्, अन्यथा सादृश्यमात्रप्रतीतौ चटूपमा इत्युक्ते सर्वेष्वेवोपमाभेदेषु चाटूक्तिसद्भावाच्चटूपमा स्यादिति ध्येयम् ) ॥३५॥

तत्त्वाख्यानोपमां लक्षयति, नेति ।—इदं पद्मं न, मुखमेव, भृङ्गौ भ्रमरौ न, इमे चक्षुषी नेत्रे, ( अत्यन्तसदृशे हि वस्तुनि भ्रान्तिर्जनानां नैसर्गिकीति मुखे पद्मत्वेन भ्रान्तं प्रत्युक्तिरियं, मुखमेव इत्यादिना च भ्रान्तिनिरास इति बोध्यम् ) इति इत्थं, विस्पष्टसादृश्यात् विशेषेण सादृश्यस्य स्पष्टत्वात्, भ्रान्तिनिरासेन सुव्यक्तत्वात् इत्यर्थः, सा प्रसिद्धेत्यर्थः, तत्त्वाख्यानोपमा भ्रमनिरासेन तत्त्वस्य कथनं तत्त्वाख्यानं तेन प्रयुक्ता उपमा तत्त्वाख्यानोपमा । ( निर्णयोपमायां तत्त्वाख्यानस्य

असाधारणोपमा।—

चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव।
आत्मनैवाभवत् तुल्यमित्यसाधारणोपमा ॥३७॥

संशयपूर्वकत्वम्, इह तु भ्रान्तिपूर्वकत्वम् इत्यनयोर्भेदः। नव्यास्तु अत्रापि अन्यनिरासेन प्रकृतस्थापनरूपं निश्चयालङ्कारमाचक्षते इत्यवधेयम्)॥ ३६॥

असाधारणोपमां लक्षयति, चन्द्रेति।—तव मुखं चन्द्रारविन्दयोः कान्तिं शोभाम्, अतिक्रम्य आत्मनैव तुल्यम् उपमानतया प्रसिद्धयोश्चन्द्रारविन्दयोः शोभाऽतिक्रमेण उपमानान्तरासम्भवात् स्वमात्रसदृशमित्यर्थः, अभवत्, इति असाधारणोपमा स्वभिन्नोपमानाभावात् सादृश्यस्य स्वमात्रगतत्वेन असाधारणत्वात् इयम् असाधारणोपमा नाम इत्यभिप्रायः। (दर्पणकारस्तु भिन्नयोरुपमानोपमेययोः साम्ये तूपमाम्, अनन्यसदृशत्वप्रतिपादनार्थमेकस्योपमानोपमेयभावविवक्षया साम्यप्रतिपादनेऽनन्वयाख्यमलङ्कारमाह ; यथा—"उपमानोपमेयत्वमेकस्यैव त्वनन्वयः" इति। भोजराजस्तु—तव मुखसौदृशं नान्यत् तत्सदृशमिति एकस्यापि वस्तुनो भेदमुपकल्प्य उपमानोपमेयभावविवक्षया प्रतीयमानसादृश्यमौपम्येनाभिहितमिति अनन्वयोपमामाह ; उदाहृतञ्च तत्र—"त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव। त्वन्मूर्त्तिरिव मूर्त्तिस्ते त्वमिव त्वं कृशोदरि!॥" इति। न च चन्द्र इव मुखम् इत्यादौ मुखे चन्द्रगतधर्मप्रतीतिः, चन्द्र इव चन्द्रः इत्यत्र तु अन्यस्मिंश्चन्द्रनिष्ठसादृश्यप्रतियोगित्वाभावो बुध्यते, न तु चन्द्रगतधर्मवत्त्वं, तस्य साधारणधर्मज्ञानकाले एव सिद्धत्वादिति वाच्यम्,

अभूतोपमा।—

सर्वपद्मप्रभासारः समाहृत इव क्वचित्।
त्वदाननं विभातीति तामभूतोपमां विदुः॥३८॥

धर्मप्रतीतौ बाधाभावात् तस्योपमात्वमिष्टमेव। चन्द्रश्चन्द्रवृत्तिधर्मवान् इति बोधोऽपि अनुभवसिद्ध एव। एतावता हि एवंविधस्थले उक्तरीत्या भेदारोपेणोपमा इत्यभिप्रायो लभ्यते। वस्तुतस्तु एतादृग्भेदकरणमगतिकगतिरिति तेन तदङ्गीकरणं न समीचीनम्; तथा च भाष्यकृतः,—"अगतिका हि इयं गतिर्यत् काल्पनिकं भेदाश्रयणम्" इति। वाचस्पतिमिश्रैरप्युक्तं भामत्यां—"तेन तस्योपमेयत्वं रामरावणयुद्धवत्। अगत्यां भेदमारोप्य गतौ सत्यां न युज्यते॥" तदपि तत्कल्पतरौ व्याख्यातं—"ह्यस्तनाद्यतनत्वादिना युद्धे भेदारोपः क्रियते "गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव॥" इति)॥३७॥

अभूतोपमां निरूपयति, सर्वेति।—त्वदाननं तव मुखं, क्वचित् कुत्रचित् स्थाने, समाहृतः सङ्गृह्य रचितः, वेधसा इति शेषः, सर्वेषां पद्मानां प्रभासारः कान्तिपुञ्जः इव, विभाति, इति उक्तरूपां, तां सर्वपद्मप्रभासारसमाहरणस्य तत्त्वतः अभूतत्वात् सम्भावनया औपम्यस्य कीर्त्तनाच्च तादृशीम्, अभूतोपमां विदुः। (दर्पणकारस्तु विधिकर्त्तृकसमाहृतपद्मप्रभासारस्य वस्तुतोऽसम्भवात् उपमानत्वं न सम्भवति, प्रसिद्धस्यैवोपमानताऽङ्गीकारात्, तत्रेवशब्दस्य सम्भावनार्थकत्वात् इमाम् उत्प्रेक्षालङ्कारमाह; यथा—"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति। यत्र तूपमानताऽवच्छेदकविशिष्टमुपमानमप्रसिद्धं तत्रोत्प्रेक्षैव इति बहवः; तदुक्तं चक्रवर्त्तिना—"यदाऽप्र-

असम्भावितोपमा ।—

चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।
परुषा वागितो वक्त्रादित्यसम्भावितोपमा ॥३९॥

बहूपमा ।—

चन्दनोदकचन्द्रांशु-चन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥

मुपमानांशो लोकतः सिद्धिमृच्छति । तदोपमैव येनेव-शब्दः सादृश्यवाचकः ॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः । तदोत्प्रेक्षैव येनेव-शब्दः सम्भावनापरः ॥" इति । प्राञ्चस्तु प्रकृते अप्रकृतस्य धर्मिणः सम्भावनमुत्प्रेक्षा, धर्मस्य सम्भावनया द्वयोः साम्यप्रतीतिरुपमेत्यनयोः भेदं कल्पयन्ति ) ॥ ३८ ॥

असम्भावितोपमां निरूपयति. चन्द्रेति ।—इतः अस्मात्, वक्त्रात् परुषा वाक् चन्द्रबिम्बात् विषमिव, चन्दनात् पावक इव, इति अत्र, चन्द्रचन्दनाभ्यां विषपावकयोरुत्पत्तेरिव तव मुखात् परुषवागुत्पत्तेरसम्भावितत्वात् असम्भावितोपमा । ( न च वाच्यं चन्द्रप्रभवविषादेरप्रसिद्धत्वादत्रोपमैव न सम्भवति, प्रसिद्धस्यैवोपमानत्वाङ्गीकारादिति, चन्द्रप्रभवविषादेरत्र वागुपमाया अविवक्षितत्वात् । यथा चन्द्रबिम्बात् विषमसम्भावितं, तथा त्वन्मुखात् परुषा वाक् इत्युपमायाः स्वीकारे नाप्रसिद्धिरित्यवधेयम् । एवञ्च साधारणधर्मस्यासम्भावितत्वे इयमुपमा न तूपमानस्यासम्भावितत्वमित्येवार्थः ; तथा च विषपरुषवचनयोरुपमायां चन्द्रचन्दनादेर्मुखस्य च बिम्बप्रतिबिम्बभावः ) ॥ ३९ ॥

विक्रियोपमा।—

**चन्द्रविम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम्।**
**तव तन्वङ्गि! वदनमित्यसौ विक्रियोपमा ॥४१॥**

चन्द्रांशुचन्द्रकान्तादिशीतलः [ चन्दनोदकचन्द्रांशुचन्द्रकान्ताः इति द्वन्द्वसमासः, तत आदिपदेन बहुव्रीहिः, ततश्च चन्द्रकान्तादिरिव शीतलः इति "उपमानानि सामान्यवचनैः" (२।१।५५ पा०) इति कर्मधारयः। ततश्च चन्दनवत् उदकवत् चन्द्रांशुवत् चन्द्रकान्तवत्, आदिपदेन एवंविधान्यपदार्थवत् शीतल इत्यर्थः, इति अतिशयम् अधिकशैत्यम् अधिकवैचित्र्यं वा,बोधयन्तौ द्योतयन्तौ,बहूपमा एकस्य उपमानबाहुल्यकीर्त्तनात् इयं बहूपमानाम। (बहुपदेन द्वयोरप्युपमानयोः सद्भावे न इयमुपमा वैचित्र्याणाम् अबाहुल्यात् इति बोध्यम्। दर्पणकारस्तु इमां मालोपमामाह; यथा—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति ) ॥४०॥

विक्रियोपमां लक्षयति, चन्द्रेति।—हे तन्वङ्गि! तव वदनं चन्द्रविम्बात् उत्कीर्णमिव, अथवा पद्मगर्भात् उद्धृतमिव, इति उत्कोटाहरणरूपा, असौ विक्रियोपमा चन्द्रविम्बपद्मगर्भौ उपमानभूतौ प्रकृती, तदुत्कीर्णत्वोद्धृतत्वधर्मयोगादुपमेयभूतं वदनञ्च विकृतिः, ततश्च उपमानविकृतत्वेन साम्यावगतेरियं विक्रियोपमानाम। (उक्तञ्च—"उपमेयस्य यत्र स्यादुपमानविकारता। प्रकृतेर्विकृतेः साम्यात् तामाहुर्विक्रियोपमाम् ॥" इति। अन्यच्च—"उपमानविकारेण तुलना विक्रियोपमा" इत्याग्नेये। अत्र च उत्कीर्णत्वोद्धृतत्वयोः धर्मयोः उत्प्रेक्षणात् धर्मिणोश्च साम्यप्रतीतेरुपमैव, न तु उत्प्रेक्षा, तस्याः धर्मिगतत्वेन कीर्त्तनात् इति बोध्यम् ) ॥४१॥

मालोपमा ।—

पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥४२॥

वाक्यार्थोपमा ।—

वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा॥४३॥

---

मालोपमां निरूपयति, पूष्णीति ।—पूष्णि सूर्य्ये, आतप इव, अह्नि दिवसे, पूषा सूर्य्य इव, व्योम्नि आकाशे, वासरः दिवसः इव, विक्रमः त्वयि लक्ष्मीम् अधात्, इति एवंरूपा, मालोपमा मालायां यथा एकेन पुष्पेण अपरस्य पुष्पस्य योगः, तथा अत्रापि सूर्य्यस्य दिवसेन दिवसस्य च आकाशेन इत्येवमेकस्यापरेण तस्याप्यपरेण परस्पर-सम्बन्धात् मालोपमा नाम। (एवंविधवैचित्र्य एव अस्याः सत्त्वात्, बहूपमायाश्च केवलमुपमानबाहुल्यात् अनयोर्भेदः। दर्पणकारस्तु बहूपमावदिहापि मालोपमां मन्यते। उपमान-बहुत्वे उभयत्रापि मालोपमात्वे एवं विन्यासवैचित्र्यं न सम्भवतीति प्राचां पृथगलङ्कारकरणाभिप्रायः) ॥ ४२ ॥

वाक्यार्थोपमां लक्षयति, वाक्यार्थेनेति ।—वाक्यं पद-समुदायः, तस्यार्थः वाक्यार्थः शाब्दबोधघटकपदार्थसमूह इत्यर्थः, तेन अप्रस्तुतवाक्यार्थेन इत्यर्थः, कोऽपि अपरः प्राकरणिकः, वाक्यार्थः यदि उपमीयते सदृशीक्रियते, सा वाक्यार्थोपमा वाक्यार्थयोरुपमानोपमेयत्वकीर्त्तनात् इति भावः; (अत्रेवं बोध्यं—प्रस्तुताप्रस्तुतवाक्यार्थयोर्यदि साङ्गेनोपमानभूतेनाङ्गिना साङ्गस्य उपमेयभूतस्याङ्गिनः साम्यं

त्वदाननमधीराक्षमाविर्दशनदीधिति।
भ्रमद्भृङ्गमिवालक्ष्य-केसरं भाति पङ्कजम् ॥ ४४ ॥
नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम्।
मया मधुव्रतेनेव पायं पायमरम्यत ॥ ४५ ॥

वैचित्र्याभावात्; "यथाऽऽकाशे विधुर्भाति तथा भूमौ तवाननम्" इत्यादौ वाक्यार्थसाम्ये वैचित्र्याभावात् वाक्यार्थोपमा न स्यादिति) सा द्विधा एकानेकेवशब्दत्वात् क्वचित् एकेवशब्दघटिता, क्वचिच्च अनेकेवशब्दघटिता; यत्र एकैकस्याङ्गस्याङ्गिनो वा एकैकस्मिन् सादृश्यस्यान्वयबोधे तात्पर्यं तत्रानेकेवशब्दः, यत्र तु विशिष्टयोरुपमानोपमेययोः बोधानन्तरं समालोचनया विशेषणानामपि सादृश्यबोधः तत्र एकेवशब्दप्रयोग इति बोध्यम् ॥ ४३ ॥

एकेवशब्दां वाक्यार्थोपमाम् उदाहरति, त्वदिति।—अधीरे चञ्चले, अक्षिणी यत्र तत्,, आविः आविर्भवन्त्यः, दशनानां दीधितयो यत्र तादृशं, तव आननं भ्रमन्तो भृङ्गा यत्र तत्, तथा आलक्ष्या ईषल्लक्ष्याः, केसराः किञ्जल्काः यस्य तादृशं, पङ्कजमिव भाति। (अत्र भृङ्गकेसररूपाङ्गवता उपमानभूतपङ्कजेनाङ्गिना नयनदशनकिरणरूपाङ्गवतः अङ्गिनः उपमेयभूतस्याननस्य साम्यं, तच्च वाक्यार्थगतमिति वाक्यार्थोपमा; तत्र च प्रथममुपमानोपमेययोरेव सादृश्यमवगमयत् पर्यालोचनया अधीराक्षं भ्रमद्भृङ्गमिव, दशनदीधिति आलक्ष्यकेसरमिव इत्यादिबोधादेकेवशब्दप्रयोगः पूर्वार्द्धवाक्यं परार्द्धेन एकेवशब्दघटितेन वाक्येन प्रयुक्तमिति वाक्यार्थोपमा इति बोध्यम्) ॥ ४४ ॥

प्रतिवस्तूपमा।—

वस्तु किञ्चिदुपन्यस्य न्यसनात् तत्सधर्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा॥ ४६॥

तस्याः तन्वङ्ग्याः पद्ममिव आननं मधुव्रतेनेव मया पायं पायं पुनः पुनः पीत्वा, अरम्यत। ( अत्र नलिन्या इव तन्वङ्ग्याः पद्ममिवाननं मधुव्रतेनेव मयेति त्रिभिरिवशब्दैः नलिन्यादिभिः साम्यं शाब्दबोधविषयीभूतं सत् वैचित्र्यं जनयतीति अनेकेवशब्दा वाक्यार्थोपमा इति बोध्यम् )॥ ४५॥

प्रतिवस्तूपमां निरूपयति, वस्त्विति।—किञ्चित् वस्तु किमपि प्रकृतं वाक्यार्थम्, उपन्यस्य तस्य सधर्मणः समानधर्मस्य, एकधर्मवतः कस्यचित् अप्रकृतस्य वाक्यार्थस्य इत्यर्थः, न्यसनात् प्रकृतस्य समर्थनाय उपादानात्, साम्यप्रतीतिः सादृश्यवाचकपदाप्रयोगेऽपि व्यञ्जनया सादृश्यावबोधः, अस्ति भवति, इति हेतोः, प्रतिवस्तुनः अप्रस्तुतवाक्यार्थस्य सादृश्यप्रतीतिरियं प्रतिवस्तूपमा इत्यन्वयः। [ ततश्च उपमेयस्य वाक्येन प्रतिपादनं उपमानस्यापि वाक्यान्तरेण प्रतिपादनम् एकस्यैव धर्मस्य भिन्नवाचकतया निर्देशपुरःसरं भवति चेत् तदा प्रतिवस्तूपमेति लक्षणम्; अत एव वाक्यार्थोपमाया अस्याः भेदः। दर्पणकारस्तु इमाम् अलङ्कारान्तरमाह; यथा—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥" इति। स्वमते तु सादृश्यबोधादुपमात्वप्राप्त्या अलङ्कारान्तरत्वाङ्गीकारमनर्थकमेवेति उपमैव। वामनेनापि उक्तं—"प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः" ( का० सू० वृ० ४ अधि० ३ अ० १सू० ) इति ]। यथेति वक्ष्यमाणोदा-

नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु।
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥४७॥

तुल्ययोगोपमा।—

अधिकेन समीकृत्य हीनमेकक्रियाविधौ।
यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥४८॥

उदाहरणं दर्शयति, नेति।—जायमानेषु राजसु मध्ये अद्यापि त्वादृशः तव सदृशः, एकोऽपि न नास्ति, ननु भोः!, पारिजातस्य पादपः पारिजातवृक्ष इत्यर्थः, (अत्र राहोः शिर इत्यादिवदभेदे भेदविवक्षया षष्ठी) द्वितीयो नास्त्येव। (अत्र सदृशो नास्ति द्वितीयो नास्तीति साधारणधर्म एक एव पुनरुक्तिभिया शब्दान्तरेण उपन्यस्तः। दर्पणकारेण अस्या वैधर्म्येणापि उदाहरणं दर्शितम्; यथा—"चकोर्य्य एव चतुराश्चन्द्रिकापानकर्मणि। विनाऽवन्तीर्न निपुणाः सुदृशो रतनर्मणि॥" अत्र चातुर्य्यनैपुण्याभ्यामपि वाक्यद्वयस्य साम्य-प्रतीतिरस्तीति बोध्यम्)॥ ४७॥

तुल्ययोगोपमां लक्षयति, अधिकेनेति।—एकक्रियाविधौ एकजातीयक्रियाविधाने, हीनं न्यूनं वस्तु, अधिकेन अधिक-गुणेन, समीकृत्य सदृशीकृत्य, अत्र पूर्वकालविहितस्य क्त्वा-प्रत्ययस्य समकालार्थकत्वात् सदृशीकुर्वन्नित्यर्थः, यत् ब्रुवन्ति कवयो यत् वर्णयन्ति इत्यर्थः, सा इयं तुल्ययोगोपमा क्रियायामधिकहीनगुणयोः तुल्यसम्बन्धात् तुल्ययोगोपमा इति समाख्या, स्मृता; तथा च एकजातीयक्रियया प्रस्तुताप्रस्तु-तयोः साम्यकीर्त्तनं तुल्ययोगोपमा इति लक्षणम्। यथेति उदाहरणप्रदर्शनार्थम्। (दर्पणकारस्तु इमामलङ्कारान्तरं

दिवो जागर्त्ति रक्षायै पुलोमारिर्भवान् भुवः।
असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥४९॥

हेतूपमा।—

कान्त्या चन्द्रमसं धाम्ना सूर्य्यं धैर्य्येण चार्णवम्।
राजन्ननुकरोषीति सैषा हेतूपमा मता ॥५०॥

उपमायां भिन्नलिङ्गादिदोषविचारः।—

न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥

---

दीपकमाह; यथा—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते" इति ) ॥ ४८ ॥

तुल्ययोगोपमामुदाहरति, दिव इति।—पुलोमारिः इन्द्रः, दिवः स्वर्गस्य, रक्षायै, भवान् भुवः पृथिव्याः, रक्षायै जागर्त्ति, तेन इन्द्रेण, असुरा हन्यन्ते, त्वया सावलेपाः गर्विताः, नृपाः हन्यन्ते। अत्र हीनस्य प्रस्तुतस्य राज्ञः गुणाधिकेन इन्द्रेण एकजातीयक्रियाकरणेन समीकरणात् तुल्ययोगोपमा इति ॥ ४९ ॥

हेतूपमाम् उदाहरति, कान्त्येति।—हे राजन्! कान्त्या शरीरशोभया, चन्द्रमसं, धाम्ना तेजसा, सूर्य्यं, धैर्य्येण धीरतया, अर्णवम् अनुकरोषि तुलयसि। अत्र राज्ञः चन्द्रादिभिः सादृश्यस्य कान्त्यादिहेतुकत्वात् एषा हेतूपमा इति ॥ ५० ॥

इत्थमुपमां तद्भेदांश्च निरूप्य प्रसङ्गतस्तद्गतान् दोषान् विवक्षुः तेषाञ्च कदाचित् अदूषकत्वमाह, नेति।—यत्र धीमतां सामाजिकानाम्, उद्वेगः प्रतीतिविघातः, न, भवतीति शेषः, तादृशे भिन्ने पृथग्भूते, लिङ्गवचने तथा हीनाधिकता

हीनपदत्वम् अधिकपदत्वं वा, उपमादूषणाय न अलं न प्रभवन्तीत्यर्थः। (दोषाश्च प्राचीनैरुक्ताः; यथा—"हीनाधिकत्वं वचन-लिङ्गभेदो विपर्य्ययः। असादृश्यासम्भवौ च दोषाः सप्तोपमागताः॥" इति। हीनाधिकता च उपमानस्य उपमेयापेक्षया इति बोध्यम्। लिङ्गवचनव्यत्यासे साधर्म्यस्य उभयान्वयाभावेन साम्यस्य सम्यगप्रतीतिः, हीनतायाम् उपमानस्य अपकृष्टत्वावबोधात् प्रस्तुतस्य उपमेयस्य अनुत्कर्षः, अधिकतायाञ्च महतोपमानेन क्षुद्रोपमेयस्य सादृश्यमुपहसनीयमेव; एतान्यत्र दूषकताबीजानि, यत्र तु एतानि कारणानि न सन्ति तत्र एतेषां न दोषावहत्वमिति; तथा हि उपमानोपमेयोभयगतधर्मस्योभयान्वयबाधाभावे लिङ्गवचनभेदानां हीनताऽधिकतयोर्नैकान्तिकत्वे च हीनताऽधिकतानां दोषाभाव इति निष्कर्षः। केचित्तु कालपुरुषविध्यादिभेदानपि उपमादोषानाहुः, उदाहरन्ति च क्रमेण; यथा—"अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती। पश्चिमाद्यामिनीयामात् प्रसादमिव चेतना॥" अत्र चेतनायामाप्नोतीत्यन्वेति न त्वापेति भूतकालः। "प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता। विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपिप्रभवा लतेव॥" अत्र वासवदत्तायां विभ्राजसे इति मध्यमपुरुषोऽन्वेति लतायान्तु विभ्राजते इति। "गङ्गेव प्रवहतु ते सदैव कीर्त्तिः" इत्यत्र कीर्त्तौ विध्यर्थः सम्भवति न तु गङ्गायां, सिद्धत्वात्। एवं "पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव।" अपि च "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा" इति। अत्र मार्कण्डेयमुनिर्यथा जीवतीति प्रयोज्यम्। एते दोषाश्च प्रायशः कविभिरगणिता इति बोध्यम्)॥ ५१॥

स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता॥५२

लिङ्गवचनभेदस्य अदूषकत्वं दर्शयति, स्त्रीति ।—अयं षण्डः स्त्रीव गच्छति, एषा स्त्री पुमानिव वक्ति । ( अत्र क्रियाद्वय-प्रतिपाद्यस्य साधारणधर्मद्वयस्य उभयत्रान्वयात् उपमानोप-मेययोः लिङ्गभेदेऽपि न दोषः ) अयं जनः, मे प्राणा इव प्रियः, ( अत्र प्राणपदस्य समूहवाचकत्वेन नियतबहुवचनान्तत्वात् सादृश्यपरपदस्याप्रसिद्धत्वाच्च प्राणा यथा प्रियाः तथा अयं प्रिय इति वचनविपरिणामेनान्वयः कर्त्तव्य एव इति न दोषः ) तथा विद्या धनमिव अर्जिता । [ अत्र धनपदं नियतक्लीबलिङ्गमिति लिङ्गविपरिणामेन धनं यथा अर्जितं तथा विद्या अर्जिता इत्यन्वयः कर्त्तव्यः ; अत एव धीमतामनुद्वेगकरत्वान्न दोषः । ततश्च यत्र साधारणधर्मरूपायाः क्रियाया उपमेयोपमानयो-रन्वयो निर्बाधः, तत्र लिङ्गवचनभेदेऽपि धीमतामनुद्वेगः, तथा यत्र नियतलिङ्गवचनपदैः सादृश्यं विधेयं, तत्र व्यत्यये-नान्वयसिद्धौ च नोद्वेगः । यथा "चन्द्र इव मुखं" "मधुरः सुधावदधरः" इत्यादि । पुंनपुंसकयोरुपमानोपमेययोर्लिङ्ग-भेदस्तु प्रायशो न दोषभाग्भवति ; उक्तञ्च वामनेन— "इष्टः पुंनपुंसकयोः प्रायेण" ( का० सू० वृ० ४ अधि० २ अ० १३ सू० ) इति । तथा समासाभिहितायामपि लिङ्ग-भेदस्यादूषकत्वञ्च तेनैवोक्तं—"लौकिक्यां समासाभिहिताया-मुपमाप्रपञ्चे च" ( का० सू० वृ० ४ अधि० २अ० १४ सू० ) इति । उदाहृतञ्च तत्रैव—"समासाभिहितायां यथा— भुजलता नोत्पलसदृशी" इति । एवञ्च यत्र लिङ्गभेदे विशेषण-मुभयान्वयक्षमं तत्र न दोषः इति निष्कर्षः । एवमुभयत्र

**भवानिव महीपाल ! देवराजो विराजते ।**
**अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥ ५२ ॥**

अन्वययोग्यक्रियया वचनभेदेऽपि न दोषः, यत्र च तद्भेदेऽपि उपमानान्वययोग्यं साधारणधर्माभिधायि पदं तत्र न दोषः। यदुक्तं काव्यडाकिन्यां—"श्लेषमर्यादयो यत्र पदं सामर्थ्यवाचकम्। उभयान्वयि यत्रापि नास्य दोषस्य संस्थितिः॥" इति। उदाहृतश्च वचनभेदे, यथा—"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः। दधते स्म परां शोभां तदीया विभ्रमा इव॥" अत्र वेश-विभ्रमशब्दौ एकवचनबहुवचनान्तौ, तत्रासदृशः इति सदृश-शब्दस्यैकवचनान्तं सदृश्-शब्दस्य बहुवचनान्तं पदम्। "समानः सदृशः सदृक्" इत्यमरः। भृत इति क्तप्रत्ययान्तस्यैकवचनान्तं क्विप्प्रत्ययान्तस्य बहुवचनान्तम्; तथा दधते इति "दध धारणे" इति भौवादिकस्यैकवचनान्तं, "डु धा ञ धारणे" इति जुहोत्यादिपठितस्य बहुवचनान्तं रूपम् इत्युभयत्राप्यन्वयबोधसम्भवान्न दोषः। लिङ्गभेदेऽपि यथोपमाप्रपञ्चे—"शुद्धान्तदुर्लभमिदं—" इत्यादि, अत्राश्रमवासिजन-वनलतयोर्लिङ्गभेदः। वचनभेदश्च न दोषाय। एवमन्यान्यपि महाकविप्रयुक्तानि सन्तीति अवधेयम्]॥ ५२॥

हीनतायामधिकतायाञ्च सहृदयानामनुद्वेगकरत्वं दर्शयति, भवानिति।—हे महीपाल! देवराजः भवानिव विराजते। [अत्र इवान्तपदमुपमानमिति नियमेन भवत्पदवाच्यस्योपमानत्वं, ततश्च उपमानभूतस्य राज्ञः मनुष्यत्वात् देवराजापेक्षया न्यूनत्वं स्वतः सिद्धमपि राज्ञः लोकपालांशसम्भूततया न अत्यन्तं वैरस्यम् आवहतीति न दोषः। राज्ञश्च लोकपालांश-सम्भूतत्वे प्रमाणं यथा—"अष्टानां लोकपालानां वपुर्धारयते

इत्येवमादौ सौभाग्यं न जहात्येव जातुचित्।
अस्त्येव क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥५४॥

नृपः" इति। अत्र हीनत्वाधिकत्वे च जाति-प्रमाण-धर्मगतत्वेन प्रत्येकं त्रिविधे वेदितव्ये। उक्तञ्च वामनेन—"जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम्" (का० सू० वृ० ४ अधि० २अ० ८सू०) इति। "तेनाधिकत्वं व्याख्यातम्" (का० सू० वृ० ४ अधि० २अ० ११सू०) इति च। तत्र जातिन्यूनत्वं यथोदाहृतं —"चाण्डालैरिव युष्माभिः साहसं परमं कृतम्।" प्रमाणन्यूनत्वं यथा—"वह्निस्फुलिङ्ग इव भानुरयं चकास्ति" इति। धर्मन्यूनत्वं यथा—"सूर्य्यांशुसम्मीलितलोचनेषु दीनेषु पद्मानिलनिर्मलेषु। साध्व्यः स्वगेहेष्विव भर्त्तृहीनाः केका विनेशुः शिखिनां मुखेषु॥" इति। एतानि च दोषाणामुदाहरणानि। दोषाभावत्वञ्चात्रोदाहृतमेव; अपि च—"उत्सङ्गितकुरङ्गोऽयमुत्तमण्डलमध्यगः। विधुर्व्याघ्र इवाभाति हन्तुं विरहदुर्बलान्॥" इति। अत्र श्लिष्टविशेषणेन निकृष्टस्यापि व्याघ्रस्य उपमानत्वं न दोषायेति। तथा "चाण्डालस्य दरिद्रस्य द्वावेव सदृशौ मम। चाण्डालस्य न गृह्णाति दरिद्रो न प्रयच्छति॥" अत्र निन्दायामेव तात्पर्य्ये उपमानस्य जातिन्यूनत्वं न दोषाय] पूर्व्वार्द्धेन हीनत्वमुदाहृत्याधिकत्वमुदाहरति, अलमिति।—नृपः तेजसा अंशुमतः सूर्य्यस्य, कक्षां साहश्यमिति यावत्, आरोढुम् अलं समर्थः। अत्र मनुष्यविशेषस्य नृपस्य उपमानम् अंशुमान्, देवत्वादसौ जात्या अधिक इति। एवमन्यत्रापि द्रष्टव्यम्॥ ५३॥

प्रोक्तोदाहरणे दोषाभावत्वं प्रतिपादयति, इतीति।—इत्येवमादौ एवमादिप्रयोगे, जातुचित् कदाचित्, सौभाग्यम्

हंसीव धवलश्चन्द्रः सरांसीवामलं नभः।
भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत्॥५५॥
ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम्।
गुणदोषविचाराय स्वयमेव मनीषिभिः॥ ५६॥

उपमावाचकशब्दाः।—

इववद्वायथाशब्दाः समाननिभसन्निभाः।
तुल्यसङ्काशनीकाश-प्रकाशप्रतिरूपकाः॥ ५७॥

उत्कर्षं, न जहाति न त्यजति एव, (अत उक्तं भोजराजेन—"हीनं यत्रोपमानं स्यादुपमेयं गुणाधिकम्। हीनोपमं तदस्याहुः कवयः काव्यदुष्टताम्॥" तथा "यत्रोपमानमुत्कृष्टमुपमेयं निकृष्यते। ज्ञेयं तदधिकौपम्यमस्यापि काव्यदोषता॥" इति)। क्वचित् प्रयोगे तु वाग्विदां विदुषाम्, उद्वेगः प्रतीतिव्याघातः, अस्त्येव। यथेति उदाहरणार्थम्॥ ५४॥

उदाहरति, हंसीवेति।—चन्द्रः हंसीव धवलः, नभः सरांसीव अमलं, भटः सैनिकः, श्वा इव भर्तृभक्तः स्वाम्यनुरक्तः, तथा खद्योतः भानुवत् भाति। अत्र यथाक्रमम् उपमानानां लिङ्गभेदः वचनभेदः न्यूनत्वम् अधिकत्वञ्च सामाजिकानां वैरस्यमावहतीति एतेषां दूषकत्वं नैयायिकमिति भावः॥५५॥

उपसंहरति, ईदृशमिति।—सद्भिः सुधीभिः, ईदृशं काव्यं, वर्ज्यते त्यज्यते, न प्रयुज्यते इत्यर्थः, मनीषिभिः सहृदयैः, स्वयमेव तत्र वर्जने, गुणदोषविचाराय कारणम् उद्वेगानुद्वेगरूपमित्यर्थः, चिन्त्यताम॥ ५६॥

उपमाप्रतीतिरभिधया लक्षणया व्यञ्जनया च भवतीति तस्या वाचकादीनि निरूपयति, इवेत्यादि।—इवादयः शब्दाः

"उपमायां सादृश्यसूचकाः प्रोक्ताः" इति वक्ष्यमाणेनान्वयः। "इव" इत्यारभ्य "शशाङ्कवदनादिषु" इत्यन्ताः सादृश्यवाचकाः, स्पर्द्धादीनां सादृश्ये सङ्केताकरणात् "स्पर्द्धते" इत्यादयः लक्षकाः, तथा "तस्य मुष्णाति सौभाग्यम्" इत्यादयः व्यञ्जकाः। ( यद्यपि वैयाकरणनये—"इवादीनां द्योतकत्वमेव न वाचकत्वं, निपातत्वादुपसर्गवत्" इत्यादिना इवादीनां वाचकत्वं नाङ्गीकृतं, तथाऽपि आलङ्कारिकैर्वाचकत्वमङ्गीकृतमिति बोध्यम्। इव-शब्दस्य सादृश्ये शक्तिः, सादृश्यञ्च तद्भिन्नत्वे सति तद्गतधर्मवत्त्वं, ततश्च चन्द्र इव मुखम् इत्यत्र तादृशचन्द्रवृत्तिधर्मवन्मुखम् इति बोधः। साधारणधर्मस्य शाब्दत्वे तद्रूपेणैव स इवार्थः; तथा च चन्द्र इव मुखं रमणीयम् इत्यत्र चन्द्रप्रतियोगिकान्योऽन्याभावसमानाधिकरणं यच्चन्द्रवृत्तिरमणीयत्वं तदाश्रयो मुखमिति बोधः ) वदिति इवार्थे तुल्यार्थे च विहितो वति-प्रत्ययः। [ तस्यानुशासनञ्च, "तत्र तस्येव" ( ५।१।११६ पा० ) "तेन तुल्यं क्रिया चेद्वतिः" ( ५।१।११५ पा० ) इति ] वा इति व-शब्दस्याप्युपलक्षकः, "व वा यथा तथैवैवम्" इत्यमरे व-शब्दस्यापि सादृश्यवाचकत्वात्। [तथा च "शात्रवं व पपुर्यशः" इति कालिदासः। "कादम्बखण्डितदलानि व पङ्कजानि" इति प्राचीनप्रयोगः ]। समानादयः उपमान्ताः शब्दा अपि सादृश्यवाचकाः इव-सदृशाः एव। ( अमरेणापि तथैवोक्तं, यथा—"वाच्यलिङ्गः समस्तुल्यः सदृक्षः सदृशः सदृक्। साधारणः समानश्च स्युरुत्तरपदे त्वमी॥ निभसङ्काशनीकाश-प्रतीकाशोपमादयः॥" इति; एतेन निभादयः शब्दा उत्तरपदस्था एव सदृशार्थाः, निभादीनान्तु नित्यसमासविषयत्वात् चन्द्रेण निभम् इति समासं विना प्रयोगस्यासाधुत्वञ्च कथितम्— "अविग्रहोऽस्वपदविग्रहो नित्यसमासः" इति सिद्धान्तात्।

प्रतिपक्षप्रतिद्वन्द्वि-प्रत्यनीकविरोधिनः।
सदृक्सदृशसंवादि-सजातीयानुवादिनः॥ ५८॥
प्रतिबिम्बप्रतिच्छन्द-सरूपसमसम्मिताः।
सलक्षणसदृक्षाभ-सपक्षोपमितोपमाः॥ ५९॥
कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः॥६०॥

ततश्च निभादयः शब्दाः समासान्तर्गता एव प्रयुज्यन्ते, उक्तञ्च क्षीरस्वामिना—"चन्द्रेण निभ इति न भवति, समास एव उत्तरपदत्वस्य रूढः" इति)॥ ५७॥

प्रतिपक्षेति।—प्रतिपक्षादयश्च सादृश्यार्था एव इति न व्याख्याताः॥ ५८॥

प्रतिबिम्बेति।—प्रतिरूपं बिम्बं प्रतिबिम्बं, सादृश्यमित्यर्थः, तथा प्रतिच्छन्दः प्रतिरूपः, सर्वे सादृश्यार्थाः सादृश्यवाचकाश्च ज्ञेयाः॥ ५९॥

कल्पदेशीयदेश्येति।—[ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७ पा०) इति सूत्रेण] जाताः तद्धितप्रत्ययाश्च सादृश्यार्थकत्वेन उपमावाचकेषु अन्तर्भवन्ति, ईषदसमाप्तेरपि सादृश्ये पर्य्यवसानात्; तदुक्तं कैयटेन—"गुड इव ईषदसमाप्ता द्राक्षा गुडकल्पाः, यद्यप्यत्रोपमानग्रहणं नोपात्तं, तथाऽपि सामर्थ्यादुपमानोपमेयभावः" इति। कल्पदेशीयदेश्यादिः इत्यादिपदेन सदृशार्थकप्रत्ययमात्रस्य ग्रहणम्; तेन च "स्थूलादिभ्यः प्रकारवचने कन्" (५।४।३ पा०) इति विहितस्य कन्प्रत्ययस्य सादृश्यबोधकत्वं, प्रकारशब्दस्य सादृश्यार्थकत्वात्, तथा "चञ्चद्बृहतोरुपसङ्ख्यानम्" (वा०) इति वार्त्तिकविहितः

समासश्च बहुव्रीहिः शशाङ्कवदनादिषु।
स्पर्द्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥

---

कन्प्रत्ययस्य सादृश्यार्थकः। "इवे प्रतिकृतौ" (५।३।९६ पा०) इति कन् च सादृश्यार्थ एव, तथा "उपमानादाचारे" (३।१।१० पा० "अधिकरणाच्च" (वा०) इत्येताभ्यां विहितस्य क्यच्प्रत्ययस्य "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इत्यनेन विहितक्यङ् प्रत्ययस्य च सादृश्यबोधकत्वम्; तथा "उपमाने कर्मणि च" (३।४।४५ पा०) इति विहितस्य णमुल्प्रत्ययस्य च उपमावाचकत्वं सिद्धम्; तेन च "पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचञ्चुः। नारीयते समरसीम्नि कृपाणपाणेरालोक्य यस्य चरितानि सपत्नसेना॥" इत्यादौ नवीनैरुदाहृते उपमात्वं समञ्जसम्। एवं णमुल्प्रत्ययेऽप्युदाहृतं—"स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः" इति। यत्तु केचिदाहुः,—"वत्यादयः इवार्थे विहिताः क्यङादयस्त्वाचारे इति वैधर्म्यम्" इति, तदपि अकिञ्चित्करं, न हि क्यङादयः आचारमात्रार्थाः किन्तु सदृशाचारार्थाः इति" तदपि परास्तं, सदृशाचारस्य क्यङाद्यर्थकत्वकल्पने प्रमाणाभावात्। अत्र न्यायपञ्चाननादीनां समाधानं—"क्यङादीनामुपमानपरतानियमव्युत्पत्तेः। तेषां अवयमात्रेणौपम्यस्य तद्वाचकस्येवादेर्वा आक्षेपलभ्यत्वात्" इति] अन्यूनार्थवादिनः अहीनार्थवाचकाः॥ ६० ॥

समास इति।—तथा समासश्च बहुव्रीहिः इति बहुव्रीहिः समासः उपमावाचकः, स च उपमानपूर्वः एव, उपमानाभावे सादृश्यप्रतीतेरभावात्। तत्रोदाहरणमाह, शशाङ्कवदनादिष्विति।—शशाङ्कस्य सदृशं वदनं

आक्रोशत्यवजानाति कदर्थयति निन्दति।
विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति ॥ ६२ ॥
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति।
तेन सार्द्धं विगृह्णाति तुलां तेनाधिरोहति ॥६३॥

यस्याः सा, [पूर्वाद्धेत्यादिना सप्तमपदलोपः। उपमानपूर्वस्य बहुव्रीहिसमासत्वञ्चोक्तं महाभाष्ये—"सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च। सप्तमीपूर्वस्य उपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः; कण्ठे स्थः कालोऽस्य कण्ठेकालः, उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः" इति। अत एव मृगनयना इत्यादौ मृगनयनमिव नयनं यस्या इति बहुव्रीहिरुत्तरपदलोपश्च इति प्रकाशकृताऽपि उक्तम्। समासश्चेति चकारेण "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२।१।५६ पा०) इत्यनेन विहितः कर्मधारयश्चेति वक्तव्यम्; यथा, पुरुषव्याघ्र इत्यादि] स्पर्द्धते इत्याद्यसूयतीत्यन्ताः शब्दाः लक्षकाः न तु वाचका इत्यवधेयम ॥ ६१ ॥

आक्रोशतीति।—आक्रोशति तिरस्करोति, अवजानाति निन्दति, आक्रोशतीत्यादि निन्दतीत्यन्ताः तिरस्कारार्थाः, तिरस्कारस्य सादृश्यार्थकत्वाभावेऽपि तव मुखं चन्द्रं तिरस्करोति इत्यादौ लक्षणया सादृश्यार्थः प्रतीयते। एवं विडम्बयतीत्यादयोऽपि सादृश्यार्था इति बोध्यम ॥ ६२ ॥

तस्येति।—तस्य मुष्णातीत्यादिनिषेधतीत्यन्ताः व्यञ्जकाः। तस्य सौभाग्यं मुष्णाति चोरयति, ("मुष्णाति" इत्यत्र "पुष्णाति" इति पाठान्तरम्) तेन तुलामिति तेन चन्द्रादिना उपमानेन,

तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥

इत्युपमावाचकम् ।

तुलां साम्यमित्यर्थः, अधिरोहति मुखाद्युपमेयमभीकरणार्थम् आश्रयति इत्यर्थः । ( केचित्तु तुलां सादृश्यम् इत्यर्थं कल्पयन्ति, तदसत्; तुलाशब्दस्य सादृश्यार्थकत्वे अधिरोहतीति पदं व्यर्थमेव स्यात् ) ॥ ६३ ॥

तत्पदव्यामिति ।—तत्पदव्यां तस्य उपमानस्य पथि, पद्धतौ इत्यर्थः, पदं स्थानं, धत्ते प्राप्नोति, सादृश्यं लभते इत्यर्थः । तस्य उपमानस्य, कक्षां साम्यं, विगाहते लभते । सर्वत्र तच्छब्द उपमानपरः इति बोध्यम् । ( एतदनन्तरं पुस्तकान्तरेषु "बन्धुः चोरः सुहृद्वादी कल्पः प्रख्यः समः प्रभः । देशीयदेश्यहृद्याभकोटराद्या इवार्थकाः ॥" इत्येवं पाठो दृश्यते, तन्न समीचीनं, कल्पदेशीयादीनां प्रख्यादीनाञ्च सादृश्यार्थकत्वस्य प्रागेवाभिहितत्वात्, अतः पुनस्तदुपादानं निरर्थकमेव प्रतिभाति । बन्धुप्रभृतीनामपि प्रागुक्तार्थत्वेन कथञ्चित् सङ्गहसम्भवात् अस्माभिर्न तदाद्रियते इत्यवधेयम् ) तमन्वेति तम् उपमानम् अनुगच्छति, अनुबध्नाति तमनुवर्त्तते इत्यर्थः । तच्छीलमिति तस्य शीलं स्वभावो यत्र उपमेये तत् तच्छीलम् उपमानसमानधर्मीत्यर्थः । तन्निषेधति तत् उपमानं स्वस्मादुत्कर्षयितुं वारयति इत्यर्थः ॥ ६४ ॥

तस्येति ।—उपमायां सादृश्यसूचकाः इमे शब्दाः कवीनां

१ इति पञ्चकम्, उपमावाचकं प्रकरणमित्यर्थः ।

रूपकसामान्यलक्षणम् ।—

**उपमैव तिरोभूत-भेदा रूपकमुच्यते ।**
**यथा बाहुलता पाणि-पद्मं चरणपल्लवः ॥ ६६ ॥**

बुद्धिसौख्यदाः मनःसौख्यविधायिनः, प्रोक्ताः निर्दिष्टाः, औपम्यद्योतनाय प्रयुज्यन्ते इत्यर्थः ॥ ६५ ॥

सम्प्रति रूपकं निरूप्यते, उपमेति ।—तिरोभूतः अप्रकटितः, भेदप्रतीतौ सत्यामपि सादृश्यातिशयमहिम्ना अपह्नुतप्रायः इत्यर्थः, भेदः उपमानोपमेययोर्भेदांशो यत्र तादृशी, उपमा सादृश्यमेव, आहार्य्यतादात्म्यारोपरूपा इति यावत्, रूपकम् उच्यते, कविभिः इति शेषः । (तथा च सत्यामपि सादृश्यप्रत्ययजन्यभेदप्रतीतौ यत्र सादृश्यातिशयनिबन्धनवैचित्र्यात्मकः उपमानेन उपमेयस्याभेदः गौणसारोपलक्षणाभ्यां प्रतीयते तत् रूपकमिति लक्षणम् । तथा हि उपमायां चन्द्र इव मुखं रमणीयम् इत्यादौ चन्द्रप्रतियोगिकान्योऽन्याभावसमानाधिकरणं यच्चन्द्रवृत्ति रमणीयत्वं तदाश्रयो मुखम् इति बोधात् तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यलक्षणत्वाच्च तत्र भेदप्रतीतिः सर्वसिद्धैव । इह रूपकेऽपि मुखं चन्द्र इत्यादौ भिन्नयोरुपमानोपमेययोरन्वयानुपपत्तेः प्रथमं लक्षणया चन्द्रसदृशं मुखम् इति बोधः, भेदप्रतीत्यनन्तरञ्च व्यञ्जनया चन्द्राभिन्नमिति बोधः, मुखत्वमुपमेयताऽवच्छेदकं तदधिकरणे मुखे चन्द्रतादात्म्यमुक्तरीत्या प्रतीयते । इयञ्चाभेदप्रतीतिराहार्य्या, आहार्य्यत्वञ्च बाधकालिकेच्छाप्रयोज्यत्वम्; अनाहार्य्यत्वे चाभेदप्रतीतिः नैव सम्भवति; मुखं, न चन्द्र इत्येतादृशबाधबुद्धिप्रतिबन्धकत्वात्; तदुक्तं चण्डीदासेन—"अलङ्कारत्वादाहार्य्यस्तादात्म्यारोप एव इत्यवसेयम्" इति। सादृश्यञ्चात्र गौणं

सारोपलक्षणान्तर्भ्यमेव, उपमानस्योपमेयप्रवृत्तौ गौणलक्षणाया हेतुत्वं शारीरिकमीमांसाभाष्यव्याख्याने वाचस्पतिमिश्रैरप्युक्तं, यथा—"अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तते" इति; तस्मात् "यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्। उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः॥" इति कण्ठाभरणोक्तदिशा लक्षणाजन्यसादृश्यप्रतीत्यनन्तरं जायमाना ताद्रूप्यप्रतीतिरेव रूपकमिति प्राचामाशयः। न च लक्षणाजन्येऽपि तत्सादृश्यबोधे कथं ताद्रूप्यप्रत्यय इति वाच्यम्; व्यञ्जनयैव तत्सम्भवात्; उक्तञ्च प्रकाशकारेण—"भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदागमश्च प्रयोजनम्" इति। तथा काव्यप्रदीपेऽपि—"शब्देन लाक्षणिके अर्थे प्रतिपादिते तत्र मुख्याभेदो व्यञ्जनया प्रतिपाद्यते। न च व्यञ्जने बाधः प्रतिबन्धकः इति काव्यविदां पन्थाः" इति। केचित्तु मुखं चन्द्रः इत्यादौ मुखं, न चन्द्र इत्याद्ययोग्यतानिर्णयसत्त्वेऽभेदान्वयः न जायते, किन्तु चन्द्रपदस्य चन्द्रसादृश्यविशिष्टलक्षणया चन्द्रसादृश्यविशिष्टभिन्नं मुखमित्येव बोध इत्याहुः। एवञ्चेदुपमारूपकयोरभेदापत्तिः सादृश्यप्रत्ययस्योभयत्राप्यविशिष्टत्वात्। अत्राहुः, सादृश्यप्रतीतेरुभयत्राविशेषेऽपि लक्षणायाः फलीभूतताद्रूप्यज्ञानमादाय रूपकस्योपमातो भेदः। उपमायान्तु ताद्रूप्यप्रतीतिर्नास्तीति नोक्तदोषः सम्भवतीति दिक्। एतेन चन्द्रसदृशं मुखं चन्द्र इत्यादौ शब्दप्रतिपाद्यसादृश्यप्रतीत्यनन्तराभेदग्रहे नायमलङ्कारः, सादृश्यस्य लक्षणाजन्यत्वाभावात्; तेनातिशयोक्तावपि नातिव्याप्तिः, तस्या गौणसाध्यवसानलक्षणामूलकत्वात्; तथा सम्भावनारूपायाम् उत्प्रेक्षायामपि नास्य प्रवेशः सम्भवति, सम्भावनायाः आहार्य्यत्वाभावात्। अपह्नुतौ तु—"नेदं नभोमण्डलमम्बुराशिः" इत्यादौ उपमेयस्य

निषेधपूर्वकमभेदप्रतीतिः, इह तु तन्नास्तीति भेदः। तथा निदर्शनादावपि भेदः प्रोक्तदिशैवानुसन्धेयः। उपमैव इत्येवकारेण उपमाने उपमेयतादात्म्यारोपस्यैव रूपकत्वं बोध्यं, तेन "आयुर्घृतम्" इत्यादौ कार्य्यकारणभावसम्बन्धेनाभेदारोपे तु नायमलङ्कारः इति स्वमतं सूचितम्। रत्नाकरस्तु—"सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्यनिर्देशः स सर्वोऽपि रूपकम्" इत्याह। "अभेदारोप एव रूपकम्" इति च काव्यप्रदीपः। "तद्रूपकमभेदो यः उपमानोपमेययोः" इति च काव्यप्रकाशकारः। चित्रमीमांसाकृतस्तु—"बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते। उपरञ्जकतामेति विषयी रूपकं तदा॥" इत्याहुः)

यथा बाहुलतेत्यादि।—बाहुरेव लता बाहुलता, पाणिरेव पद्मं पाणिपद्मं, चरण एव पल्लवः चरणपल्लवः। [अत्र रूपककर्मधारयः। व्यासे यथा—बाहुर्लतेत्यादि। अत्र बाहौ लतात्वारोपः बाहुर्लता इवेत्याद्युपमाऽपेक्षया समधिकं वैचित्र्यम् आवहति इति बोध्यम्। अत्र केचिदाहुः,—मुखचन्द्रं पश्यामीत्यादौ मुखं चन्द्र इव इत्युपमितसमासस्य तथा मुखमेव चन्द्र इति रूपकसमासस्यापि सम्भवात् उभयोः सन्देहसङ्कर इति। तन्न रुचिरं, साधकबाधकाभावस्थले एव सन्देहसङ्करस्याङ्गीकारात्; तथा हि यत्र तु साधर्म्यम् उपमेये मुख्यतया, उपमाने तु उपचरितत्वेन स्थितं तत्र उपमायाः प्राधान्यं, यत्र च उपमाने मुख्यतया उपमेये च उपचारेण स्थितं तत्र रूपकस्य प्राधान्यं, यथा—मुखचन्द्रं चुम्बतीत्यादौ उपमा एव, तथा मुखचन्द्रः प्रकाशते इत्यादौ रूपकमेव, न तु उभयोः सङ्करः। उक्तञ्च प्रकाशकृता—"एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः" इति। विश्वनाथेनाप्युक्तं—"साधकबाधकयोर्द्वयोः

व्यस्तरूपकं समस्तरूपकं समस्तव्यस्तरूपकञ्च ।—

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥६७॥

रेकतरस्य सद्भावे न पुनः सन्देहः । यथा मुखचन्द्रं चुम्बति इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकं, चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् । मुखचन्द्रः प्रकाशते इत्यत्र प्रकाशाख्यो धर्मः रूपकस्य साधकः मुखे चोपचरितत्वेन सम्भवति इति नोपमाबाधकः इति । एवं सुन्दरं वदनाम्बुजम् इत्यादौ साधारणधर्मप्रयोगे—"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२।१।५६ पा०) इति वचनादुपमासमासो न सम्भवतीत्युपमाया बाधकः, एवञ्चात्र मयूरव्यंसकादित्वात् रूपकसमास एव"। सुन्दरमिति रूपकस्य साधकत्वात् वदनमेवाम्बुजमिति रूपकसमासः। एतेन मुखचन्द्र इत्यादौ उपमास्थले मुखं चन्द्र इव इत्युपमितिसमासः, मुखमेव चन्द्र इत्यादौ रूपके कर्मधारय इति समासद्वयाश्रयणम् इति बोध्यम् ] ॥६६॥

सामान्यलक्षणानन्तरं विभागः प्राप्तसङ्गतिकः इति रूपकस्य भेदं निरूपयिष्यन् प्रथमं व्यस्तरूपकस्य उदाहरणमाह, अङ्गुल्य इति ।—त्वं नः अस्माकं, प्रत्यक्षचारिणी परिदृश्यमाना, वसन्तश्रीः ; तथा हि ते अङ्गुल्यः पल्लवानि, नखार्चिषः कुसुमानि, बाहू लते । (अत्र लिङ्गभेदप्रदर्शनेन रूपके लिङ्गभेदो न दोषावह इति सूच्यते । कदाचित् वचनभेदोऽपि न दोषाय ; यथा—शास्त्राणि चक्षुर्नवमित्यादि । अत्र शास्त्राणि इत्यनेन सर्वेशास्त्रज्ञानस्य लाभात् ज्ञानस्य च एकजातीयत्वात् बहुवचनान्तमपि एकवचनान्तवत् भासते । अनौद्दृशस्थाने तु दोषाय ; यथा—मुखं पद्मानीत्यादि ) ॥ ६७ ॥

इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥६८॥

सकलरूपकम् ।—

ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥
अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।
तद्योग्यस्थानविन्यासादेतत् सकलरूपकम् ॥७०॥

इतीति ।—इति पूर्वोक्तम्, एतत् मङ्गुल्य इत्यादि, असमस्ताख्यम् असमस्तरूपकमित्यर्थः । ( अत्र पल्लव-कुसुमलता-वमन्तश्रीशब्दानां गुणवृत्त्याश्रयेण अङ्गुली-नखाचिं बाहुवर्णनीयनायिकाभिः सह सामानाधिकरण्यात् सामान्येत्यादिशब्दाप्रयोगाच्च तिरोभूतेऽप्युपमानार्थे समासो न कृत इति असमस्तरूपकमित्याशयः ) पूर्वरूपकं बाहुलतेत्यादि पूर्वश्लोकप्रदर्शितरूपकं, समस्तं समासघटितशब्दगतत्वेन समस्तरूपकम् । 'बाहुलता' 'पाणिपद्मं' 'चरणपल्लवः' इत्यादौ च समासः कृतः इति समस्तरूपकमिति निष्कर्षः । समस्तव्यस्तरूपकमुदाहरति, स्मितमिति ।—स्मितं मृदुहास्यं, मुखेन्दाः मुखमेव इन्दुः तस्य ज्योत्स्ना इति समस्तव्यस्तरूपकम् उभयमिश्ररूपकमित्यर्थः, तथा च, स्मितं ज्योत्स्ना इत्यत्र समासो न कृतः, मुखेन्दोरित्यत्र च समास इति मिश्ररूपतया समस्तव्यस्तरूपकमिति । ( पूर्णश्लोकस्तु—"स्मितं मुखेन्दोर्ज्योत्स्ना ते प्रभाऽम्बु कुचकुम्भयोः । दोर्लतापल्लवे पाणौ पुष्पं सखि ! नखार्चिषः ॥" इति ) ॥ ६८ ॥

सकलरूपकं निरूपयति, ताम्रेत्यादि ।—ताम्राङ्गुलय एव दलश्रेणयः यस्य, तथा नखानां दीधितयः किरणा एव, केसरा

अवयवरूपकम्।—

अकस्मादेव ते चण्डि! स्फुरिताधरपल्लवम्।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥७१॥
मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम्।
नान्यथाकृतमत्रास्यमतोऽवयवरूपकम् ॥ ७२ ॥

---

यस्य तादृशं, भवच्चरण एव पङ्कजं तत्, भूपालैः मूर्द्धि ध्रियते। अत्र अङ्गुल्यादौ दलादित्व दलश्रेणित्वं, तथा पादे चरणे, पद्मतां पङ्कजत्वम्, आरोप्य तस्य पङ्कजस्य, योग्ये स्थाने शिरसि इत्यर्थः, विन्यासात् धारणात्, एतत् सकलरूपकं सकलरूपकसंज्ञक-मित्यर्थः, चरणे पङ्कजत्वमारोप्य तदनुकूलत्वेन चरणावय-वेष्वपि पङ्कजावयवानामारोपेण सम्पूर्णरूपणादिति भावः। (अत्र मूर्द्धि धारणरूपस्य साधारणधर्मस्य उपमाने पङ्कजे एव औचित्यात् रूपकसमासः, न तु उपमितसमासः, उपमेयस्य चरणस्य मूर्द्धि धारणायोग्यत्वात् इत्युक्तमेव प्राक्। तथा च यत्र अङ्गिनस्तदङ्गानाञ्च रूपणं शब्देन प्रतिपादितं भवेत् तत् सकलरूपकमित्यभिप्रायः। दर्पणकारस्तु इदं साङ्गरूपकमाह; यथा—"अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।" यथा— "रावणावग्रहक्लान्तमिति वागमृतेन सः। अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे॥" इति॥ ६८ ॥ ७० ॥

अवयवरूपकं निरूपयति, अकस्मादित्यादि।—चण्डि! हे अतिकोपने! "चण्डस्त्वत्यन्तकोपनः" इत्यमरः, ते तव, मुखम् अकस्मादेव स्फुरितः कम्पितः, अधर एव पल्लवः यत्र तादृशं सत्, मुक्तानां रुच इव रुचः कान्तयो यासां तादृशीः मुक्तारुचः मौक्तिकाकाराः, घर्माम्भसां कणा एव मञ्जर्य्यः ताः, धत्ते धारयति। अत्र घर्माम्भः मञ्जरीकृत्य मञ्जरीत्वेन आरोप्य, तथा

अवयविरूपकम्।—

वल्गितभ्रु गलद्घर्म-जलमालोहितेक्षणम्।
विवृणोति मदावस्थामिदं वदनपङ्कजम्॥ ७३॥
अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम्।
आसीत् गमितमत्रेदमतोऽवयविरूपकम्॥ ७४॥

अधरं पल्लवीकृत्य पल्लवत्वेन आरोप्य, आस्यं मुखं, न अन्यथाकृतं पद्मत्वेन न आरोपितम्, अतः अवयवमात्ररूपणात्, अवयवरूपकम्। (मुखे पद्मत्वारोपस्तु अर्थवशात् उन्नेयः। दर्पणकारस्तु इदमेकदेशविवर्त्तिरूपकमाह; यथा—"यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्" इति)॥ ७१॥ ७२॥

अवयविरूपकं निरूपयति, वल्गितेत्यादिद्वाभ्याम्।—वल्गिते भ्रुवौ यत्र तत् वल्गितभ्रुयुगलं, गलन्ति घर्मजलानि यस्मात् तादृशं, तथा आलोहिते आरक्ते, ईक्षणे यस्य तथाभूतम्, इदं वदनमेव पङ्कजं मदावस्थां मद्यपानजनितां दशाम्, आनन्दजनितहर्षोत्फुल्लतामित्यर्थः, विवृणोति। (अत्र वल्गितभ्रु इत्यत्र दलं, घर्मजलमित्यत्र च मकरन्दम, आलोहितेक्षणमित्यत्र परागपिञ्जरम इति च शब्देनानुपात्तमपि रूपणं वदनस्य पङ्कजत्वारोपेणार्थं प्रतीयते, ततश्च पङ्कजस्य मदावस्थाप्रकटनं दिवाप्रकाशरूपं बोध्यं, विकशितस्यैव वल्गितदलादिसम्भवात्, ततश्च वल्गितदलादिविशिष्टं पङ्कजं प्रोक्तविशेषणविशिष्टं वदनमेव इति बोधः। एवञ्च रूपकस्य वैचित्र्यजनकत्वेन सम्भवत्येव रूपकोदाहरणम्। केचित्तु वदनमम्बुजमिति व्यस्तमेव पाठं समीचीनं मन्यन्ते, अन्यथा वदनपङ्कजमित्यत्र वल्गितादीनामुपात्तानां वदनमात्रगतत्वेन उपमायाः बाधकत्वेन रूपकस्य च विनिगमकत्वाभावात् वदनमेव पङ्कजमिति समास एव

एकाङ्गरूपकम् ।—

मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।
मुखेन मुग्धः सोऽप्येष जनो रागमयः कृतः ॥७५॥
एकाङ्गरूपकञ्चैतदेवं द्विप्रभृतीन्यपि ।
अङ्गानि रूपयन्त्यत्र—"

भवितुं नार्हति इति सुधीभिर्विचार्य्यम्) अत्र लक्षणं सङ्गमयति, अविकृत्येति।—मुखाङ्गानि मुखस्य अङ्गानि अवयवानि, भ्रूप्रभृतीनि इत्यर्थः, अविकृत्य पङ्कजाङ्गत्वेन अनारोप्य, मुखमेव अरविन्दतां गमितं पङ्कजत्वेन आरोपितम्. आसीत्, अतः अवयविमात्रस्य रूपणात्, अवयवस्य भ्रुवः दलत्वेन घर्मजलस्य मकरन्दत्वेन लोहित्यस्य च परागपिञ्जरभ्रमरत्वेन अध्यारोपात्तरूपणाभावाच्चेत्यर्थः, इदं प्रोक्तोदाहरणरूपम्, अवयविरूपकमिति ज्ञेयम् इति। (दर्पणकारस्तु इदं निरङ्गरूपकमाह) ॥ ७३ ॥ ७४ ॥

प्रागभिहितस्य अवयवरूपकस्य भेदविशेषान् दर्शयति, मदेत्यादिद्वाभ्याम्।—स एष जनोऽपि ते तव, मदेन पाटलौ गण्डौ यस्य तेन, तथा रक्ते नेत्रे एव उत्पले यस्य तादृशेन, मुखेन मुग्धः तथा रागमयः अनुरागपूर्णः लौहित्यमयश्च. कृतः ॥ ७५ ॥

लक्षणमवतारयति, एकाङ्गेति।—एतत् प्रागुक्तरक्तनेत्रोत्पलेनेत्यत्र रूपणात् मदपाटलगण्डेन इत्यत्र च तदभावात् एकाङ्गरूपकाख्यमिदम्; एवं यत्र अङ्गद्वयादिभिः रूपणं तत्र द्व्यङ्गत्र्यङ्गरूपकादि भवेत्, तदेवाह, एवमिति।—एवं प्रागुक्तप्रकारेण, अत्र अवयवरूपके, द्विप्रभृतीनि अङ्गानि अपि रूपयन्ति अप्रस्तुतत्वेन आरोपयन्ति, न तु अङ्गिनम् इति भावः, तेन च द्व्यङ्गरूपकादिसंज्ञकानि भवन्तीति निष्कर्षः।—

युक्तायुक्तरूपकम्।—

योगायोगौ भिदाकरौ ॥७६॥

युक्तरूपकोदाहरणम्।—

स्मितपुष्पोज्ज्वलं लोल-नेत्रभृङ्गमिदं मुखम्।
इति पुष्पद्विरेफाणां सङ्गत्या युक्तरूपकम् ॥७७॥

अयुक्तरूपकोदाहरणम्।—

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम्।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥७८॥

उक्तेष्वपि भेदेषु विशेषमाह, योगायोगाविति।—योगः द्वाङ्गादिरूपके आरोप्यपदार्थस्य युक्तः सम्बन्धः, अयोगः युक्तसम्बन्धाभावः तौ, भिदाकरौ भेदकौ, अङ्गारोपेषु परस्परयोगायोगाभ्यां युक्तरूपकमयुक्तरूपकञ्चेति भेदद्वयमित्यर्थः ॥ ७६ ॥

अथ युक्तरूपकमुदाहरति, स्मितेति।—स्मितमेव पुष्पं स्मितपुष्पं तेन उज्ज्वलं, लोले नेत्रे एव भृङ्गौ यत्र तादृशम्, इदं मुखम्। (अत्र मुखावयवयोः स्मितनेत्रयोः पुष्पभृङ्गत्वेन अभेदारोपात् द्वाङ्गरूपकम्; तत्र पुष्पे भ्रमरावस्थानस्य युक्तत्वमिति युक्तरूपकञ्च) तदेव समर्थयते, इतीति।—इति उक्तप्रकारेण, पुष्पद्विरेफाणां सङ्गत्या पुष्पे भ्रमरसम्बन्धस्य युक्ततया इत्यर्थः, युक्तरूपकमिदम्। ("न कस्य नन्दनं सुभ्रु! सुरभिश्वसितानिलम् ?॥" इति पराद्धम्। तथा हि स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गं सुरभिश्वसितानिलं ते मुखं न कस्य नन्दनम् ? इति पूर्णश्लोकार्थः। पुष्पभृङ्गादीनां परस्परयुक्तत्वपपत्तेः युक्तं नाम रूपकमिति भोजराजस्याशयः) ॥ ७७ ॥

अयुक्तरूपकमुदाहरति, इदमिति।—आर्द्रं सरसं, स्मितमेव ज्योत्स्ना यत्र तत्, तथा स्निग्धे स्नेहद्राविणी, नेत्रे एव उत्पले

[^] विषमरूपकम् ।—

रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥
मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्त्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥

सविशेषणरूपकम् ।—

हरिपादः शिरोलग्न-जह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्क-सुरानन्दोत्सवध्वजः ॥ ८१ ॥

पद्मे यत्र तादृशं, मुखम्, इत्यत्र, ज्योत्स्नोत्पलायोगात् ज्योत्स्नाया उत्पलस्य च आरोप्यमाणयोरेतयोः, अयोगात् एककालिकत्वसम्बन्धाभावात्, उभयोर्भिन्नकालिकत्वेन उत्पले ज्योत्स्नायोगाभावादित्यर्थः, अयुक्तं नाम रूपकम् । ("जगन्नेत्रेन्दुरस्माकं कथं तापाय कल्पते ? ॥" इति पराद्धम् ) ॥ ७८ ॥

विषमरूपकमुदाहरति, रूपणादित्यादिद्वाभ्याम् ।—अङ्गिनः रूपणात् तथा अङ्गानां तदवयवानां, रूपणारूपणाश्रयात् कस्यचिदङ्गस्य रूपणात् कस्यचित् वा अरूपणात्, ललितं सुन्दरं, वैचित्र्यजनकमित्यर्थः, विषमं नाम रूपकं जायते । यथा इति उदाहरति, मदरक्तेति ।—मदेन रक्तौ कपोलौ यत्र तेन, तथा नर्त्तिते भ्रुवौ एव लते यत्र तादृशेन, त्वन्मुखमेव इन्दुस्तेन, मन्मथः भुवनत्रयं मर्दितुं जेतुम्, अलं समर्थः । ( अत्र इन्दुना मुखावयवो रूपितः, भ्रुवौ च तदवयवौ लताऽवयविभ्यां, मदरक्तौ तु कपोलौ न केनापि रूपितौ इति वैषम्यात् विषमावयवं नाम रूपकम् ) ॥ ७९ ॥ ८० ॥

सविशेषणरूपकं निर्दिशति, हरीत्यादिद्वाभ्याम् ।—शिरसि

विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत् सविशेषणरूपकम् ॥ ८२ ॥

विरुद्धरूपकम् ।—

न मीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥
अक्रिया चन्द्रकार्य्याणामन्यकार्य्यस्य च क्रिया ।
अत्र सन्दर्श्यते यस्मात् विरुद्धं नाम रूपकम् ॥ ८४ ॥

अग्रभागे, लग्नं जह्नुकन्यायाः गङ्गायाः, जलमेव अंशुकं श्वेतवसनाञ्चलं यस्य सः, तथा असुरेभ्यः निःशङ्का ये सुरा देवाः, बलिदमनात् इति भावः, तेषामानन्दोत्सवस्य ध्वजः केतुः, हरिपादः वामनचरणः, जयति । विशेषणसमग्रस्य सविशेषणस्य, केतोर्ध्वजस्य, यत् ईदृशम् उक्तरूपं, रूपं यथोक्तविशेषणविशिष्टो यो हरिपादः यश्च हरिहृतासुरेभ्यो निःशङ्कानां सुराणामानन्दोत्सवे ध्वजः तयोः सविशेषणयोरेव प्रतीयमानसादृश्ययोः परस्परमुपमानोपमेयभावः इति भावः, पादे चरणे, तस्य अर्पणात् आरोपात्, सविशेषणरूपकमिदम् । ( अत्रेदं प्रतिभाति, हरिपादस्य केतुत्वारोपो जलस्य वसनाञ्चलारोपमन्तरेण न सम्भवति, अत एव तद्विशेषणस्यांशुक इत्यस्य रूपणात् विशेषणविशिष्टस्यैव ध्वजस्य हरिचरणे रूपणमिति सविशेषणरूपकमिति दिक् ) ॥ ८१ ॥ ८२ ॥

विरुद्धरूपकं निरूपयति, नेत्यादिद्वाभ्याम् ।—तव मुखमेव इन्दुः पद्मानि न मीलयति न सङ्कोचयति, अप्रकाशादिति भावः, नभश्च आकाशञ्च, न अवगाहते न उत्तिष्ठति, अधनतत्वात् इति भावः ; केवलं मम असूनां प्राणानां, हरणाय एव कल्पते प्रभ-

हेतुरूपकम्।—

गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्वतः।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः॥ ८५॥
गाम्भीर्य्यप्रमुखैरत्र हेतुभिः सागरो गिरिः।
कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम्॥ ८६॥

श्लिष्टरूपकम्।—

राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम्।
सखि! वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम्॥ ८७॥

यति। मानिनीं प्रत्युक्तिरियम्। अत्र चन्द्रस्य आरोप्यमाणस्य, कार्य्याणां पद्मनिमीलनादीनाम्, अक्रिया अननुष्ठानं, प्रत्युत अन्यस्य यमस्य, कार्य्यस्य प्राणहरणरूपस्य, क्रिया यस्मात् सन्दर्श्यते तस्मात् इदं विरुद्धं नाम रूपकम्। (उपमानाभिन्नतया रूपितस्य उपमेयमुखस्य उपमानपद्मकार्य्यकारित्वस्य एवौचित्यात् तदकरणं तदन्यकार्य्यकरणाच्च विरुद्धम् इति बोध्यम्)॥ ८३॥ ८४॥

हेतुरूपकं निरूपयति, गाम्भीर्य्येणेत्यादि।—गाम्भीर्य्येण दुरवगाह्याशयत्वेन, समुद्रः असि, गौरवेण सारवत्तया, पर्वतः असि, तथा लोकानां कामदत्वात् कल्पपादपः असि, (अत्र हेतौ तृतीया पञ्चमी च) अत्र गाम्भीर्य्यप्रमुखैः हेतुभिः उपमेये सागरः गिरिः तथा कल्पद्रुमः क्रियते आरोप्यते, तत् तस्मात्, हेतुनिबन्धमारोपणात् इत्यर्थः, हेतुरूपकमिदम्। (अनेकधर्म्मानेकधर्म्मोल्लेखनात् उल्लेखालङ्कारोऽयम् इति नव्याः)॥ ८५॥ ८६॥

श्लिष्टरूपकं निरूपयति, राजेति।—हे सखि! तव इदं वक्त्रमेव अम्बुजं राजहंसः राजश्रेष्ठः हंसविशेषश्च, ("राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी) तस्य उपभोगार्हं

उपमारूपक-व्यतिरेकरूपके ।—

दृष्टं साधर्म्यवैधर्म्य-दर्शनात् गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥
अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥ ८९ ॥
चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।
असमग्रोऽप्यसौ शश्वदयमापूर्णमण्डलः ॥ ९० ॥

सम्भोगयोग्यं. भ्रमरः कामुकः षट्पदश्च, ("भ्रमरः कामुके भृङ्गे" इति मेदिनी ) तस्य प्रार्थ्यं स्पृहणीयं, सौरभं यस्य तादृशम्, इत्यत्र, श्लिष्टरूपकं साधारणधर्मस्य राजहंसोपभोगार्हत्वादि-रूपस्य श्लेषमूलकत्वात् इति ॥ ८७ ॥

उपमारूपकं व्यतिरेकरूपकञ्च निरूपयति, दृष्टमिति ।—गुणयोगात् आरोप्यमाणः चन्द्रादिर्गौणः,आरोपविषयः मुखादिश्च मुख्यः, तयोः साधर्म्यदर्शनात् साधारणधर्मयोगात्, उपमा-रूपकं, वैधर्म्ययोगात् व्यतिरेकरूपकम् इति रूपकद्वितयम् दृष्टं, कविभिः इति शेषः । यथेति उदाहरणार्थम् ॥ ८८ ॥

उपमारूपकमुदाहरति, अयमिति ।—मदेन मद्यपानेन, आलोहिता आरक्ता, छाया यस्य तादृशः, अयं मुखमेव चन्द्रमाः सन्नद्धः समुज्ज्वलः, उदयरागः उदयकालिकलौहित्यं यस्य तथा-भूतस्य, चन्द्रस्य प्रतिगर्जति ( चन्द्रस्येति सम्बन्धविवक्षया षष्ठी ) तथाभूतं चन्द्रं स्पर्द्धते, न तु अनुकरोतीत्यर्थः । ( अत्र चन्द्रा-भिन्नतया आरोपविषयस्य मुखस्य औपम्यसूचकप्रतिगर्जनरूप-साधर्म्यसम्बन्धात् उपमारूपकमिदम् ) ॥ ८९ ॥

व्यतिरेकरूपकमुदाहरति. चन्द्रमा इति ।—देवैः असमग्रो-

आक्षेपरूपकम् ।—

मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।
न ते सुन्दरि ! संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥

ऽपि असौ चन्द्रमाः शश्वत पीयते, मया तु आपूर्णमण्डल सम्पूर्णप्रकाशः, अयं तव मुखमेव चन्द्रमाः पीयते । ( अत्र मुख्य गौणयोर्मुखचन्द्रयोः सम्पूर्णत्वासम्पूर्णत्वरूपवैधर्म्ययोगात् व्यतिरेकरूपकमिदम् । अयञ्च व्यतिरेकः उपमेयस्य उपमानात् समधिकमुत्कर्षं व्यञ्जयति । भोजराजस्तु इदं व्यतिरेकवन्नाम रूपकमाह ; तत्रोदाहरणं यथा—"अनाघ्रातं पुष्पं किसलयमलूनं कररुहैः अनाविद्धं रत्नं मधु नवमनास्वादितरसम् । अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ? ॥" अत्र पुष्प-किसलय-रत्न-मधु-पुण्यफलानाम् अनाघ्रातमित्यादिविशेषणापादितव्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणात् व्यतिरेकवद्रूपकमिदम् । दर्पणकारस्तु इदमेव अधिकारूढवैशिष्ट्यसंज्ञकमाह, यथा—"अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्" इति ) ॥ ९० ॥

आक्षेपरूपकं निरूपयति, मुखेति ।—हे सुन्दरि ! इत्थम् एवम्, अतिकठोरमित्यर्थः, अन्योपतापिनः कामसन्तापकस्य अथवा विरहिजनपीड़कस्य, चन्द्रस्य इति शेषः, चन्द्रत्वं ते तव, मुखमेव चन्द्रः तस्य न संवादि नानुकारकं, न युक्तमित्यर्थः, चन्द्रः परोपतापकरः त्वन्मुखन्तु सर्वाह्लादकमिति भावः । एतत् आक्षेपरूपकम् आक्षेपाख्यं रूपकम्, आक्षेपः प्रतिषेधोक्तिः, रूपणस्य तत्पूर्वकत्वादिति भावः । ( नेदमपह्नुतिः, प्रस्तुतप्रतिषेधाभावात, मुखमेवात्र प्रस्तुतम् आरोप्यमाणत्वेन चन्द्रस्याप्रस्तुतत्वमित्यवधेयम् ) ॥ ९१ ॥

समाधानरूपकम्।—

मुखेन्दुरपि ते चण्डि! मां निर्दहति निर्दयम्।
भाग्यदोषात् ममैवेति तत्समाधानरूपकम् ॥९२॥

रूपकरूपकम्।—

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्त्तकी तव।
लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥९३॥

समाधानरूपकं निर्दिशति, मुखेन्दुरिति।—चण्डि! हे कोपने! ममैव भाग्यदोषात् ते मुखमेव इन्दुरपि मां निर्दयं निर्दहति तापयति; इति अत्र, समाधानात् भाग्यदोषान्ममेति स्वयं हेतुवादप्रदर्शनात्, तत् समाधानरूपकम् ॥ ९२ ॥

रूपकरूपकं लक्षयति, मुखेति।—अस्मिन् तव मुखमेव पङ्कजं तदेव रङ्गः नाट्यशाला तस्मिन्, भ्रूरेव लता सा एव नर्त्तकी लीलानृत्यं करोति, (अत्र "लीलानाट्यामृतं दृष्टौ सखि! एनां निषिञ्चति" इति भोजराजसम्मतः पाठः) इति एतत्, रम्यम् अतिमनोहरम्, (अत्र रम्यमिति विशेषणेन बहूनां रूपणात् यत्र रमणीयता न स्यात्, तत्रास्य न प्रसङ्गः इति; यथा—"नारीबाहुलताव्याली-परिरब्धः कुतः सुखी?" इत्यादि) रूपकरूपकम् एकेन रूपितस्यापि पुनरन्येन रूपणात् इति भावः। (तथा च प्रथमं मुखे पङ्कजत्वारोपः तदनन्तरञ्च मुख-पङ्कजे रङ्गत्वारोपः, एवं भ्रुवि लतात्वारोपः, तदनन्तरं लतायां नर्त्तकीत्वारोप इति। इदञ्च समासे एव बोध्यम्, असमासे तु एकस्मिन् बहूनामारोपे हेतुमति हेतुरूपकम्, अहेतुके माला-वयविरूपकमिति। यथा—"सौन्दर्य्यस्य तरङ्गिणी तरुणि-मोत्कर्षस्य हर्षोद्गमः कान्तेः कार्म्मणकर्म्म नर्म्मरहसामुल्लासना-वासभूः। विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया

तत्त्वापह्नवरूपकम् ।—

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ९४ ।
मुखादित्वं निवर्त्त्यैव पद्मादित्वेन रूपणात् ।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥

---

बाणाः पञ्चशिलीमुखस्य ललनाचूड़ामणिः सा प्रिया ॥" इति ) ॥ ९३ ॥

तत्त्वापह्नवरूपकं निरूपयति, नैतदित्यादिद्वाभ्याम् ।—एतत् तव मुखं न, इदं पद्मं, नेत्रे न, इमौ भ्रमरौ, एतानि केसराणि किञ्जल्का एव, एता दन्तार्चिषः न । अत्र मुखादित्वं मुखत्वादिकं, निवर्त्त्य प्रतिषिध्य एव, पद्मादित्वेन पद्मत्वादित्वेन, रूपणात् मुखादिषु पद्मत्वादिभिरध्यासात्, एतत् उद्भावितः व्यञ्जितः, गुणस्य उपमेयगतस्य, उत्कर्षः वैचित्र्यातिशयः यत्र तत्, तत्त्वापह्नवरूपकं तत्त्वस्य याथार्थ्यस्य मुखत्वादिकस्य अपह्नव-मूलकत्वादित्यर्थः । [अत्रारोपस्य प्रकृतनिषेधपूर्वकत्वादपह्नुति-रेव भवितुं युक्ता इति चेदत्रोच्यते, यत्र प्रकृतस्य धर्मनिषेध-पूर्वको धर्मान्तरारोपस्तत्रापह्नुतिः, यत्र तु प्रकृतधर्मि-निषेधेनाप्रकृतधर्म्यन्तरारोपस्तत्र रूपकमेव इति प्राचामाशयः, अत एवापह्नुतौ यथा उदाहृतं ग्रन्थकृता—"न पञ्चेषुः स्मर-स्तस्य सहस्रं पत्रिणामिति" (का० २ प० ३०४ श्लोः) ; अत्र तु पञ्चबाणताधर्मं प्रतिषिध्य सहस्रबाणतारूपधर्मान्तरारोप इति । नैतन्मुखम् इत्यादौ तु मुखादेर्धर्मिणः प्रतिषेधेनान्यस्य धर्मिणः पद्मादेरारोपः इति । केचित्तु—रूपके सादृश्यप्रतीतिरस्त्येव अपह्नुतौ न तथा इति वदन्ति । नव्यास्तु—निषेधपूर्वकारोपे अपह्नुतिरेव अन्यत्र रूपकम् इत्युभयत्रापि धर्मधर्मिसमारोपः

न पर्य्यन्तो विकल्पानां रूपकोपमयोरतः।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥९६॥

इति रूपकचक्रम्। *

रूपे अपह्नुतिं मन्यन्ते। उक्तञ्च दर्पणकृता रूपकलक्षणे निरपह्नवे इति विषयविशेषणम्; यथा—"रूपकं रूपितारोपात् विषये निरपह्नवे" इति ]॥ ९४ ॥ ९५ ॥

रूपकं संहरति, नेति।—रूपकस्य उपमायाश्च विकल्पानां विशेषाणां, पर्य्यन्तः शेषः, न, अस्तीति शेषः, अतः दिङ्मात्रं सामान्यं, दर्शितं, मया इति शेषः, अनुक्तम् अकथितं, धीरैः धीमद्भिः, अनुमीयताम् अनुमानेन ज्ञायताम्। [ अत्र हि अन्यैरुक्ता रूपकभेदाः कतिचित् शिष्याणां बोधसौकर्य्यार्थं प्रदर्श्यन्ते। तत्र केचिदाहुः,—रूपकं तावत् त्रिविधं, सावयवं निरवयवं परम्परितञ्च; आद्यं समस्तवस्तुविषयम् एकदेशविवर्त्ति च, द्वितीयं शुद्धं मालारूपञ्च, तृतीयमपि द्विविधं, तच्च परम्परा एकारोपस्यान्यारोपहेतुत्वमित्येवंरूपा सञ्जाता अत्र इति (तारकादित्वादितच्प्रत्ययसिद्धं) परम्परितपदं व्युत्पत्तिलभ्यमेवार्थं प्रकटयति; तेन च, यत्र यदारोपं विना अन्यत्रारोपो न सम्भवति तत् परम्परितं नाम रूपकम् आरोप्यारोपाधिकरणवाचकस्य श्लिष्टत्वे आरोप्यारोपविषयवाचकपदयोः भेदे च सम्भवतीति द्विविधम्। तत्र श्लिष्टवाचके यथा—"भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्त्तुमभ्यासपरम्परा परा। अहो! महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्त्तिनर्त्तकी॥", इति; अत्र राज्ञि महावंशः महाकुलसम्भवः, एवं महान् वंशो वेणुरिति वेणुत्वारोपश्च कीर्त्तौ नर्त्तकीत्वारोपे निमित्तं महा-

* रूपकाणां चक्रं संहतिः, इदमिति शेषः।

दीपकलक्षणम्।—

जातिक्रियागुणद्रव्य-वाचिनैकत्रवर्त्तिना।
सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा॥ ९७॥

वंशपदस्य श्लिष्टत्वञ्च। यथा वा—"विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते!" इत्यादि वाचके श्लिष्टे मालारूपं परम्परितसंज्ञकमिदम्। भेदे यथा—"धृतैव या स्फाटिकपट्टिकाऽलिके बभूव केशाम्बुदाविद्युदेव सा। मुखेन्दुसम्बन्धवशादिवायुषः स्थिरत्वमूढे नियतं तदायुषः॥" इति; इह केशेषु मेघत्वारोपः सुवर्णपट्टिकायां विद्युत्त्वारोपे निमित्तं, केशाम्बुदयोर्भिन्नत्वञ्च इति। विश्वनाथस्तु एवमन्यमपि भेदमत्राह; यथा—"क्वचिद्वैयधिकरण्येऽपि यथा—'विदधे मधुपश्रेणीमिह भ्रूलतया विधिः।' क्वचिद्वैधर्म्येऽपि यथा—'सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुणज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा। यैरेषाऽपि दुराशया कलियुगे राजाऽऽवली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम्?'॥ इति। अधिकारूढवैशिष्ट्यसंज्ञकरूपकं यथा मम—'इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः' इत्यादि"]॥ ९६॥

अथ दीपकमाह, जातीति।—एकत्र प्रबन्धस्य यस्मिन् कस्मिन् अंशे, आदावन्ते मध्ये वा इत्यर्थः, वर्त्तिना स्थितेन, जातिक्रियागुणद्रव्यवाचिना जातिवाचकेन क्रियावाचकेन गुणवाचकेन द्रव्यवाचकेन वा एकेन पदेन, चेत् यदि, सर्वस्य वाक्यस्य प्रबन्धघटकस्य, उपकारः उपकरणम्, अन्वयोपपत्तिरित्यर्थः, भवतीति शेषः, तं दीपकम् आहुः, दीपस्य एकदेशस्थितस्य अपि देशान्तरीयपदार्थप्रकाशनवत् अस्य

आदिजातिदीपकम् ।—

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।
स एवावनताङ्गीनां मानभङ्गाय कल्पते ॥ ९८ ॥

आदिक्रियादीपकम् ।—

चरन्ति चतुरम्भोधि-वेलोद्यानेषु दन्तिनः ।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥ ९९ ॥

"नानाधिकरणस्थानां शब्दानां सम्प्रदीपकः । एकवाक्येन संयोगो यस्तद्दीपकमुच्यते ॥" इति । दर्पणकारस्तु—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥" इति लक्षणमाह, तत्तु प्राचीनोक्तलक्षणात् भिन्नप्रकारमेव । तस्याप्यनेकवाक्यगतत्वे इहोक्तलक्षणलक्षितत्वमपि सम्भवति इति दिक् ) यथेति वक्ष्यमाणोदाहरणार्थम् ॥ ९७ ॥

तत्र जातिगतमादिदीपकमुदाहरति, पवन इति ।— दक्षिणः दक्षिणदेशादागतः, पवनः मलयानिल इत्यर्थः, वीरुधां लतानां, जीर्णं शुष्कं, पर्णं पत्रं, हरति पातयति, स एव पवनः, अवनताङ्गीनां, यौवनभरेणेति भावः, नारीणामिति शेषः, मानभङ्गाय प्रणयकोपशान्तये, कल्पते प्रभवति, तस्य अतीवोद्दीपकत्वात् इति भावः । ( अत्र सर्वपादादिस्थितेन पवन इति पदेन यथा पूर्वार्द्धस्यान्वयः तथा स एवेति तच्छब्दपरामर्शितपवनपदार्थेन , परार्द्धस्याप्यन्वय इति जातिविषयमादिदीपकमिदम् ) ॥ ९८ ॥

क्रियागतमादिदीपकमाह, चरन्तीति ।—ते तव, दन्तिनः गजाः, चतुरम्भोधिवेलोद्यानेषु चत्वारः अम्भोधयः समुद्राः, तेषां वेलाः तटानि एव, उद्यानानि उपवनानि तेषु, कुन्दभासः

आदिगुणदीपकम्।—

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः॥ १००॥

आदिद्रव्यदीपकम्—

विष्णुना विक्रमस्थेन दानवानां विभूतयः।
क्वापि नीताः कुतोऽप्यासन्नानीता दैवतर्द्धयः॥१०१॥

---

कुन्दकुसुमकान्तयः, शुभ्रा इत्यर्थः, गुणाश्च शौर्य्यादयश्च, चक्रवालाद्रिकुञ्जेषु लोकालोकपर्वतकुञ्जदेशेषु, ("लोकालोकश्चक्रवालः" इत्यमरः) चरन्ति, तव यशांसि विश्वव्यापकानीति भावः। (अत्र द्वयोरपि वाक्ययोरादिपदस्थितेन एकेन चरन्तीति क्रियापदेन चकारबलयोगात् उत्तरार्द्धवाक्यस्याप्यन्वयोपपत्तेः क्रियाविषयदीपकमिदम्)॥ ९९॥

गुणविषयमादिदीपकमाह, श्यामला इति।—दिशः प्रावृषेण्याभिः वर्षाकालिकीभिः, जीमूतपङ्क्तिभिः मेघराजिभिः, भुवश्च भूतलानि च, सुकुमाराभिः कोमलाभिः, नवशाद्वलराजिभिः नवतृणश्रेणीभिः, श्यामलाः श्यामवर्णाः, भवन्तीति शेषः। (अत्र श्यामला इति गुणवाचकेन सर्वपादादिस्थेन उभयार्द्धयोरन्वयात् गुणविषयमादिदीपकमिदम्)॥ १००॥

आदिद्रव्यदीपकमाह, विष्णुनेति।—विक्रमस्थेन विक्रमे पराक्रमे त्रिपादक्रमणे च, तिष्ठति इति तेन विक्रमस्थेन त्रिविक्रमेण, विष्णुना वामनरूपिणा, दानवानां बलिप्रभृतीनां, विभूतयः सम्पदः, क्वापि नीताः क्षयं प्रापिता इत्यर्थः, तथा देवतानाम् इन्द्रादीनाम्, ऋद्धयः ऐश्वर्य्याणि, कुतोऽपि आनीता आसन्। (अत्र पादादिगतेन एकव्यक्तिवाचितया विष्णुनेति द्रव्यपदेन सर्ववाक्यानामन्वयात् आदिद्रव्यदीपकमिदम्)॥१०१॥

इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि ।
वाक्ययोर्दर्शयिष्यामः कानिचित्तानि तद्यथा॥१०२॥

मध्यजातिदीपकम् ।—

नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।
बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥१०३॥

मध्यक्रियादीपकम् ।—

मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते ।
चर्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम् ॥१०४॥

इत्थमादिदीपकान्युक्त्वा मध्यान्तयोरपि दीपकानि वक्तुं प्रतिजानीते, इतीति ।—इति उक्तप्रकारेण, आदिदीपकानि आदिपदगतानि जात्यादिदीपकानि, उक्तानि, एवम् आदि-दीपकवत्, मध्यान्तयोरपि वाक्ययोः कानिचित् तानि दीपकानि, दर्शयिष्यामः । तद्यथेति वक्ष्यमाणोदाहरणार्थम् ॥ १०२ ॥

जातिगतमध्यदीपकमाह, नृत्यन्तीति ।—कलापिनः मयूराः, निचुलस्य स्थलवेतसस्य, उत्सङ्गे अधोभागे, नृत्यन्ति, गायन्ति केकाध्वनिं कुर्वन्ति, तथा पयोदेषु मेघेषु, हर्षाश्रुगर्भिणीः आनन्दबाष्पवाहिनीः, दृशः चक्षूंषि च, बध्नन्ति । ( अत्र मध्य-वाक्यगतेन कलापिन इति पदेन चकारबलात् वाक्यान्तरेऽपि अन्वयात् कलापिन इत्यस्य जातिवाचकत्वाच्च जातिगतमध्य-दीपकमिदम् ) ॥ १०३ ॥

क्रियागतमध्यदीपकमाह, मन्द इति ।—मन्दः मृदुः, गन्ध-वहः वायुः, क्षारः क्षारवत् तीक्ष्णः इत्यर्थः, असह्यः इति भावः, इन्दुश्च वह्निः अग्निः, चर्चार्थं स्थासकार्थं, देहविलेपनार्थ-मित्यर्थः, "चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि" इति हैमः, चन्दनपातः चन्दनप्रक्षेपः, शस्त्रपातः शस्त्राघातसदृशः

अन्तजातिदीपकम्।—

अलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम्।
चलञ्च तड़ितां दाम बलं कुसुमधन्वनः॥१०५॥

अन्तक्रियादीपकम्—

त्वया नीलोत्पलं कर्णे स्मरेणास्त्रं शरासने।
मयाऽपि मरणे चेतस्त्रयमेतत् समं कृतम्॥१०६

पीड़ाकर इत्यर्थः, जायते, प्रवासिनां विरहिणामिति स
र्थोऽज्यम्। (अत्र मध्यवाक्यगतेन जायते इति क्रियाप
सर्ववाक्यान्वयात् क्रियागतमध्यदीपकमिदम्। गुणद्रव्यगत
मध्यदीपकयोः उदाहरणमिहानुक्तमपि किञ्चित् प्रदर्श्यं
तत्र गुणगतमध्यदीपकं यथा—"तड़िद्भिर्वारिवाहानां र
स्त्रीभिः प्रवासिनाम्। लताभिः पादपानाञ्च समायाते र
गमे॥" अत्र योगशब्दस्य संयोगार्थत्वात् गुणत्वं, मध्यव
गतेन च तेन सर्ववाक्यान्वयात् गुणगतमध्यदीपकमिदम्।
गतमध्यदीपकं यथा—"मुहुर्विश्वं संसृजति बिभर्त्ति च
हरिः। मुहुश्च नाशं नयति बालक्रीडनकौतुकी॥" इति।
एकव्यक्तिवाचिना मध्यवाक्यगतेन हरिणा इति द्रव्यपदेन
वाक्यान्वयात् द्रव्यगतमध्यदीपकमिति बोध्यम्)॥१०४

जातिगतमन्तदीपकमाह, अलमिति।—जलधरोद्गीर्णं
वृष्टिरित्यर्थः, गृहशिखण्डिनां गृहमयूराणां, कुलं तथा
चञ्चलं, तड़ितां दाम च एतत् त्रयं कुसुमधन्वनः कामस्य
सैन्यम्, उद्दीपकत्वात् पतिपाम् इति भावः। (अत्र मृद
जातिवाचकेन अन्तवाक्यस्थेन पदेन सर्ववाक्यमरान्वयात्
गतान्तदीपकमिदम्)॥१०५॥

क्रियागतान्तदीपकमाह, त्वयेति।—त्वया कर्णे नील

मालादीपकम् ।—

शुक्लः श्वेतार्चिषो वृद्धै पक्षः पञ्चशरस्य सः ।
स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः ॥१०७॥
इत्यादिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी ।
वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥१०८॥

स्मरेण कामेन, शरासने अस्त्रं, मयाऽपि मरणे चेतः चित्तम्, एतत् त्रयं समं युगपत्, कृतम् । मानिनीं प्रति नायकस्य उक्तिरियम् । (अत्र अन्तवाक्यस्थेन कृतमिति क्रियापदेन सर्ववाक्यसमन्वयात् क्रियागतान्तदीपकमिदम् । गुणद्रव्यगते अन्तदीपके तु अप्रदर्शितेऽपि अन्यतः समाहृत्य प्रदर्श्यते, तत्र गुणगतान्तदीपकं यथा—"इदमुज्जृम्भते बिम्बं भानोस्तापयितुं जगत् । ममैव हृदयं चण्डि ! मुखञ्च तव लोहितम् ॥" द्रव्यगतान्तदीपकं यथा—"सत्यं विश्वं सन्तपति सत्यं कर्षति वै रसान् । तमांसि तु निहन्तीति प्रार्थनीयोदयो रविः ॥" इति च क्रमेण अन्तगताभ्यां लोहितरविभ्यां गुणद्रव्याभ्यां सर्ववाक्यान्वयात् गुणद्रव्यगतत्वं बोध्यम् ) ॥ १०६ ॥

अथ मालादीपकमाह, शुक्ल इत्यादि ।—शुक्लः पक्षः श्वेतार्चिषः श्वेतकिरणस्य चन्द्रस्य, वृद्धै भवति, सः पक्षः, पञ्चशरस्य कामस्य, वृद्धै, स च कामः, रागस्य अनुरागस्य, वृद्धै, रागोऽपि यूनां तरुणानां, रत्युत्सवे श्रियः वृद्धै, इति अत्र, आदिदीपकत्वेऽपि आदिवाक्यस्थेन शुक्लः पक्षः इति जातिगुणवाचकेन सर्ववाक्यान्वयेऽपीत्यर्थः, पूर्वपूर्वव्यपेक्षिणी पूर्वपूर्ववाक्यमपेक्षमाणा, वाक्यमाला वाक्यसमूहः, प्रयुक्ता इति वैचित्र्यातिशयात् इति भावः, तत् मालादीपकं मतम् । तथा च जात्यादीनां पूर्वपूर्वसापेक्षोत्तरोत्तरवाक्यगतत्वे मालादीपकमिति तात्पर्य्यम् ।

विरुद्धार्थदीपकम् ।—

अवलेपमनङ्गस्य वर्द्धयन्ति बलाहकाः ।
कर्शयन्ति तु घर्मस्य मारुतोद्धूतशीकराः ॥१०९॥
अवलेपपदेनात्र बलाहकपदेन च ।
क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थदीपकम् ॥ ११० ॥

(अन्ये तु एकस्यां क्रियायां रूपान्तरेणान्वये मालादीपकमाहुः; उक्तञ्च अलङ्कारकौस्तुभे—"माला तु पूर्वपूर्वं विध्यन्तरेणोत्तरान्वयिनि।" उदाहृतञ्च तत्र—"लावण्येन भवत्कलेवरमिदं तेनोत्कटं यौवनं तेनासौ सुतनु! प्रसूनविशिखस्तेन द्रुतं कार्मुकम्। तेन प्रापि पुनः शिलीमुखगणस्तेनापि मन्मानसं तेनोत्तापभयप्रमाथदलनभ्रान्तिप्रमोहोदयः॥" इति। अत्र प्राप्नोति क्रियायां पूर्वं कर्मीभूतस्य पश्चात् तस्यैव कर्त्तृत्वमित्यादिरीत्या मालात्वम्" इति। प्रकाशकृता तु—"सङ्ग्रामाङ्गनमागतेन भवता चापे समारोपिते" इत्यादौ क्रियापदस्य भिन्नवाक्यगतत्वेऽपि मालादीपकं स्वीकृतम्) ॥ १०७॥ १०८ ॥

विरुद्धार्थदीपकं निरूपयति, अवलेपमिति।—बलाहकाः मेघाः, मारुतैः वायुभिः, उद्धूतः प्रेरितः, शीकरः जलविन्दुर्येषु तथाभूताः सन्तः, उभयत्रापि हेतुभूता इति भावः, अनङ्गस्य कामस्य, अवलेपं वर्द्धयन्ति, घर्मस्य ग्रीष्मस्य तु, अवलेपं कर्शयन्ति ग्रीष्मं कृशीकुर्वन्तीत्यर्थः। अत्र अवलेपपदेन बलाहकपदेन च वर्द्धनकर्शनरूपक्रिययोः कर्मभूतेन कर्तृभूतेन च इत्यर्थः, विरुद्धे वर्द्धनकर्शनरूपे क्रिये, संयुक्ते क्रमतया कर्तृतया च अन्विते, तत् तस्मात्, विरुद्धार्थदीपकमिदम्। (अत्र वर्द्धनकर्शनरूपविरुद्धक्रियाद्वयस्यापि एकस्मिन् कर्त्तरि बलाहके कर्मणि चावलेपे सम्बन्धात् वैचित्र्यातिशयजनकत्वेन तथाविध-

एकार्थदीपकम् ।—

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥१११॥
अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।
यतो जलधरावल्या तस्मादेकार्थदीपकम् ॥११२॥

श्लिष्टार्थदीपकम् ।—

हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः ।
दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः ॥११३॥

---

वर्णनादयमलङ्कारः । विरोधप्रशमनञ्च अनङ्गधर्मरूपसम्बन्धि-भेदात् सम्भवतीत्यवधेयम् । एतच्च आदिवाक्यगतेन कर्मणा कर्त्रा च उत्तरवाक्यान्वयात् आदिदीपकमपि, ततश्च बलाहकस्य जातिवाचकत्वात् अवलेपस्य च गुणवाचित्वात् आदिगतजातिदीपकगुणदीपकयोः सङ्कर इति ध्येयम् ) ॥ १०८ ॥ ११० ॥

एकार्थदीपकमुदाहरति, हरतीत्यादि ।—असौ जलधरावली आशानां दिशाम्, आभोगं विस्तारं, हरति, ज्योतिषां गणं ग्रहनक्षत्रात्मकज्योतिर्मण्डलं, गृह्णाति, अद्य मे मम, प्राणांश्च आदत्ते । अत्र अनेकेषां शब्दानां हरति गृह्णाति आदत्ते इति क्रियावाचकानाम्, उपादानात् उपस्थापनात्, अपिरत्र ऊहनीयः; यतः जलधरावल्या एका एव क्रिया एकार्थकत्वात् त्रयाणामेव क्रियावाचकपदानामिति भावः, दीप्यते, तस्मात् एकार्थदीपकमिदम् ॥ १११ ॥ ११२ ॥

श्लिष्टार्थदीपकमुदाहरति, हृद्येत्यादिद्वाभ्याम् ।—हृद्यः शीतलत्वात् मनोरमः, गन्धवहो येषु ते इति जीमूतविशेषणम् ;

अत्र धर्मैरभिन्नानामभ्राणां दन्तिनां तथा ।
भ्रमणेनैव सम्बन्ध इति श्लिष्टार्थदीपकम् ॥११४॥
अनेनैव प्रकारेण शेषाणामपि दीपके ।
विकल्पानामवगतिर्विधातव्या विचक्षणैः ॥११५॥

इति दीपकचक्रम् । *

आवृत्तिमाह—

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ।
दीपकस्थान एवेष्टमलङ्कारत्रयं यथा ॥११६॥

हृद्यं गन्धं मदजनितं वहन्तीति तथोक्ता इति मतङ्गज-विशेषणम्; हृद्यगन्धवहाः, तमालवत् श्यामलाः त्विषः कान्तयः येषां तादृशाः, तुङ्गाः अत्युन्नताः, जीमूता मेघाः, दिवि आकाशे, एते मतङ्गजाश्च वारणाश्च, भुवि भ्रमन्ति । अत्र धर्मैः साधारणैः हृद्यगन्धवहत्वादिभिः, अभिन्नानां हृद्यगन्ध-वहादिपदानां श्लिष्टत्वेन उभयत्र योजनादेकधर्मवतामित्यर्थः, अभ्राणां तथा दन्तिनां भ्रमणेनैव एकया भ्रमणक्रियया एव, वाक्यद्वये सम्बन्ध इति श्लिष्टार्थदीपकं श्लिष्टशब्दप्रतिपाद्यत्वात् इति भावः ॥ ११३ ॥ ११४ ॥

दीपकमुपसंहरति, अनेनेति ।—अनेन एव प्रकारेण वैचित्र्यविशेषवशेन, दीपके शेषाणाम् उक्तावशिष्टानामपि, विकल्पानां भेदानाम्, अवगतिः ज्ञानं, विचक्षणैः सुधीरैः, विधातव्या ॥ ११५ ॥

अथ आवृत्तिं निरूपयति, अर्थावृत्तिरिति ।—दीपकस्थाने दीपकस्य सम्भवे एव, अर्थावृत्तिः अर्थस्य एकस्य वाक्यार्थस्य, आवृत्तिः वाक्यान्तरे पुनरुपस्थितिः, पदावृत्तिः वाक्यान्तरीय-

---

* इति उक्तविधं, दीपकानां चक्रं समूहः ।

अर्थावृत्तिः ।—

विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः।
उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च॥११७॥

पदावृत्तिः ।—

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम् ।
यूनाञ्चोत्कण्ठयत्येषः मानसं मकरध्वजः ॥ ११८॥

पदस्य वाक्यान्तरे पुनरुपस्थितिः, च तथा, उभयावृत्तिरेव वाक्यार्थस्य पदस्य च वाक्यान्तरे पुनरुपस्थितिरेव, अलङ्कारत्रयम् इष्टं, कविभिरिति शेषः ; वाक्यान्तरे तत्पदस्यानुपादानेऽपि वाक्यान्तरीयपदस्य अनुषङ्गादिना अन्वयनिर्वाहात् दीपकं सम्भवति, तथा तत्रैव तदर्थकपदान्तरस्य तत्पदस्यैव वा समुपादाने अयमावृत्त्यलङ्कारः इति । ( भोजराजेन तु आवृत्तित्रयं दीपकस्यैव भेद इत्युक्तम् ; यथा दीपकनिरूपणे—"अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरावली । सम्पुटं रसना माला चक्रवालञ्च तद्भिदाः ॥" इति ) ११६ ॥

अर्थावृत्तिमुदाहरति, विकसन्तीति।—कदम्बानि विकसन्ति, कुटजद्रुमाः स्फुटन्ति, कन्दल्यश्च उन्मीलन्ति, च किञ्च, ककुभानि अर्जुनफलपुष्पादीनि, दलन्ति । वर्षावर्णनमिदम् । अत्र विकसन्तीत्यादिक्रियापदचतुष्टयं भिन्नप्रकृतिकमपि एकार्थमेवेति अर्थस्य पुनरावर्त्तनात् अर्थावृत्तिरियम् । ( उदाहरणान्तरं यथा—"हृष्यति चूतेषु चिरं तुष्यति वकुलेषु मोदते मरुति । इह हि मधौ कलकूजिषु पिकेषु च प्रीयते कामो ॥" इति ॥ ११७ ॥

पदावृत्तिमाह, उत्कण्ठयतीति।—मेघानां माला कलापिनां वृन्दम् उत्कण्ठयति, एषः मकरध्वजः यूनां मानसम्

उभयावृत्तिः।—

जित्वा विश्वं भवानत्र विहरत्यवरोधनैः।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः॥ ११९॥

उभयावृत्तिः।*

आक्षेपः तद्भेदाश्च।—

प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा।
अथास्य पुनराक्षेप्य-भेदानन्त्यादनन्तता॥ १२०॥

उत्कण्ठयति च, मेघानाम् उद्दीपकत्वात् इति भावः। अत्र प्रथमम् उत्कण्ठयति इति पदस्य आनन्दोदयात् दिदृक्षया उद्ग्रीवकरणरूपोऽर्थः, अपरम् उत्कण्ठयति इति पदस्य औत्सुक्यवशीकरणरूपोऽर्थः, तस्मात् उत्कण्ठयतीति पदमात्रस्य पुनरावृत्तिः न तु अर्थस्येति पदावृत्तिः॥ ११८॥

उभयावृत्तिमाह, जित्वेति।—भवान् विश्वं जित्वा अत्र पृथिव्याम्, अवरोधनैः अन्तःपुरिकाभिः, विहरति, ते तव, रिपुवर्गः दिवं गतः सन् अप्सरोभिर्विहरति, युद्धमरणे स्वर्गलाभादप्सरःप्राप्तिरिति भावः। अत्र विहरतीति पदस्य तदर्थस्य च उत्तरवाक्ये पुनरावृत्तेः उभयावृत्तिरिति बोध्यम्। (उद्देश्यप्रतिनिर्देश्यतायामेकशब्दप्रयोगस्यैवौचित्यात् नात्र उभयोरेकार्थत्वेऽपि कथितपदतादोषः)॥ ११९॥

आक्षेपं निरूपयति, प्रतिषेधेति।—प्रतिषेधस्य उक्तिः कथनं, वक्तुं प्रारब्धस्यापि विशेषद्योतनार्थं निषेधभाषणमित्यर्थः, न तु तत्त्वतः प्रतिषेधः, तात्त्विकत्वे वैचित्र्याभावात् अलङ्कारत्वाभावप्रसङ्गात् इति भावः, आक्षेपः तदाख्यालङ्कारः, विशेषविवक्षाप्रतिपत्तये इष्टार्थस्य प्रतिषेधाभास आक्षेपः इत्यर्थः।

* इति उक्तप्रकारः, आवृत्त्यलङ्कारस्य गणः समूहः, आवृत्तित्रयम् इत्यर्थः।

वृत्ताक्षेपः।—

अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः।
इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः॥ १२१॥
इत्यनङ्गजयायोग-बुद्धिर्हेतुबलादिह।
प्रवृत्तैव यदाक्षिप्ता वृत्ताक्षेपः स ईदृशः॥ १२२॥

(उक्तञ्च—"इष्टस्याप्यपि (भि?) धातुं योऽर्थस्य विशेषबोधाय। स्वयमेव प्रतिषेधः स वक्ष्यमाणोक्तविषयः आक्षेपः" इति अलङ्कारकौस्तुभे। तथा आग्नेयपुराणे—"प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया। तमाक्षेपं ब्रुवन्ति—" इति)। स च त्रैकाल्यापेक्षया त्रैकालिकवस्तुगतत्वेन, त्रिधा वर्त्तमानाक्षेपः अतीताक्षेपः भविष्यदाक्षेपश्च इति, अथ अस्य च त्रिविधस्यापि आक्षेपस्य, पुनः आक्षेप्यस्य प्रतिषेध्यस्य, भेदाः धर्मधर्मिकार्य्य-कारणादयः, तेषाम् आनन्त्यात् अपरिसङ्ख्येयत्वात्, अनन्तता अनन्तप्रभेद इत्यर्थः। नव्या अपि वक्तुमिष्टस्य विशेषप्रतिपत्तये निषेधवत् प्रकटनमाक्षेपमामनन्ति तथा अनिष्टार्थस्य विधि-रूपेणाक्षेपणमप्यपरं भेदमङ्गीकुर्वते च; तदुक्तं विश्वनाथेन—"वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये। निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा॥ अनिष्टस्य तथाऽर्थस्य विध्याभासः परो मतः॥" इति)॥ १२०॥

वृत्ताक्षेपं निर्दिशति, अनङ्ग इत्यादि।—अनङ्गः कामः, इषुभिर्बाणभूतैः, पञ्चभिः पुष्पैः अरविन्दादिभिः, (उक्तञ्च—"अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥" इति) विश्वं व्यजयत विजितवान्, इति असम्भाव्यम् अविश्वास्यमित्यर्थः, तथा च विजेतुस्ताव-

वर्त्तमानाक्षेपः ।—

कुतः कुवलयं कर्णे करोषि कलभाषिणि ! ।
किमपाङ्गमपर्य्याप्तमस्मिन् कर्मणि मन्यसे ? ॥१२३॥
स वर्त्तमानाक्षेपोऽयं कुर्वत्येवासितोत्पलम् ।
कर्णे काचित् प्रियेणैवं चाटुकारेण रुध्यते ॥१२४॥

दनङ्गत्वं, बाणानाञ्च पञ्चसङ्ख्यता, तेषाञ्च पुष्पमयत्वं न तु दृढ़त्वं, जेतव्यञ्च प्रकाण्डपदार्थो विश्वमिति विजयोऽश्रद्धेय एवेति भावः ; अथवा वस्तूनां पदार्थानां, शक्तयः विचित्राः अचिन्त्य-स्वरूपाः, वस्तुशक्त्या सर्वमेव सम्भाव्यते इति तत्त्वम् । इति प्रागुक्तोदाहरणदर्शिता, प्रवृत्ता जाता, प्रागुद्भावितेत्यर्थः, अनङ्गेन कामेन, अङ्गाभाववता इति भावः, यो जयः देवदानवपूर्ण-विश्वपराभवरूप इत्यर्थः, तस्य अयोगः असम्भाव्यत्वं, तस्य बुद्धिः इह अत्र स्थले, हेतुबलात् वस्तुशक्तेः विचित्रत्वरूपकारणात्, यत् आक्षिप्ता प्रतिषिद्धा, अतः ईदृशः एष इत्यर्थः, सः प्रसिद्धः, वृत्ताक्षेपः वृत्तस्य अतीतस्य, सञ्जातस्य असम्भवबुद्धिरूपस्य इत्यर्थः, आक्षेपः प्रतिषेधः इति ॥ १२१ ॥ १२२ ॥

वर्त्तमानाक्षेपमुदाहरति, कुत इत्यादि ।—हे कल-भाषिणि ! कर्णे कुवलयं नीलोत्पलं, कुतः कस्मात्, करोषि ? धारयसि ? कुवलयधारणं मा कुरु इत्यर्थः, अस्मिन् कर्मणि कर्णशोभाकर्मणि, अपाङ्गं किम् अपर्य्याप्तम् अक्षमं, मन्यसे ? अपाङ्गेनैव कर्णशोभासम्पादनात् कुवलयधारणं व्यर्थमिति भावः । सः अयं वर्त्तमानाक्षेपः, यतः असितोत्पलं नीलोत्पलं, कर्णे कुर्वती एव, न तु कृतवती वा करिष्यन्तीति भावः, काचित् नायिका, चाटुकारेण प्रियेण एवं रुध्यते प्रति-

भविष्यदाक्षेपः।—

सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ! लप्स्यसे।
अन्यचुम्बनसङ्क्रान्त-लाक्षारक्तेन चक्षुषा॥ १२५॥
सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी।
कदाचिदपराधोऽस्य भावीत्येवमरुन्ध यत्॥१२६॥

धर्माक्षेपः।—

तव तन्वङ्गि! मिथ्यैव रूढमङ्गेषु मार्दवम्।
यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम्?॥१२७॥

---

षिध्यते, कुतः इत्यादि निषेधवाक्यस्य किमपाङ्गम् इत्यादिना प्रश्नपरेणापि निषेधपर्य्यवसायिना वाक्येन समर्थनात् प्रतिषेध-प्रतीतिः, तस्य च प्रतिषेधस्य वर्त्तमानकालवृत्तित्वात् वर्त्तमाना-क्षेप इति भावः॥ १२३॥ १२४॥

भविष्यदाक्षेपमाह, सत्यमित्यादि।—हे वल्लभ! सत्यं ब्रवीमि, त्वम् अन्यस्या नायिकायाः, चुम्बनेन सङ्क्रान्तया लाक्षया रक्तेन चक्षुषा मां द्रष्टुं न लप्स्यसे मद्दर्शनं न प्राप्स्यसी-त्यर्थः। अत्र अतिमनस्विनी अतिमानवती काचित् नायिका, कदाचित् अस्य नायकस्य, अपराधो भावी भविष्यति, इति, आशङ्क्य इति शेषः, यत् एवं नायकम् अरुन्ध नायिकाऽन्तर-प्रसक्तौ निषिद्धवती, अतः अयं स प्रसिद्धः, भविष्यतः नायिका-ऽन्तरानुरागस्य, आक्षेपात् प्रतिषेधात्, भविष्यदाक्षेप इति निष्कर्षः॥ १२५॥ १२६॥

आक्षेपस्य भेदानामानन्त्येऽपि कतिचित् भेदान् दर्शयिष्यन् प्रथमं धर्माक्षेपमाह, तवेत्यादि।—हे तन्वङ्गि! तव अङ्गेषु मार्दवं रूढं स्थितं, मिथ्यैव, यदि सत्यं तव अङ्गानि मृदूनि एव, तदा अकाण्डे अकारणं, मां किं रुजन्ति? तापयन्ति? अत्र

धर्माक्षेपोऽयमाक्षिप्तमङ्गनागात्रमार्दवम् ।
कामुकेन यदत्रैवं कर्मणा तद्विरोधिना ॥ १२८ ॥

धर्म्याक्षेपः ।—

सुन्दरी सा न वेत्येष विवेकः केन जायते ? ।
प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥१२९॥
धर्म्याक्षेपोऽयमाक्षिप्तो धर्मी धर्मं प्रभाऽऽह्वयम् ।
अनुज्ञायैव यद्रूपमत्याश्चर्य्यं विवक्षता ॥ १३० ॥

कारणाक्षेपः ।—

चक्षुषी तव रज्येते स्फुरत्यधरपल्लवः ।
भ्रुवौ च भुग्नौ न तथाऽप्यदुष्टस्यास्ति मे भयम् ॥१३१॥

---

कामुकेन एवम् उक्तिनैपुण्येन इत्यर्थः, तद्विरोधिना मार्दवविरोधिना, कर्मणा तापनरूपेण, अङ्गनाया गात्रस्य मार्दवं यत् यस्मात्, आक्षिप्तं प्रतिषिद्धं, तस्मात् अयं धर्मस्य मार्दवरूपस्य, आक्षेपात् धर्माक्षेपः ॥ १२७ ॥ १२८ ॥

धर्म्याक्षेपमुदाहरति, सुन्दरीत्यादि ।—सा सुन्दरी नायिका, अत्र वर्त्तते इति शेषः, न वा इत्येषः विवेक निश्चयज्ञानं, केन कथं, जायते ? न कथमपीत्यर्थः, हि यतः, तरलं चञ्चलम्, इतस्ततः विसृमरमित्यर्थः, प्रभामात्रं केवलं ज्योतिरेव, दृश्यते, तस्य प्रभामात्रस्य, आश्रयः आधारभूता नायिका, न । अत्र अत्याश्चर्य्यं रूपं प्रभूतप्रभाविशिष्टं नायिकासौन्दर्य्यं, विवक्षता प्रतिपादयितुमिच्छता नायकेन, प्रभाऽऽह्वयं प्रभारूपं, धर्मम् अनुज्ञाय एव संस्थाप्यैव, धर्मी तदाश्रयभूता नायिका, यत् यस्मात्, आक्षिप्तः प्रतिषिद्धः, तस्मात् अयं धर्म्याक्षेपः ॥१२९॥१३०॥

कारणाक्षेपमुदाहरति, चक्षुषी इत्यादि ।—तव चक्षुषी

स एष कारणाक्षेपः प्रधानं कारणं भियः।
स्वापराधो निषिद्धोऽत्र यत् प्रियेण पटीयसा॥१३२॥

कार्य्याक्षेपः।—

दूरे प्रियतमः सोऽयमागतो जलदागमः।
दृष्टाश्च फुल्ला निचुला न मृता चास्मि
किं न्विदम्?॥ १३३ ॥

रज्येते आरक्ते भवतः, अधरः पल्लव इव स्फुरति, भ्रुवौ च भुग्नौ कुटिलीभूतौ, तथाऽपि चक्षूरागादीनां क्रोधहेतुत्वेन अपराधहेतुकभयकारणे सत्यपीत्यर्थः, अदुष्टस्य निरपराधस्य, अपरनारीकामनादिदोषहीनस्येत्यर्थः, मे भयं नास्ति। अत्र पटीयसा सुनिपुणेन, प्रियेण भियः प्रधानं कारणं स्वापराधः निजकृतदोषः, यत् यस्मात्, निषिद्धः अतः एषः स प्रसिद्धः; कारणाक्षेपः; अत्र न भयम् अस्तीति कथनेन भयरूपकार्य्यस्य प्रतिषेधात् अयं कार्य्याक्षेपश्चेत्यनयोः सङ्करः। (अत्रेदं मन्तव्यं, कारणनिषेधस्य कारणाक्षेपालङ्कारत्वे कारणाभावेन कार्य्योत्पत्तिलक्षणा विभावनाऽप्यत्र सम्भवति, ततश्च द्वयोरैक्यमापतितमिति मनसि कृत्वा प्रधानं कारणमित्युक्तं, तेन च यत्र प्रधानकारणनिषेधेन कार्य्योत्पत्तिवर्णनं तत्र कारणाक्षेपः, यत्र तु अप्रधानकारणाभावेन कार्य्योत्पत्तिवर्णनं तत्र वक्ष्यमाणलक्षणा विभावनेत्यनयोर्भेदः)॥ १३१ ॥ १३२ ॥

कार्य्याक्षेपं दर्शयति, दूरे इत्यादि।—प्रियतमः दूरे, तिष्ठति इति शेषः, सः अयं जलदागमः मेघोदयकालः, वर्षासमयः इत्यर्थः, आगतः, यतः फुल्लाः प्रफुल्लाः, सुस्निग्धश्यामला इति यावत्, निचुलाः स्थलवेतसाः, दृष्टाश्च, तथाऽपि न मृता च अस्मि, नु वितर्के, किमिदम्? अत्यसम्भाव्यमिदम् इति भावः।

कार्य्याक्षेपः स कार्य्यस्य मरणस्य निवर्त्तनात् ।
तत्कारणमुपन्यस्य दारुणं जलदागमम् ॥१३४॥

अनुज्ञाक्षेपः ।—

न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयाऽत्र ते ॥१३५॥
इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः ।
मरणं सूचयन्त्यैव सोऽनुज्ञाक्षेप उच्यते ॥ १३६ ॥

विरहिण्युक्तिरियम् । प्रागुदाहरणं प्रदर्श्य लक्षणं सङ्गमयति, कार्य्याक्षेप इति ।—तत् प्रसिद्धं, जलदागमस्य कामोद्दीपकत्वात् विरहिविनाशकत्वेनेति भावः, कारणं हेतुभूतं, दारुणं विरहिदुःखप्रदत्वेनातिकठोरं, जलदागमम् उपन्यस्य कार्य्यस्य मरणस्य निवर्त्तनात् प्रतिषेधात्, सः प्रसिद्धः, कार्य्याक्षेपोऽयम् । ( अत्र पूर्ववत् प्रसिद्धकारणसत्त्वेऽपि कार्य्याभाववर्णने कार्य्याक्षेपः, अप्रसिद्धकारणे सत्यपि फलाभाववर्णने विशेषोक्तिरिति भेदः कल्पनीयः ; तदुक्तं दर्पणकारेण—"सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा" इति )॥ १३३ ॥ १३४ ॥

अनुज्ञाक्षेपमुदाहरति, नेत्यादि ।—तव यात्रा प्रवासगमनं, मम चिरं तापाय न भविष्यति, विरहेण मम झटिति प्राणात्ययस्य अवश्यम्भावादिति भावः ; यदि यास्यसि, त्वमिति शेषः, तदा यातव्यं याहीत्यर्थः, ते तव, अत्र मद्विषये, आशङ्कया अलम् । इति उक्तरूपया विरहवेदनया, मरणं नायकविदेशयात्रायां स्वप्राणवियोगं, सूचयन्त्या एव कयाचित्, अनुज्ञामुखेन विदेशगमनानुमत्या एव, कान्तस्य गतिः विदेशगमनम्, आक्षिप्यते निषिध्यते, अतः सः अनुज्ञाक्षेप इत्युच्यते । (विश्वनाथस्त्वेतादृश-

प्रभुत्वाक्षेपः।—

धनञ्च बहु लभ्यं ते सुखं क्षेमञ्च वर्त्मनि।
न च मे प्राणसन्देहस्तथाऽपि प्रिय! मास्म गाः॥१३७॥
इत्याचक्षाणया हेतून् प्रिययात्राऽनुबन्धिनः।
प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप उच्यते॥ १३८॥

अनादराक्षेपः।—

जीविताशा बलवती धनाशा दुर्बला मम।
गच्छ वा तिष्ठ वा कान्त! स्वावस्था तु
निवेदिता॥ १३९॥

स्थले विदेशगमनस्यानिष्टत्वात् विधिर्निषेधे एव पर्य्यवस्यति, तेन च गमनस्यात्यन्तपरिहार्य्यत्वं प्रतीयते इति विध्याक्षेपमङ्गीकरोति। उक्तञ्चाव तेनैव यथा—"अनिष्टस्य तथाऽर्थस्य विध्याभासः परो मतः" इति )॥ १३५॥ १३६॥

प्रभुत्वाक्षेपमुदाहरति, धनञ्चेत्यादि।—हे प्रिय! ते, विदेशगमने इति अध्याहार्य्यम्; बहु धनं सुखञ्च तथा वर्त्मनि पथि, क्षेमं कुशलञ्च, लभ्यम्, अत्र मे प्राणसन्देहश्च न, तव शीघ्रप्रत्यागमनस्य बहुधनलाभस्य च सम्भवादिति भावः, तथाऽपि मास्म गाः मा गच्छ। इति एवं, प्रिययात्रायाः प्रियस्य विदेशगमनस्य, अनुबन्धिनः पोषकान् हेतून् आचक्षाणया कीर्त्तयन्त्या, कयाचित् स्वाधीनपतिकया इति शेषः, प्रभुत्वेन स्वाधीनतया एव, रुद्धः विदेशगमनात् निवर्त्तितः, पतिरिति शेषः, तत् तस्मात्, एषः प्रभुत्वाक्षेप उच्यते॥ १३७॥ १३८॥

अनादराक्षेपमुदाहरति, जीविताशेत्यादि।—हे कान्त! मम जीविताशा जीवनेच्छा, बलवती दीर्घकालं जीवितु-

असावनादराक्षेपो यदनादरवद्वचः ।
प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥ १४० ॥

आशीर्वचनाक्षेपः ।—

गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयात् यत्र गतो भवान् ॥१४१॥
इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना ।
स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते ॥१४२॥

मिच्छामि इत्यर्थः, ( एतेन तव विदेशगमने मम मरणस्यावश्य-भावित्वं सूच्यते ) अतः धनाशा मम दुर्बला तव विदेशगमने धनलाभो भविष्यति इत्येषा आकाङ्क्षा मम नास्तीत्यर्थः, अतः गच्छ वा तिष्ठ वा, स्वस्य अवस्था तु मरणरूपाभिप्रायस्तु इत्यर्थः, निवेदिता कथिता। इह रक्तया अनुरागिण्या, प्रियप्रयाणं पत्युर्विदेशगमनं, रुन्धत्या वारयन्त्या कयाचित्, यत् यस्मात्, अनादरवत् अनास्थाव्यञ्जकं, वचः गच्छ वा तिष्ठ वा इत्यादि वाक्यमित्यर्थः, प्रयुक्तम् अतः असौ अनादराक्षेप इति ॥ १३९ ॥ १४० ॥

आशीर्वचनाक्षेपमुदाहरति, गच्छेत्यादि।—हे कान्त ! गच्छसि चेत् गच्छ, ते तव, पन्थानः शिवाः निर्विघ्नाः, सन्तु, किन्तु यत्र भवान् गतः तत्रैव ममापि जन्म भूयात्; अयं भावः,—तव गमनानन्तरमेव मम मरणं भविष्यति, मृतायाश्च अवश्यं जन्म भविता, तत् तु तव सन्निधौ भवति चेत् पुन-स्त्वद्दर्शनं लप्स्ये इति। अत्र आशीर्वादवर्त्मना आशीर्वचन-भङ्ग्या, "पन्थानः सन्तु ते शिवाः" इति वाक्येन इत्यर्थः, स्वावस्थां भाविमरणरूपां, सूचयन्त्या कान्तया, यत् यस्मात्,

परुषाक्षेपः।—

यदि सत्येव यात्रा ते काऽप्यन्या मृग्यतां त्वया।
अहमद्यैव रुद्धाऽस्मि रन्ध्रापेक्षेण मृत्युना॥ १४३॥
इत्येष परुषाक्षेपः परुषाक्षरपूर्वकम्।
कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया॥१४४॥

साचिव्याक्षेपः।—

गन्ता चेत् गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः।
आर्त्तबन्धुमुखोद्गीर्णाः प्रयाणपरिपन्थिनः॥१४५॥

कान्तस्य यात्रा विदेशगमनं,निषिध्यते अतः अयम् आशीर्वचनाक्षेपः, गच्छ इति विधिवाक्यस्य ममापि जन्म तत्रैव भूयात् इत्याशिषा अनुकूलतया मरणसूचनात् निषेधः प्रतीयते इति भावः॥ १४१॥ १४२॥

परुषाक्षेपमुदाहरति, यदीत्यादि।—यदि ते तव, यात्रा विदेशगमनं, सत्येव, तदा त्वया अन्या काऽपि प्रियतमा, मृग्यताम् अन्विष्यताम्, अहं रन्ध्रापेक्षेण छिद्रानुसन्धायिना, तव विदेशयात्रारूपं छिद्रं लभमानेनेत्यर्थः, मृत्युना अद्यैव, न तु कालान्तरे इति भावः, रुद्धा आक्रान्ता, अस्मि, अद्यैव मम मृत्युर्भविष्यति इति भावः। इति उक्तरूपः, प्रेमनिघ्नया अनुरागवशवर्त्तिन्या कयाचित्, यस्मात् परुषाक्षरपूर्वकं निष्ठुरवचनपुरःसरं, "काऽप्यन्या मृग्यताम्" "अद्यैव मृत्युना रुद्धाऽस्मि" इत्येवंरूपमित्यर्थः, कान्तस्य प्रस्थानं विदेशगमनम्, आक्षिप्यते निषिध्यते, अतः एष परुषाक्षेपः॥ १४३॥ १४४॥

साचिव्याक्षेपमुदाहरति, गन्तेत्यादि।—हे कान्त! गन्ता गामी चेत्, गमिष्यसि यदीत्यर्थः, (भविष्यदर्थे तृन्) तूर्णं गच्छ,

साचिव्याक्षेप एवैष यदत्र प्रतिषिध्यते।
प्रियप्रयाणं साचिव्यं कुर्वत्येवानुरक्तया ॥ १४६ ॥

यत्नाक्षेपः।—

गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी।
निर्गच्छति मुखाद्वाणी मा गा इति
करोमि किम्? ॥ १४७ ॥

यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि।
विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात् ॥ १४८ ॥

---

आर्त्तानां शोकाकुलानां, मन्मरणेनेति भावः, बन्धूनां मुखोद्गीर्णा मुखोच्चरिताः, प्रयाणपरिपन्थिनः विदेशयात्राप्रतिरोधिनः, रवाः मन्मृत्युसूचका वर्णाः, ते कर्णौ पुरा यान्ति श्रवणगोचरीभविष्यन्ति इत्यर्थः। (पुरायोगे भविष्यदर्थे लट्) अत्र अनुरक्तया कयाचित्, साचिव्यं सहायतां, तूर्णं गच्छेत्यनेनेति भावः, कुर्वत्या इव दर्शयन्त्या इव, यत् यस्मात्, प्रियप्रयाणं प्रियस्य विदेशयात्रा, प्रतिषिध्यते अत एव एष साचिव्याक्षेपः ॥ १४५ ॥ १४६ ॥

यत्नाक्षेपं निरूपयति, गच्छेत्यादि।—त्वत्प्रियं तव अनुकूलं, गच्छ इति वचः, वक्तुम् इच्छामि, किन्तु मुखात् मा गा न गच्छ, इति मत्प्रियैषिणी वाणी निर्गच्छति, किं करोमि? गृहे त्वदवस्थानस्यैव मत्प्रियत्वात् इति भावः। अत्र अनिष्टवस्तुनि गच्छेति वचनविधाने, कृतस्यापि यत्नस्य विपरीतस्य फलस्य मा गा इति वाणीनिःसरणरूपस्य, उत्पत्तेः हेतोः, आनर्थक्योपदर्शनात् प्रयाणे अनर्थसम्भवद्योतनात्, किम:

परवशाक्षेपः ।-

क्षणं दर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः ।
प्रेम्णः प्रयाणं त्वं ब्रूहि मया तस्येष्टमिष्यते ॥१४९॥
सोऽयं परवशाक्षेपो यत् प्रेमपरतन्त्रया ।
तया निषिध्यते यात्रेत्यन्यार्थस्योपदर्शनात् ॥१५०॥

उपायाक्षेपः ।—

सहिष्ये विरहं नाथ ! देह्यदृश्याञ्जनं मम ।
यदक्तनेत्रां कन्दर्पः प्रहर्त्तुं मां न पश्यति ॥१५१॥

---

प्रश्नार्थत्वेऽपि युक्त्या निषेधार्थत्वस्य प्रतीयमानत्वेन विदेशगमनमाक्षिप्तत्वात् इति भावः, सः अयं यत्नाक्षेपः ॥ १४७ ॥ १४८ ॥

परवशाक्षेपमुदाहरति, क्षणमित्यादि ।—हे कान्त ! त्वं क्षणं व्याप्य दर्शनविघ्नाय दर्शनप्रतिबन्धकाय, पक्ष्मस्पन्दाय नेत्रलोमस्पन्दनाय, कुप्यतः पक्ष्मस्पन्दनमपि सोढुमसमर्थतया तं प्रति क्रुध्यत इत्यर्थः, प्रेम्णः अनुरागापरनाम्नः, प्रयाणं यात्रानुमतिं, ब्रूहि प्रार्थय, मया तस्य प्रेम्णः एव, इष्टम् इष्यते, प्रेमाधीनाया मम अनुज्ञया अलं, प्रेम्णः अभिमतञ्चेत् तव गमनं तदा गच्छ, क्षणवियोगविधुरस्य प्रेम्णस्तत्तु नाभिमतमिति भावः । प्रयाणानुमतिं कामयमानं पतिं प्रति कस्याश्चिदुक्तिरियम् । यत् यस्मात्, प्रेमपरतन्त्रया प्रेमपरवशया, तया नायिकया, अन्यार्थस्य प्रेमानुमतिग्रहणरूपस्य, उपदर्शनात् प्रदर्शनात्, उपदेशात् इति यावत्, इति उक्तरूपेण, यात्रा कान्तस्य विदेशगमनं, निषिध्यते अतः अयं सः प्रसिद्धः, परवशाक्षेपः ॥ १४९ ॥ १५० ॥

उपायाक्षेपमाह, सहिष्ये इत्यादि ।—हे नाथ ! तव विरहं

दुष्करं जीवनोपायमुपन्यस्योपरुध्यते ।
पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम् ॥१५२॥

रोषाक्षेपः ।—

प्रवृत्तैव प्रयामीति वाणी वल्लभ ! ते मुखात् ।
अयताऽपि त्वयेदानीं मन्दप्रेम्णा
ममास्ति किम् ? ॥ १५३ ॥

रोषाक्षेपोऽयमुद्रिक्त-स्नेहनिर्यन्त्रितात्मना ।
संरब्धया प्रियारब्धं प्रयाणं यन्निषिध्यते ॥ १५४ ॥

सहिष्ये, मम मह्यम्, अदृश्याञ्जनम् अदर्शनजनकं सिद्धकज्जल-विशेषं, देहि ; किं ततः ? इत्याह, यदिति ।—कन्दर्पः येन कज्जलेन, अक्ते लिप्ते, नेत्रे यस्याः तादृशीं, मां प्रद्रष्टुं न पश्यति, तव विरहे कन्दर्पो मां व्यथयिष्यति, यदि तस्याशङ्का न स्यात्, तदा तव प्रयाणे न हानिरिति भावः । अत्र दुष्करं कथमपि साधयितुमशक्यं, जीवनोपायं कामादर्शनजनकसिद्धाञ्जनविशेष-दानरूपम्, उपन्यस्य तदसम्भवात् पत्युः प्रस्थानं विदेशयात्रा, उपरुध्यते प्रतिषिध्यते, इति हेतोः, ईदृशम् उपायाक्षेपम् आहुः, कवय इति शेषः ॥ १५१ ॥ १५२ ॥

रोषाक्षेपमुदाहरति, प्रवृत्तैवेत्यादि ।—हे वल्लभ ! ते तव, मुखात् प्रयामि गच्छामि, इति वाणी प्रवृत्ता उच्चरिता एव, अतिविशुद्धभावयोः प्रेम, तादृशे प्रेम्णि तव प्रयाणं दूरापास्तं, प्रयामीति तदर्थकवाणीनिःसरणमपि नैव सम्भवतीति भावः । अतः अनुरागस्तादृशोऽपि त्वया शिथिलीकृत इत्याशयेनाह, अयतेति ।—इदानीं मन्दप्रेम्णा शिथिलितानुरागेण, अयता अगच्छताऽपि, त्वया मम किम् अस्ति ? न किमपि प्रयोजनं

मूर्च्छाऽऽक्षेपः।—

मुग्धा कान्तस्य यात्रोक्ति-श्रवणादेव मूर्च्छिता।
बुद्धा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो
भवान्? ॥ १५५ ॥

इति तत्कालसम्भूत-मूर्च्छयाऽऽक्षिप्यते गतिः।
कान्तस्य कातराक्ष्या यन्मूर्च्छाऽऽक्षेपः स ईदृशः॥१५६॥

अनुक्रोशाक्षेपः।—

नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम्।
त्वद्द्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥१५७॥

मस्तीत्यर्थः। (अयतेति "इ गतौ" इत्यस्मात् भौवादिकात् भतरि निष्पन्नम्) अत्र उद्रिक्तेन अतिरिक्तेन, स्नेहेन प्रेम्णा, नियन्त्रितः आक्रान्तः, आत्मा यस्यास्तादृश्या, संरब्धया कुपितया कयाचित्, प्रियेण आरब्धम् उद्युक्तं, प्रयाणं प्रियकर्तृकविदेशगमनोद्योग इत्यर्थः, यत् यस्मात्, निषिध्यते अतः अयं रोषाक्षेपः॥ १५३ ॥ १५४ ॥

मूर्च्छाऽऽक्षेपं निरूपयति, मुग्धेत्यादि।—मुग्धा सरलस्वभावा काचित्, कान्तस्य यात्राया विदेशगमनस्य, उक्तिश्रवणात् एव, न तु विदेशगमनात् इति भावः, मूर्च्छिता मोहं प्राप्ता, अथ बुद्धा संज्ञां लब्ध्वा, (बुद्ध्वेति पाठे—सञ्जातचैतन्या) प्रियं दृष्ट्वा वक्ति, भवान् किं कथं, चिरेण आगतः? एतादृशं विलम्बं कृत्वा कथमागतोऽसीत्यर्थः। इति उक्तरूपेण, तत्काले गमनश्रवणकाले, सम्भूता मूर्च्छा यस्याः तया, कातराक्ष्या मुग्धया, कान्तस्य गतिः यत् आक्षिप्यते निषिध्यते, स ईदृशः मूर्च्छाऽऽक्षेपः॥ १५५ ॥ १५६ ॥

अनुक्रोशाक्षेपं निरूपयति, नेत्यादि।—तव द्विषां शत्रूणां,

असावनुक्रोशाक्षेपः सानुक्रोशमिवोत्पले।
व्यावर्त्त्य कर्म तद्‌योग्यं शोच्यावस्थोपदर्शनात्॥१५८॥

श्लिष्टाक्षेपः।—

अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना?॥१५६॥
इति मुख्येन्दुराक्षिप्तो गुणान् गौणेन्दुवर्त्तिनः।
तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः॥१६०॥

स्त्रीभिः नीलम् उत्पलं न आघ्रातं, न कर्णे कृतं, मधुनि मद्ये च, न अर्पितं, तद्वासनार्थमिति भावः, सुतरां दीर्घिकासु एव विशीर्णं विशुष्कम्; द्विषां पराजयेन मरणात् पलायनाद्वेति भावः। (अत्र राजविषया रतिर्ध्वन्यते) अत्र उत्पले सानुक्रोशमिव सकरुणमिव यथा स्यात्तथा, तस्य उत्पलस्य, योग्यं कर्म स्त्रीजनकर्त्तृकाघ्राणादिकं, व्यावर्त्त्य निषिध्य, शोच्याया अवस्थाया अनुपभोगेन वापीषु विशीर्णतारूपायाः, उपदर्शनात् प्रदर्शनात, असौ अनुक्रोशाक्षेपः, आक्षेपस्यानुक्रोशजनकत्वादिति भावः॥१५७॥१५८॥

श्लिष्टाक्षेपमुदाहरति, अमृतात्मनीत्यादि।—अमृतस्येव आत्मा स्वभावो यस्य तादृशे परमाह्लादके इत्यर्थः, अन्यत्र—अमृतं जलं तदात्मनि तत्स्वरूपे, पद्मानां द्वेष्टरि पराजयकारिणि, अन्यत्र—सङ्कोचकत्वात् शत्रौ, तथा स्निग्धे तारके अक्षिकनीनिके यस्य तस्मिन्, अन्यत्र—स्निग्धाः प्रियाः, तारका नक्षत्राणि यस्य तस्मिन्, तव अस्मिन् मुखेन्दौ सति अपरेण इन्दुना किम्? न किमपि प्रयोजनमस्तीत्यर्थः। इह पद्य, इति उक्तप्रकारेण, तत्समान् तस्य मुखेन्दोः सदृशान्,

अनुशयाक्षेपः ।—

अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्जिता ।
न तपः सञ्चितं किञ्चित् गतञ्च सकलं वयः ॥१६१॥
असावनुशयाक्षेपो यस्मादनुशयोत्तरम् ।
अर्थार्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा ॥ १६२ ॥

संशयाक्षेपः ।—

किमयं शरदम्भोदः ? किं वा हंसकदम्बकम् ? ।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥ १६३ ॥
इत्ययं संशयाक्षेपः संशयो यन्निवर्त्त्यते ।
धर्मेण हंससुलभेनास्पृष्टघनजातिना ॥ १६४ ॥

---

गौणेन्दुः गौणलक्षणया इन्दुपदबोध्यं मुखमित्यर्थः, तद्वर्त्तिनः तदीयान् अमृतात्मतादीन्, गुणान् धर्मान्, दर्शयित्वा श्लिष्टैकशब्दप्रतिपाद्यत्वेन तत्समानधर्मान् प्रतिपाद्य इत्यर्थः, मुख्यः इन्दुः आक्षिप्तः प्रतिषिद्धः, इत्यतः, तथाविधः तादृशः, श्लिष्टाक्षेपः अयम्, अस्य श्लेषमूलकत्वात् इति भावः ॥ १५९ ॥ १६० ॥

अनुशयाक्षेपमुद्दिशति, अर्थ इति ।—कश्चित् अर्थः धनं, न सम्भृतः, काचित् विद्या च न अर्जिता, किञ्चित् तपः न सञ्चितं, सकलं वयश्च गतम् । इह अत्र, यस्मात् अनुशयोत्तरं पश्चात्तापबहुलं यथा तथा, गतायुषा जनेन, अर्थार्जनादेः व्यावृत्तिः अभावः, दर्शिता, तस्मात् असौ अनुशयाक्षेपः ॥ १६१ ॥ १६२ ॥

संशयाक्षेपमुदाहरति, किमित्यादि ।—अयं किं शरदम्भोदः? शरत्कालिकः जलदागमात् शुभ्रः मेघः ? किं वा हंसानां कदम्बकं समूहः ? किन्तु नूपुरसंवादि नूपुरध्वनिसदृशं, रुतं श्रूयते,

अर्थान्तराक्षेपः।—

चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न शाम्यति।
कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः?॥१६५॥
अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवार्य्यते।
विस्मयोऽर्थान्तरस्येह दर्शनात् तत्सधर्मणः॥१६६॥

हेत्वाक्षेपः।—

न स्तूयसे नरेन्द्र! त्वं ददासीति कदाचन।
स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः॥ १६७॥

---

तत् तस्मात्, तोयदः मेघः, न। इति एवम्, अस्पृष्टा घनजातिर्येन ताद्रशेन, हंसमुलभेन केवलहंसतसम्बन्धिना, धर्मेण ताद्रशकृतेन, यत् यस्मात्, संशयः निवर्त्यते तस्मात् अयं संशयाक्षेपः॥१६३॥ १६४॥

अर्थान्तराक्षेपमुद्दिशति, चित्रमिति।—ते तव, विक्रमः आक्रान्तं विश्वं येन ताद्रशोऽपि निखिलभुवनं समाक्रमन्नपीत्यर्थः, न शाम्यति आक्रमणाभिलाषात् न विरतो भवति, एतत् चित्रमाश्चर्य्यम्। चित्रत्वं प्रतिषेद्धुमर्थान्तरमुपन्यस्यति, कदेति।—वा अथवा, उदीर्णस्य उद्दीप्तस्य, हविर्भुजः अग्नेः, तृप्तिः कदा दृश्यते? न कदाऽपि इत्यर्थः। इह अत्र, तत्सधर्मणः तस्य विक्रमस्य, सधर्मणः समानधर्मस्य, अर्थान्तरस्य हविर्भुक्-तृप्त्यभावरूपस्य, दर्शनात् प्रदर्शनात्, प्रक्रान्तः चित्रमिति पदेन प्रस्तुतः, विस्मयः यत् निवार्य्यते, तस्मात् अयम् अर्थान्तराक्षेपः अर्थान्तरेण प्रस्तुतस्याक्षेपात्। (अत्र राजविषयिणी रतिर्ध्वन्यते)॥१६५॥ १६६॥

हेत्वाक्षेपमुद्दिशति, नेत्यादि।—हे नरेन्द्र! त्वं ददासीति

इत्येवमादिराक्षेपः हेत्वाक्षेप इति स्मृतः।
अनयैव दिशाऽन्योऽपि विकल्पः शक्य
ऊहितुम् ॥ १६८ ॥

[ इति आक्षेपचक्रम् ]।

अर्थान्तरन्यासः।—

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥१६९॥

कत्वा कदाचन न स्तूयसे, यतः अर्थिनः तव धनं स्वं निजस्वत्वास्पदीभूतमेव, मत्वा बुद्ध्वा, गृह्णन्ति। (एतेन राज्ञोऽतीव दानशीलत्वं सूचितम्) इति स्वमेवेति हेतुवशात् प्रस्तुतराजस्तवस्य आक्षेपात्, एवमादिराक्षेपः ईदृशाक्षेपः, हेत्वाक्षेपः इति स्मृतः कथितः, आक्षेपस्य हेतुसाध्यत्वात् इति भावः। अनया एव दिशा रीत्या, अन्योऽपि विकल्पः आक्षेपस्य भेदः, ऊहितुं निरूपयितुं, शक्यः, धीमद्भिरिति शेषः। (कारणाक्षेपे तु कारणस्यैव आक्षेपः, इह तु कारणेन आक्षेप इत्यनयोर्भेद इति बोध्यम्) ॥ १६७ ॥ १६८ ॥

अर्थान्तरन्यासमाह, ज्ञेय इति।—किञ्चन किमपि, वस्तु प्रकृतमिति भावः, प्रस्तुत्य उपन्यस्य, तस्य साधने प्रमाणीकरणे, समर्थस्य अन्यस्य अप्रकृतस्य, वस्तुनः विषयस्य, यो न्यासः कीर्त्तनं, सः अर्थान्तरन्यासः ज्ञेयः ; एवञ्च समर्थकवाक्यात् पूर्वं पश्चाद्वा निर्दिष्टस्य प्रस्तुतवाक्यार्थस्य यदप्रस्तुतवाक्यार्थेन समर्थनं सोऽर्थान्तरन्यास इति लक्षणम्। (अत्र प्रस्तुत्य इति क्त्वाप्रत्ययेन प्रथमं प्रकृतस्य कीर्त्तनं, ततस्तत्समर्थकस्य उपन्यास

* इति एकरूपम्, आक्षेपालङ्काराणां चक्रं समूहः।

इति यद्यप्यायातं, तथाऽपि न तदादरणीयं, विदुषामनङ्गीकृतत्वात ; तदुक्तम् अलङ्कारसर्व्वस्वकृता वृत्तौ—"निर्दिष्टस्याभिहितस्य समर्थनार्हस्य प्रकृतस्य समर्थकात् पूर्वं पश्चाद्वा निर्दिष्टस्य यत् समर्थनं सोऽर्थान्तरन्यास:" इति। समर्थकवाक्यस्य प्रागुपन्यासे तु भोजराजेन विपरीतार्थान्तरन्यास इत्यभिहितम् ; यथा—"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता। अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यत: करसहस्रमपि॥" इति। अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वात् परार्द्धवाक्यं समर्थनीयं, ततश्च पूर्वार्द्धवाक्यं परार्द्धस्य समर्थकमपि प्रागुपन्यस्तम ; एवञ्च क्त्वाप्रत्ययस्यानन्तर्य्यार्थो नात्र विवक्षणीय:, समर्थकवाक्यार्थात् पूर्वं पश्चाद्वा समर्थनीयस्य प्रकृतस्योपन्यास इति सिद्धान्त: ; तथा समर्थ्यसमर्थकयो: सामान्यविशेषभाव: कार्य्यकारणभावश्च विवक्षणीय: ; तच्चोक्तमलङ्कारसर्व्वस्वकृता—"सामान्यविशेषभावकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास:" इति। स च कदाचित् साधर्म्म्येण क्वचिच्च वैधर्म्म्येण वा भवति ; यदुक्तं विश्वेश्वरपण्डितेन—"यदि सामान्यविशेषौ समर्थयेते विशेषसामान्ये। साधर्म्याद्वैधर्म्यादपि वा सोऽर्थान्तरन्यास:॥" इति। तथा दर्पणकृताऽप्युक्तं—"सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत:॥" इति। इत्थञ्च नवीनैरेवमष्टौ भेदा: दर्शिता: ; सामान्यं विशेषस्य विशेष: सामान्यस्य समर्थक इति भेदद्वयम ; तथा कार्य्यं कारणस्य कारणं वा कार्य्यस्य समर्थकमित्यपि भेदद्वयम ; भेदचतुष्टये च तत्र प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदद्वये भेदाष्टकमुपपद्यते इति। उदाहृतञ्च कार्य्येण कारणसमर्थने—"सहसा विदधीत न

अर्थान्तरन्यासभेदाः ।—

विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान् ।
अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्य्ययः ॥ १७० ॥
इत्येवमादयो भेदाः प्रयोगेष्वस्य लक्षिताः ।
उदाहरणमालैषां रूपव्यक्तौ निदर्श्यते ॥ १७१ ॥

क्रियाम्" इत्यादि। तथा कारणेन कार्य्यसमर्थने—"पृथ्वि स्थिरा भव" इत्यादिकञ्च। अन्यत् उदाहरणन्तु यथायथ मूहनीयम्। स्वमतेऽपि भेदाष्टकं वक्ष्यमाणरीत्या बोध्यम् इति )॥ १६९ ॥

अर्थान्तरन्यासस्य भेदानाह, विश्वव्यापीत्यादि।—विश्व-व्यापी सर्वत्र सम्भवशीलः, व्यापकधर्मावच्छिन्न इत्यर्थः, समर्थकवाक्यस्य सामान्यभावत्वे विश्वव्यापिनामार्थान्तरन्यास इति निष्कर्षः; विशेषस्थः असर्वगः, व्याप्यधर्मावच्छिन्न इत्यर्थः, समर्थकस्य विशेषत्वे विशेषस्थनामायमिति फलितार्थः; श्लेषाविद्धः श्लिष्टपदान्वितः, विरोधवान् विरुद्धधर्मद्वययुक्तः, अयुक्तकारी अनुचितकार्य्यकर्त्ता, युक्तात्मा औचित्ययुक्तः, युक्तायुक्तः कियदंशेन युक्तः कियता वा अयुक्तः, तथा विपर्य्ययः अयुक्तकार्य्यादित्रितयवैपरीत्यगुणयुक्तः इत्यर्थः। अस्य अर्था-न्तरन्यासस्य, प्रयोगेषु इत्येवमादयः एवम्प्रकाराः अष्टविधाः, भेदाः विभिन्नाः समर्थकार्थाः, लक्षिताः अनुभूताः, ( आदिना भोजोक्तानामनीकप्रत्यनीकादीनां ग्रहणम् ) एषाम् उक्तभेदानां तादृशानाम् अन्येषाञ्च, रूपस्य स्वरूपस्य, व्यक्तौ व्यक्तीकरणे, उदाहरणमाला, वक्ष्यमाणा इति शेषः, निदर्श्यते योगार्थ-बलादेव प्रोक्तभेदानां लक्षणप्रतीतेः लक्षणमन्तरेणापि तेषा-मुदाहरणानि निरूप्यन्ते इति भावः॥ १७० ॥ १७१ ॥

विश्वव्यापिन उदाहरणम्।—

भगवन्तौ जगन्नेत्रे सूर्य्याचन्द्रमसावपि।
पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते? ॥१७२॥

विशेषस्थोदाहरणम्।—

पयोमुचः परीतापं हरन्त्येव शरीरिणाम्।
नन्वात्मलाभो महतां परदुःखोपशान्तये॥ १७३ ॥

---

विश्वव्यापिनमुदाहरति, भगवन्ताविति।—भगवन्तौ षडैश्वर्य्यशालिनौ, जगतां नेत्रे नयनस्वरूपौ, सूर्य्याचन्द्रमसौ अपि, का कथा अन्येषामिति अपिना सूच्यते; अस्तं गच्छत एव, पश्य। इममर्थं समर्थयति, नियतिरिति।—केन नियतिर्भाग्यं, लङ्घ्यते? अतिक्रम्यते? न केनापीत्यर्थः। (अत्र चतुर्थपादवाक्यरूपस्य समर्थकस्य विश्वव्यापित्वं ब्रह्मादिकीटपर्य्यन्तानां सर्व्वेषामेव नियत्यधीनत्वात् बोद्धव्यं, तेन च सामान्येन पूर्व्वोक्तत्रिपादगतवाक्यस्य विशेषस्य समर्थनात् सामान्येन विशेषसमर्थनरूपो विश्वव्यापिनामार्थान्तरन्यासः) ॥ १७२ ॥

विशेषस्थमुदाहरति, पयोमुच इति।—पयोमुचः जलदाः, शरीरिणां देहिनां, परीतापं सन्तापं, हरन्त्येव अपनयन्त्येव। उक्तमर्थं समर्थयति, नन्विति।—महतां महदुदारचरितानां जनानाम्, आत्मलाभः जन्मग्रहणं, परेषां दुःखस्य उपशान्तये नाशाय, ननु निश्चितम्। (अत्र महताम् इत्युक्तेर्न साधारणप्राणिनामिति विशेषलाभात् विशेषस्थता ज्ञेया, तथा मेघापेक्षया महतां सामान्यत्वेन च उत्तरवाक्यरूपेण सामान्येन पूर्व्ववाक्यरूपस्य विशेषस्य समर्थनमिति सामान्यविशेषभावश्च, तदयं विशेषस्थनामार्थान्तरन्यासः, किञ्च परीतापापहरणक्षमस्य जलदस्य न्यसनं विधाय तत्साधनसाधर्म्य

श्लेषाविद्धोदाहरणम्।—

उत्पादयति लोकस्य प्रीतिं मलयमारुतः।
ननु दाक्षिण्यसम्पन्नः सर्वस्य भवति प्रियः॥१७४॥

विरोधवदुदाहरणम्।

जगदानन्दयत्येष मलिनोऽपि निशाकरः।
अनुगृह्णाति हि परान् सदोषोऽपि द्विजेश्वरः॥१७५॥

---

णैव तत्साधनक्षमं महापुरुषलक्षणं वस्त्वन्तरं न्यस्यति इति साधर्म्येण अर्थान्तरन्यासस्य इति निष्कर्षः)॥ १७३॥

श्लेषाविद्धमुदाहरति, उत्पादयतीति।—दाक्षिण्यसम्पन्नः दक्षिणदिगागतः, अन्यत्र—औदार्य्यगुणयुक्तः, मलयमारुतः लोकस्य प्रीतिम् उत्पादयति; तथा हि, दाक्षिण्यसम्पन्नः लोकः सर्वस्य प्रियो भवति ननु। (अत्र दाक्षिण्यसम्पन्न इत्यस्य श्लिष्टत्वेन उत्तरवाक्यस्य पूर्ववाक्यसमर्थकत्वमिति श्लेषाविद्धनामार्थान्तरन्यासः, अत्रापि सामान्यविशेषभावः बोद्धव्यः)॥ १७४॥

विरोधवन्तमुदाहरति, जगदिति।—एष निशाकरः, मलिनोऽपि सकलङ्कोऽपि, जगत् आनन्दयति, तथा हि द्विजेश्वरः ब्राह्मणश्रेष्ठः, सदोषोऽपि, परान् अन्यान्, अनुगृह्णाति उपदेशदानादिना उपकरोति इत्यर्थः। सदोषा हि न खलूपकुर्वन्ति इति विरोधः। (अत्र निशाकरद्विजराजयोः निशाकरस्यापि द्विजराजत्वेन द्विजराजस्यैव सामान्यत्वमिति सामान्येन विशेषस्य समर्थनं, तत्र सदोषत्वानुग्राहकत्वरूपयोर्विरुद्धधर्मयोः सामानाधिकरण्यात् विरोधयुक्तमिति विरोधवदर्थान्तरन्यासः)॥ १७५॥

अयुक्तकारिण उदाहरणम् ।—

मधुपानकलात् कण्ठान्निर्गतोऽप्यलिनां ध्वनिः ।
कटुर्भवति कर्णस्य कामिनां पापमीदृशम् ॥१७६

युक्तात्मनः उदाहरणम् ।—

अयं मम दहत्यङ्गमम्भोजदलसंस्तरः ।
हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते ॥ १७७ ॥

---

अयुक्तकारिणमुदाहरति, मध्विति ।—मधुपानेन कलात् मधुरात्, अलिनां भ्रमराणां, कण्ठात्, निर्गतोऽपि ध्वनिः कामिनां विरहिणां, कर्णस्य, कटुर्भवति । तथाहि, पापम् ईदृशं सुखप्रदस्यापि वस्तुनो दुःखदाहत्वरूपमित्यर्थः । एतेन कामित्वस्य पापत्वमुक्तम् । (अत्र मधुरस्यापि भ्रमरध्वनेः कटुत्वप्रतिपादनमयुक्तं पापञ्च तत्समर्थकमिति अयुक्तकारिनामार्थान्तरन्यासः, तथा सामान्येन पापपदार्थेन विशेषस्य भ्रमरध्वनेः समर्थनात्, सामान्येन विशेषसमर्थनरूपो नवीनोक्तो भेदश्च सम्भवतीति बोध्यम् ; यद्वा पापरूपकारणेन तादृशध्वनेः कटुभवनरूपकार्य्यं समर्थितमिति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १७६ ॥

युक्तात्मानमुदाहरति, अयमिति ।—अयं हुताशनप्रतिनिधिः अग्निसदृशः, अम्भोजानां पद्मानां, दलैः, संस्तरः शय्या, मम अङ्गं दहति । तथाहि, दाहः दाहात्मकः, आत्मा स्वभावः, दाहकत्वरूपा प्रकृतिरित्यर्थः, अग्नेरिति शेषः, युज्यते । ( अत्र पद्मदलरूपशय्यायाः शीतलत्वमेव युक्तं, दाहकत्वं न युक्तं, हुताशनप्रतिनिधित्वेन अङ्गदाहकत्वं युक्तमेवेति समर्थकस्य युक्तात्मत्वात् युक्तात्मनामार्थान्तरन्यासः, सामान्यविशेषभावस्तु पूर्ववत् ) ॥ १७७ ॥

युक्तायुक्तस्योदाहरणम्।—

क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम्।
मलिनाचरितं कर्म सुरभेर्नन्वसाम्प्रतम्॥१७८॥

विपर्य्ययस्योदाहरणम्।—

कुमुदान्यपि दाहाय किमयं कमलाकरः।
न हीन्दुगृह्येषूग्रेषु सूर्य्यगृह्यो मृदुर्भवेत्॥ १७९॥

[इत्यर्थान्तरन्यासचक्रम्]।*

युक्तायुक्तमुदाहरति, क्षिणोत्वित्यादि।—शीतांशुः चन्द्रः, कामम् अवश्यं, क्षिणोतु पीड़यतु, तस्य कलङ्कित्वात् परपीडनं युक्तमिति भावः, वसन्तः, किं कथं, मां दुनोति? तापयति? तथाहि, सुरभेः सुविख्यातनामधेयस्य अथच वसन्तस्य, ("सुरभी कामदुघायाञ्च विख्याते सुरभिर्द्वयोः" इति कोषः) मलिनेन कलङ्किना, अथच पापिना, आचरितं कर्म परपीडनरूपम्, असाम्प्रतम् अयुक्तं, ननु। (अत्र उत्कृष्टस्य सुरभेः अपकर्मकरणेन युक्तायुक्तत्वम् इति युक्तायुक्तनामार्थान्तरन्यासः, तथा मलिनसुरभिशब्दयोः श्लिष्टत्वेन च श्लेषाविद्धोऽपीत्यनयोः सङ्करः) ॥ १७८ ॥

विपर्य्ययमुदाहरति, कुमुदानीति।—कुमुदान्यपि अतिशीतलान्यपीत्यर्थः, दाहाय दाहकानीत्यर्थः, अयं कमलानामाकरः पद्मानीत्यर्थः, किम्? का कथा पद्मस्य? इत्यर्थः, सूर्य्यगृह्यत्वात् तस्य नातिशीतलत्वमिति भावः; इन्दुगृह्येषु चन्द्रपक्षेषु, उग्रेषु दाहकेषु, सूर्य्यगृह्यः सूर्य्यपक्षः, न हि मृदुः शीतलः, भवेत्, यस्य शीतलः इन्दुपक्षोऽपि क्लेशावहः तस्य उग्रस्य

* इति उक्तरूपम्, अर्थान्तरन्यासस्य, चक्रं समूहः।

व्यतिरेकः।—

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
तत्र यद् भेदकथनं व्यतिरेकः स कथ्यते ॥१८०॥

सूर्य्यपक्षस्य कैवाविहत्वं किमु वक्तव्यम्? इति भावः। (अत्र अयुक्तस्य कुमुदस्यापि अयुक्तकरणात् अयुक्तकारियुक्तात्मयुक्तायुक्तरूपलितयाद्विपर्य्यय इति विपर्य्ययनामार्थान्तरन्यासः। स च इन्दुग्रहसूर्य्यग्रहपदघटितवाक्यरूपसामान्येन पूर्वार्द्धवाक्यरूपविशेषः समर्थित इत्यवधेयम्)॥ १७९॥

व्यतिरेकमाह, शब्दोपात्ते इति।—द्वयोर्वस्तुनोः उपमानोपमेययोः, सादृश्ये, शब्दोपात्ते साधारणधर्मप्रतिपादकशब्दप्रयोगेण बोधिते प्रतीते वा, साधारणधर्मवाचकशब्दानुपादानात् व्यञ्जनया सूचिते सति, तत्र इति षष्ठ्यर्थे सप्तमी, तयोरित्यर्थः, यत् भेदकथनम् उत्कर्षाय अपकर्षाय वा केनचिद् साधारणधर्मान्तरेण वैधर्म्यप्रतिपादनं, स व्यतिरेकः, कथ्यते व्यतिरिच्यते, उपमानादुत्कृष्यते; अनेनोपमेयमिति व्युत्पत्त्या व्यतिरेकनामा उच्यते। (तथा च—यत्र केनचिद्धर्मेण उपमानापेक्षया उपमेयस्य उत्कर्षायापकर्षाय वा वैलक्षण्यं वर्ण्यते स व्यतिरेक इति लक्षणम्। वैलक्षण्यञ्च द्विधा सम्भवति, उपमानादुपमेयस्याधिकगुणत्वे न्यूनगुणत्वे च। तदुक्तमलङ्कारसर्वस्वकृता—"भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेकः" इति। उत्कर्षापकर्षहेतोरुक्त्यनुक्त्यादिभेदादस्य चतुर्विंशतिभेदाश्च अन्यैरुक्ताः, तदुक्तं विश्वेश्वरपण्डितेन, यथा—"हानिप्रकर्षहेत्वोरुक्तौ त्रेधा च तदनुक्तौ। शब्दार्थाक्षेपोत्थे साम्ये श्लेषे च दिग्युगमितः सः॥" अस्यायमर्थः,—"उपमानस्यापकर्षनिमित्तम्, उपमेयस्य उत्कर्षनिमित्तञ्च इत्युभय-

शब्दोपात्तसादृश्य-एकव्यतिरेकः।—

धैर्य्यलावण्यगाम्भीर्य्य-प्रमुखैस्त्वमुदन्वतः।
गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ १८१ ॥

मपि यत्रोक्तं तत्रैकः, अपकर्षहेतुमात्रस्य उत्कर्षहेतुमात्रस्य चोक्तौ, द्वयोरप्यनुक्तौ च त्रयो भेदा इति चत्वारः। ते च प्रत्येकं शाब्दे आर्थे आक्षिप्ते च सादृश्ये द्वादशभेदाः सर्वेषां श्लिष्टाश्लिष्टाभ्यां द्वैविध्याच्चतुर्विंशतित्वम्" इति। अत एवोक्तं विश्वनाथेन यथा—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेकः—" इति। तत्र उत्कर्षोदाहरणानि वक्ष्यमाणानि, अपकर्षोदाहरणं दर्पणकारेणोक्तम्; यथा—"क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्द्धते नित्यम्। विरम प्रसीद सुन्दरि! यौवनमनिवर्त्ति यातन्तु॥" अत्र उपमेयस्य यौवनस्य उपमानात् चन्द्रादचिरस्थायित्वेनापकर्षः। अत्र केचिदाहुः उपमेयगते वैशिष्ट्ये एवायमलङ्कार इति, तन्मते न चन्द्रयौवनयोरुपमानोपमेयभावः विवक्षितः, किन्तु चन्द्रक्षययौवनक्षययोरेव। तत्र चन्द्रक्षयस्य वृद्धिप्रागभावसमानकालीनत्वेन न्यूनत्वं, यौवनक्षयस्य चाग्रे तच्छरीरावच्छेदेन यौवनाभावात् समानाधिकरणयौवनप्रागभावसमानकालीनत्वं नास्तीति आधिक्यम्। ननु तथाऽपि तेषां" हनूमदाद्यैर्यशसा मया पुनः द्विषां हसैर्दौत्यपथः सितीकृतः।" इत्यत्र हनूमदादिदौत्यापेक्षया नलेन स्वकृतदौत्ये हीनत्वं प्रदर्श्यते इति का गतिरिति चेत् प्रकृतस्यात्र नलनिर्वेदः तदुत्कर्षत्वस्य दौत्यनिष्ठोत्कर्षापकर्षकस्यापि सम्भवतीति दिक्)॥ १८० ॥

व्यतिरेकस्यास्य बहुषु भेदेषु सत्सु शब्दोपात्तसादृश्यभेदान् प्रथमं दर्शयन् तत्रैकव्यतिरेकमाह, धैर्य्यत्यादि।—धैर्य्यम्

इत्येकव्यतिरेकोऽयं धर्मेणैकत्र वर्त्तिना ।
प्रतीतिविषयप्राप्तेर्भेदस्योभयवर्त्तिनः ॥ १८२ ॥

उभयव्यतिरेकः ।—

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।
असावञ्जनसङ्काशस्त्वन्तु चामीकरद्युतिः ॥१८३॥
उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ ।
कार्ष्ण्यं पिशङ्गता चाभौ यत् पृथग्दर्शिताविह ॥१८४॥

---

अनौद्धत्यम्, अनतिक्रान्तवेलत्वञ्च, लावण्यं सौन्दर्यं लवणमयत्वञ्च, गाम्भीर्यं दुरवगाहस्वभावत्वम् अगाधत्वञ्च, इत्यादिभिर्गुणैः, त्वम् उदन्वतः समुद्रस्य, तुल्योऽसि, केवलम् ईदृशेन अतिमनोहरेण इत्यर्थः, वपुषा शरीरेण, ते तव, भेदः, उदन्वत इति शेषः। अत्र एकत्र उपमेये एव, वर्त्तिना स्थितेन, धर्मेण अतिमनोहरवपुष्मत्त्वरूपेण, उभयवर्त्तिनः उपमेयोपमानस्थितस्य, भेदस्य उपमेयोत्कर्षस्य उपमानापकर्षस्य चेत्यर्थः, प्रतीतिविषयप्राप्तेः प्रतीतत्वात् इत्यर्थः, अयम् एकव्यतिरेकः। (अत्र गुणैस्तुल्योऽसि इत्यनेन सादृश्यप्रत्यायनात् शब्दोपात्तसादृश्यस्यायं भेदः बोद्धव्यः, तत्र च एकमात्रोपमेयगतातिमनोहरवपुष्मत्त्वरूपधर्मेण उपमेयोपमानयोः भेदः प्रदर्शित इति एकव्यतिरेकसंज्ञक इत्यवधेयम्। तथा मनोहरवपुष्मत्त्वमेव उपमेयगतोत्कर्षस्य निमित्तं तच्च प्रयुक्तमेव, इति नवीनोक्तोक्तहेतौ उदाहरणमिदं भवितुमर्हति इति दिक्) ॥ १८१ ॥
॥ १८२ ॥

उभयव्यतिरेकमुदाहरति, अभिन्नेत्यादि ।—अम्बुराशिः भवान् अपि उभौ, अभिन्नवेलौ अनतिक्रान्तमर्य्यादौ, तथा

सश्लेषव्यतिरेकः ।—

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
अयन्तु युवयोर्भेदः स जड़ात्मा पटुर्भवान् ॥ १८५ ॥
स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम् ।
साक्षेपश्च सहेतुश्च दृश्यते तदपि द्वयम् ॥ १८६ ॥

---

गम्भीरो दुरवगाहस्वभावः अगाधश्च इत्यर्थः ; किन्तु असौ अम्बुराशिः, अञ्जनसङ्काशः कृष्णवर्णः, सामुद्रिकजलस्य कृष्णत्वादिति भावः, त्वन्तु चामीकरद्युतिः काञ्चनवर्णः, अतिसुन्दर इत्यर्थः । इह उभयोः उपमानोपमेययोः, कार्ष्ण्यं पिशङ्गता च इमौ उभौ भेदकौ भेदसाधने, गुणौ यत् पृथक् दर्शितौ, अतः अयम् उभयव्यतिरेकः, उभयनिष्ठत्वादनयोर्भेदकयोरिति भावः । (अत्रापि पूर्ववत् अभिन्नवेलत्वादिना शब्देन साहृश्यप्रत्यायनात् शब्दोपात्तसाहृश्यत्वमूहनीयम् । तथा उपमेयगतोत्कर्षनिमित्तस्य काञ्चनवर्णस्य, उपमानगतापकर्षनिमित्तस्य च कृष्णवर्णस्य उक्तत्वाद्यवोनोक्तव्यतिरेकभेदश्च) ॥ १८३ ॥ ॥ १८४ ॥

सश्लेषव्यतिरेकमुदाहरति, त्वमित्यादि ।—त्वं समुद्रश्च, दुर्वारौ दुर्द्धर्षः अवार्य्यवेगश्च, महासत्त्वौ सत्त्वगुणाधिकः प्रबलजलजन्तुश्च, सतेजसौ महाप्रतापः सवाड़वानलश्च इत्यर्थः, अयन्तु युवयोः भेदः, स समुद्रः, जड़ात्मा जलमयस्वरूपः, अन्यत्र—शीतलस्वभावः, भवांस्तु पटुः सुनिपुणः, अन्यत्र—अतिवेगवान् । श्लेषरूपत्वात् जड़ात्मेति पटुरिति भेदकधर्मयोः श्लिष्टत्वात् इत्यर्थः, स एषः सश्लेषव्यतिरेक इति गृह्यतां स्वीक्रियतां, पण्डितैरिति शेषः । (न च अत्र दुर्वारावित्यादि-साधारणविशेषणानां श्लिष्टत्वे सश्लेषव्यतिरेक इति वाच्यं,

साक्षेपव्यतिरेकः।—

स्थितिमानपि धीरोऽपि रत्नानामाकरोऽपि सन्।
तव कक्षां न यात्येव मलिनो मकरालयः ॥१८७॥

सहेतुव्यतिरेकः।—

वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम्।
भर्त्तृभावात् भुजङ्गानां शेषस्त्वत्तो निकृष्यते ॥१८८॥

तथात्वे सर्व्वत्रैव सश्लेषव्यतिरेकत्वप्रसङ्गः सम्भवात, सादृश्यनिर्वाहकविशेषणानां शब्दार्थान्यतरश्लेषापेक्षित्वात्, अतो भेदकविशेषणस्य श्लिष्टत्वे अयमलङ्कार इति सुधीर्भिर्विभाव्यम्)। पुनश्च अस्य श्लेषस्य भेदद्वयं दर्शयति, साक्षेप इति।—साक्षेपः आक्षेपेण साम्यनिषेधेन, सह वर्त्तमानः, निषेधश्चात्र विरुद्धान्यधर्म्मोपादानादिति बोध्यम्; सहेतुश्च हेतुना हेत्वर्थविहितविभक्त्यन्तपदेन सहितः, तत् द्वयमपि दर्श्यते निरूप्यते। उदाहरणे तु अनयोर्वक्ष्यमाणे इत्यभिप्रायः ॥ १८५ ॥ १८६ ॥

साक्षेपव्यतिरेकमुदाहरति, स्थितिमानिति।—मकरालयः समुद्रः, यतः मलिनः, अतः स्थितिमान् अनुल्लङ्घितमर्य्यादः अपि, धीरोऽपि गभीरोऽपि, अन्यत्र—दुरवगाहस्वभावोऽपि, तथा रत्नानाम् आकरः उत्पत्तिस्थानमपि, अन्यत्र—गुणरत्नानाम् आधारोऽपि इत्यर्थः, तव कक्षां सादृश्यं, न यात्येव न प्राप्नोति एव। (अत्र उपमानगतेन मालिन्यरूपधर्म्मेण साम्यप्राप्तेराक्षेपात् साक्षेपव्यतिरेकः) ॥ १८७ ॥

सहेतुव्यतिरेकमाह, वहन्निति।—सशैलद्वीपसागरां, कृत्स्नां समग्रां, महीं, वहन्नपि, शेषः अनन्तः, भुजङ्गानां पन्नागानाम्, अथच विटानां, ("भुजङ्गो विटसर्पयोः" इति कोषः) भर्त्तृभावात् स्वामित्वात्, त्वत्तः निकृष्यते निकृष्टो भवति। (अत्र भुजङ्ग-

शब्दोपादानसादृश्य-व्यतिरेकोऽयमीदृशः।
प्रतीयमानसादृश्योऽप्यस्ति सोऽप्यभिधीयते ॥१८९॥

प्रतीयमानसादृश्यव्यतिरेकः।—

त्वन्मुखं कमलञ्चेति द्वयोरप्यनयोर्भिदा।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥१९०॥
अभ्रूविलासमस्पृष्ट-मदरागं मृगेक्षणम्।
इदन्तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥१९१॥

---

पतित्वरूपधर्मस्य त्वदपेक्षया उपमानभूतानन्तापकर्षे भर्त्तृभावादिति पञ्चम्यन्तपदेन हेतुत्वकीर्त्तनात् सहेतुव्यतिरेकः) ॥ १८८ ॥

इत्थं शब्दोपात्तसादृश्यव्यतिरेकमुक्त्वा प्रतीयमानसादृश्यं निरूपयति, शब्दोपादानेति।—शब्दस्य साधारणधर्मवाचकस्य, उपादानेन यत् सादृश्यं तस्य व्यतिरेकः, अयं दर्शितरूपः, ईदृशः पूर्वोक्तप्रकारः। प्रतीयमानं धर्मवाचकपदोपादानमन्तरेणापि प्रतीतिगम्यं, सादृश्यं यत्र तादृशोऽपि प्रसिद्धयोरुपमानोपमेययोः भेदप्रकटनरूपः अपि, व्यतिरेकोऽस्ति, अधुना सः अभिधीयते प्रदर्श्यते ॥ १८९ ॥

त्वन्मुखमिति।—तव मुखं कमलञ्च अनयोर्द्वयोः इति भिदा भेदः, कमलं पद्मं, जलसंरोहि जलजं, त्वन्मुखन्तु तव वदनन्तु, त्वदुपाश्रयं त्वदेकाधारम्। (अत्र साधर्म्यस्य अप्रयोगेऽपि मुखकमलयोः साम्यं प्रसिद्धिवशात् प्रतीयते इति प्रतीयमानव्यतिरेकः) ॥ १९० ॥

अभ्रूविलासेति।—मृगस्य ईक्षणं नयनम्, अभ्रूविलासं भ्रूविलासरहितं, तथा अस्पृष्टः मदरागो येन तादृशम् अप्राप्त-

पूर्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम्।
सदृशव्यतिरेकस्तु पुनरन्यः प्रदर्श्यते ॥१८२॥

सदृशव्यतिरेकः।—

त्वन्मुखं पुण्डरीकञ्च फुल्ले सुरभिगन्धिनी।
भ्रमद्भ्रमरमम्भोजं लोलनेत्रं मुखन्तु ते ॥ १८३॥

---

मद्यपानजनितलौहित्यमित्यर्थः, तव इदं नयनद्वन्द्वन्तु तद्भ्रूभूषितं भ्रूविलासयुक्तं, स्पष्टमदरागञ्च इत्यर्थः। (अत्र उपमानमृगीचक्षुरुपमेयनयनद्वयानां विरुद्धधर्मवत्त्वमेव दर्शितं साहश्यं तु शब्देनाप्रतिपाद्यमपि प्रसिद्धतया प्रतीयते इति प्रतीयमानव्यतिरेकः) ॥ १८१ ॥

उक्तोदाहरणयोः फलं दर्शयति, पूर्वस्मिन्निति।—पूर्वस्मिन् उदाहरणे, त्वन्मुखमित्यत्र, भेदमात्रस्य उपमानोपमेययोर्भेदकधर्ममात्रस्य, उक्तिः, न तु साधारणधर्मबोधकविशेषणपदादिना साहश्योक्तिरित्यर्थः। एतेन च प्रस्तुतस्योत्कर्षकथनमपि नैव भवति, तस्य तु व्यङ्ग्यत्वमेवेति भावः। (भेदश्च द्विधा सम्भवति विरुद्धधर्माध्यासः कारणभेदश्च, उक्तञ्च "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च," इति, अत्र तु कारणभेद एवेति बोध्यम्) अस्मिन् अव्यवहिते उदाहरणे, अभ्रूविलासमित्यत्र, आधिक्यस्य उपमानोपमेययोर्निकर्षोत्कर्षख्यापनेन उपमेयोत्कर्षमात्रस्य, दर्शनं प्रतिपादनम्। अत्र तु विरुद्धधर्माध्यास एव भेदकारणमित्यवधेयम्। अन्यश्च, सदृशव्यतिरेकः सदृशेन साहश्यप्रयोगेण, व्यतिरेकः भेदः यत्र तथाविधः प्रदर्श्यते उदाह्रियते ॥ १८२ ॥

अयमपि पूर्ववत् साहश्यस्य शाब्दत्वेनार्थत्वेन च द्विविधः, तत्र सदृशव्यतिरेकं शाब्दमुदाहरति, त्वन्मुखमिति।—तव मुखं,

**चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम्।**
**नभो नक्षत्रमालीदमुत्फुल्लकुमुदं पयः॥१८४॥**

पुण्डरीकं पद्मञ्च, फुल्लं, फुल्लत्वमेकत्र—स्मितशोभित्वम्, अन्यत्र—विकसितत्वं, तथा सुरभिगन्धिनी, सुरभिगन्धित्वमुभयत्र समानम्, (अत्र फुल्लत्वसुरभिगन्धित्वरूपं धर्मद्वयं मुखपद्मयोः साधारणमिति सादृश्यस्य शब्दोपात्तत्वं बोध्यम्) भ्रमन्तः भ्रमरा यस्मिन् तत्, ते मुखन्तु लोले नेत्रे यस्मिन् तादृशम्। (अत्र भ्रमद्भ्रमरस्य पद्मधर्मतया लोलनेत्रत्वस्य च मुखधर्मतया धर्मद्वयस्योभयत्रासमानत्वेपि प्रणिधानेन सादृश्य-मेव प्रतीयते, न तु विरुद्धत्वं, तेनापि मुखपद्मयोः भेदावगमात् प्रतीयमानसादृश्यव्यतिरेकादस्य भेदावधानं युज्यते एव। विरुद्धधर्मादिना भेदप्रदर्शने भेदस्य स्फुटत्वमिति तत्र प्रतीय-मानसादृश्यव्यतिरेकः। इह तु अस्फुटभेदत्वेऽपि वैचित्र्यमिति सदृशव्यतिरेक इति। सादृश्यस्य शब्दोपात्तत्वेनास्य शब्दोपात्त-त्वम्। कश्चिदविशेषभेदवर्णने उपमेयमुखादेः उत्कर्ष इत्यपि न वाच्यं, पर्यालोचनया भ्रमरापेक्षया नेत्रस्योत्कर्षप्रतीत्या मुख-स्याधिक्यात् इति लक्षणसङ्गतिः)॥ १८३ ॥

सदृशव्यतिरेकमाथमुदाहरति, चन्द्र इति।—अयम् अम्ब-रोत्तंसः आकाशभूषणं, चन्द्रः, अयं हंसः तोयस्य भूषणम्, इदं नभः आकाशं, नक्षत्रमालि ताराविराजितं, पयश्च उत्फुल्लानि कुमुदानि यस्मिन् तादृशम्। "नभो नक्षत्रमालीदमिदमुत्-कुमुदं पयः" इति च पाठः क्वचित् दृश्यते। (अत्र चन्द्रहंसयो-रुपमानोपमेययोः शुक्लतादिसाधारणधर्मस्याप्रयोगादप्यर्थत-स्तत्प्रतीत्या प्रतीयमानसादृश्य एवायं व्यतिरेकः, तत्रापि आकाशपयसोः नक्षत्रराजियुक्तत्वफुल्लकुमुदवत्त्वरूपधर्मद्वयं

प्रतीयमानशौक्ल्यादि-साम्ययोश्चन्द्रहंसयोः ।
कृतः प्रतीतशुद्ध्योश्च भेदोऽस्मिन् वियदम्भसोः॥१९५

पूर्ववत् असाधारणमपि सदृशमिति प्रतीतेः ततश्च भेदावगमात् सदृशव्यतिरेक इति विभाव्यम् )॥ १९४ ॥

स्फुटभेदात् प्रतीयमानसादृश्यव्यतिरेकात् अस्फुटभेदसदृशव्यतिरेकस्य भेदं दर्शयन् लक्षणं सङ्गमयति, प्रतीयमानेति—अस्मिन् चन्द्रोऽयमित्यत्र उदाहरणे, प्रतीयमानं वाचकशब्दाप्रयोगात् आर्थं, शौक्ल्यादि शुक्लत्वसितपक्षशोभितत्वादिकं तेन साम्यं ययोः तादृशयोः चन्द्रहंसयोः, प्रतीता प्रसिद्धा शुद्धिः गम्यमानसादृश्यबोधिका स्वच्छता इत्यर्थः, ययोस्तथाभूतयोः, वियदम्भसोः आकाशजलयोः, आश्रयतामवस्थेः चन्द्रधर्मस्य नभसः उपमेयभूतहंसधर्मस्य पयसश्च इत्यर्थः, भेदः कृतः दर्शितः। ( अत्रेदमवधेयं—यत् उपमानं चन्द्रः, उपमेयः हंसः, तयोः साधारणधर्मः शुक्लता, तस्याश्च शब्देनानुपादानादपि प्रसिद्धतया प्रतीतिः वियदम्भोरूपविभिन्नधर्मत्वेन तयोर्भेदश्च प्रदर्शितः इति प्रतीयमानसादृश्यलक्षणोऽयं व्यतिरेकः तस्य सदृशव्यतिरकाख्यो भेदश्च। उपमानोपमेययोर्भेदबोधने परस्परबिम्बानुबिम्बत्वरूपयोर्भिन्नधर्मयोः सङ्घटनायां विरुद्धधर्मप्रयोगेण नञादिवाचकशब्देन वा यथा भेदस्य स्फुटत्वं प्रतीयते अत्र न तथेति सदृशव्यतिरेकत्वम्। तथा हि—चन्द्राश्रयनभसः नक्षत्रमालित्वम, हंसाश्रयभूतस्य पयसः फुल्लकुमुदत्वञ्च धर्मद्वयं भिन्नमपि न विरुद्धं. परन्तु स्वच्छतासाधर्म्येण उभयोः गम्यसाम्यप्रतीत्यनन्तरं भेदः प्रतीयते एव, ततश्च उत्फुल्लकुमुदत्वेन नभोऽपेक्षया तोयस्योत्कर्षप्रतीतिपर्य्यालोचनया तदाश्रितस्य हंसस्यापि आधिक्यमेव प्रतीयते इति )॥ १९५ ॥

पूर्वत्र शब्दवत्साम्यमुभयत्रापि भेदकम्।
भृङ्गनेत्रादि तुल्यं तत् सदृशव्यतिरेकता ॥१८६॥

सजातिव्यतिरेकः।—

अरत्नालोकसंहार्य्यमवार्य्यं सूर्य्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥१८७॥

पूर्वत्रेति।—पूर्वत्र पूर्वस्मिन् त्वन्मुखमित्यत्र उदाहरणे, शब्दवत्साम्य शब्दयुक्तसादृश्यं, फुल्ले सुरभिगन्धिनी इति शब्दाभ्यां मुखपद्मयोः साम्यं विहितम् अतः शब्दोपादानसादृश्योऽयं व्यतिरेक इति भावः, उभयत्र त्वन्मुखमित्यादौ चन्द्रोऽयमित्यादौ च श्लोकद्वयेऽपीत्यर्थः, तुल्यं कृष्णत्वादिना स्वच्छत्वादिना च गम्यसाम्यं, भृङ्गनेत्रादि भ्रमद्भ्रमरत्व-लोलनेत्रत्वादिकम्, (आदिना वियदम्भसोरपि ग्रहणं) तच्च भेदकम् उपमानोपमेययोरुत्कर्षापकर्षप्रतिपादनार्थं भिन्नत्वाधायकम्। तत् तस्मात्, सदृशव्यतिरेकता, अस्येति शेषः ॥ १८६ ॥

सजातिव्यतिरेकं दर्शयति अरत्नेति।—यूनां यौवनप्रभवं तमः मोहः, अन्धकारश्च, अरत्नालोकसंहार्य्यं रत्नानाम् आलोकेन हर्त्तुमशक्यं, सूर्य्यरश्मिभिः अवार्य्यम् अनाश्यं, तथा दृष्टिः चक्षुः ज्ञानञ्च, तस्या रोधः आवरणं, तत्करम्। (अत्र श्लिष्टेन तमःपदेनान्धकारमोहयोर्बोधादन्धकारमोहयोरुपमानोपमेयत्वं विवक्षितं, दृष्टिरोधकरमिति तद्विशेषणपदस्योभयवृत्तित्वेन च दृष्टिरोधित्वरूपसाधारणधर्मावगतेः सादृश्यञ्च शब्दोपात्तमेव, अरत्नालोकेत्याद्युपमेयमात्रवृत्तिधर्मप्रदर्शनेन भेदप्रकटनात् भेदस्य समानजातिसम्बन्धित्वाच्चायं सजातिव्यतिरेकः ॥ १८७ ॥

सजातिव्यतिरेकोऽयं तमोजातेरिदं तमः ।
दृष्टिरोधितया तुल्यं भिन्नमन्यैरदर्शि यत् ॥१९८॥

इति व्यतिरेकचक्रम् । *

विभावना ।—

प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम् ।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना॥१९९॥

सजातिव्यतिरेकं घटयति, सजातीति ।—यत् यस्मात्, इदं तमः मोहरूपम्, उपमेयभूतं यौवनप्रभवमित्यर्थः, दृष्टिरोधितया दृष्टिरोधकत्वरूपसाधारणधर्मेण, तमोजातेः तमस्त्वधर्मवतः, उपमानत्वेनाप्रस्तुतस्यान्धकारसामान्यस्येत्यर्थः, तुल्यं सदृशं, तथा अन्यैः अरत्नालोकेत्यादिविशेषणद्वयघटितैरसाधारणधर्मैः, भिन्नं प्रथमं तुल्यधर्मप्रदर्शनेन सदृशमपि पुनर्विरुद्धधर्माभ्यामेन भेदविशिष्टं कृत्वा, अदर्शि प्रदर्शितम्, अतः अयं सजातिव्यतिरेकः । (अत्र विशेषणद्वयेन धर्मद्वयस्योक्तावन्यैरिति बहुवचनेन अप्रदीपप्रभापनेयत्वादीनां परिग्रहः, तथा "तमोजातेः" इति पदं तुल्यमित्यनेनान्वये षष्ठ्यन्तं भिन्नम इत्यनेन सम्बन्धाच्च पञ्चम्यन्तमिति बोध्यम । तथास्तु श्लिष्टरूपकमिदम् अरत्नालोकहार्य्यत्वेन अभानुभेद्यत्वेन च अधिकारूढवैशिष्ट्यमिति मन्यन्ते ) ॥ १९८ ॥

विभावनां निरूपयति, प्रसिद्धेति ।—यत्र कार्य्योत्पत्तौ, प्रसिद्धस्य सामान्यतया लोकविख्यातस्य, हेतोः कारणस्य, ( न तु प्रकृतहेतोः, तथात्वे कार्य्यानुत्पत्तेरिति भावः ) व्यावृत्त्या अभावप्रदर्शनेन, यत् किञ्चित् कारणान्तरम अन्यत् तात्त्वक-

* इति उपरूपं, व्यतिरेकचक्रं व्यतिरेकसमूहः ।

मतिगूढं कारणमित्यर्थः, तथा स्वाभाविकत्वं वा विशेषाभिनिवेशेनापि हेत्वन्तरादर्शनेन कार्य्यस्य स्वतःसिद्धत्वं वा, विभाव्यं कार्य्योत्पत्त्यनुपपत्त्या विशेषाभिनिवेशेन चिन्तनीयं, सा कारणाभावेन कार्य्योत्पत्तिवर्णनरूपा, कारणान्तरपर्य्यवसिता स्वभावपर्य्यवसिता च द्विविधा विभावनेति योजना, विशिष्टा कारणनिरपेक्षा भावना यत्र इति व्युत्पत्तेरिति भावः। (इत्थञ्च कारणाभावे कार्य्योत्पत्तेरसम्भवात् सर्वत्र तात्त्विकं कारणं गूढ़तया अस्तीति मन्तव्यम्। अप्रस्तुतमेव यत्किञ्चित् कारणान्तरं लोकेषु कारणतया प्रतिभाति तदन्तरेण चेत् कार्य्योत्पत्तिरुपनिबध्यते तदा विभावनाया विषयः इत्यभिप्रायः। तात्त्विककारणञ्च यदुक्तं—"यो हि येन विना नास्ति यस्मिंश्च सति विक्रिया। तदेव कारणं तस्य नान्यत् कारणमुच्यते॥" ततश्च यत्र लोकप्रसिद्धहेतुमन्तरेण समुत्पन्नस्य कार्य्यस्य अनुपपत्तिभावनया विशेषाभिनिवेशवशात् कारणान्तरं प्रतीयते, सा कारणान्तरविभावना। यत्र च निपुणानुसन्धानेनापि कारणान्तरं न प्रतीयते, तत्र स्वाभाविकत्वविभावनेति लक्षणम्। तत्र च प्रसिद्धहेत्वभावः क्वचिच्छाब्दः, यथा—"अपीतक्षीव" इत्यादि वक्ष्यमाणोक्तम्। क्वचिदार्थो यथा—"वक्त्रं निसर्ग" इत्यादि २०३ सङ्ख्यकश्लोकोक्तम्। कारणान्तरमपि तथा, तत्र शाब्दः यथा—"अनायासकृशं मध्यमशङ्कतरले दृशौ। अभूषणमनोहारि वपुर्वयसि सुभ्रुवः॥" इति वयोरूपकारणान्तरस्योक्तत्वात्। आर्थः यथा—"अपीतक्षीव" इत्यादि वक्ष्यमाणोक्तं, शरत्कालरूपकारणान्तरस्यानुक्तत्वात्। स्वाभाविकत्वञ्च तथा द्विविधं, तत्र शाब्दं यथा—"वक्त्रं निसर्गसुरभि" इत्यादि, निसर्गादिपदस्य शब्दप्रतिपाद्यत्वात्। आर्थं यथा—"अनञ्जितासिता दृष्टिः" इत्यादि २०१ सङ्ख्यकश्लोकोक्तम्। अत्र हि

कारणान्तरविभावना ।—

अपीतक्षीबकादम्बमसम्मृष्टामलाम्बरम् ।
अप्रसादितशुद्धाम्बु जगदासीन्मनोहरम् ॥२००॥

विधिनिर्मितत्वरूपं स्वाभाविकत्वं बोद्धव्यम् । केचित्तु "विभाव्यं कारणान्तरं स्वाभाविकत्वं वा यस्यामिति अधिकरणप्रत्ययान्तोऽयं विभावनाशब्दः" इति व्याख्याय नवीनोक्तविभावनायां संज्ञार्थानन्वयंतेति तन्न सम्यक् इत्याहुः । नव्यास्तु कारणाभावे कार्य्योत्पत्तिवर्णनं विभावनेति लक्षणयन्ति ; यदाह दर्पणकारः,—"विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" ) इति ॥ १९९ ।

कारणान्तरविभावनामाह, अपीतेति ।—जगत् अपीत अकृतमधुपानाः, ( अपीत इत्यत्र कर्त्तरि क्तप्रत्ययस्य साधुत्वात् कादम्बविशेषणं युक्तम् ) अथ च क्षीबाः मत्ताः, कादम्बाः हंसविशेषाः यस्मिन् तत्, असम्मृष्टं मार्जन्या अपरिष्कृतम्, अथ च अमलं निर्मलम्, अम्बरम् आकाशं यस्मिन् तत्, तथा अप्रसादितं केनाप्यपरिष्कृतम्, अथ च शुद्धम् अम्बु जलं यस्मिन् तथाभूतम्, अत एव अतिमनोहरम् आसीदित्यन्वयः । (अत्र प्रसिद्धस्य क्षीबत्वकारणस्य पानस्य, अमलत्वकारणस्य मार्जनस्य, शुद्धिकारणस्य प्रसादनस्य असद्भावेऽपि तत्तत्फलोत्पत्तिः इति तत्तत्कारणाभावस्य शब्दोपात्तः एव, ततश्च कथमिदं जातमिति पर्य्यालोचनया शरत्कालरूपं कारणान्तरं विभावयतीति कारणान्तरविभावना । तच्च कारणान्तरं शब्देनाप्रतिपाद्यमानमिति आर्थं, क्वचिच्च शाब्दमपि तद्भवति यथा—"अनायासकृशम्' इत्यादौ वयोरूपं कारणान्तरं शाब्दम् । केचिदत्र निमित्तोक्तानुक्तत्वेन द्वैविध्यमाहुः, तेषां मते अनायासेत्याद्युदाहरणे वयोरूपस्य निमित्तस्योक्तत्वात् इयमुक्तनिमित्ता विभावना, अपीत

स्वाभाविकत्वविभावना ।—

अनञ्जिताऽसिता दृष्टिर्भ्रूरनावर्जिता नता ।
अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ! ॥२०१॥
यदपीतादिजन्यं स्यात् क्षीवत्वाद्यन्यहेतुजम् ।
अहेतुकञ्च तस्येह विवक्षेत्यविरुद्धता ॥२०२॥

---

क्षीवेत्यादौ मरत्कालरूपनिमित्तस्यानुक्त्या अनुक्तनिमित्तता इति )॥ २०० ॥

स्वाभाविकत्वविभावनामाह, अनञ्जितेति ।—हे सुन्दरि ! तव दृष्टिः अनञ्जिता अञ्जनेन अननुलिप्ताऽपि, असिता श्यामला, भ्रूः अनावर्जिता अनाकृष्टाऽपि, नता वक्रीकृता, अयमधरश्च अरञ्जितोऽपि अरुणः । ( अत्र प्रसिद्धमसितत्वकारणम् अञ्जनं, वक्रताकारणमावर्जनम्, अरुणताकारणं रञ्जनं, तदभावेऽपि तत्तत्फलोत्पत्तिः इति प्रसिद्धकारणाभावेनोपजायमानमसितत्वादिकार्य्यं, कारणान्तरस्यापि निर्णेतुमशक्यतया विधिनिर्मितत्वरूपं स्वाभाविकत्वमेव भावयतीति स्वाभाविकत्वविभावना ; तच्च स्वाभाविकत्वमिह शब्दप्रतिपाद्यत्वाभावाद्गम्यं, प्रसिद्धकारणाभावस्य शाब्द इत्यवधेयम् )॥ २०१ ॥

उक्तयोरुदाहरणयोर्लक्षणं सङ्गमयन् विरोधं परिहरति, यदिति ।—पूर्वोदाहरणे अपीतादिजन्यं पानाद्यजन्यमित्यर्थः, किन्तु यत् अन्यहेतुजं मरत्कालरूपकारणान्तरजन्यं, क्षीवत्वादि स्यात् भवेत् । ( आदिना उत्तरश्लोकगतानामसितत्वादीनां परिग्रहः, तेन च द्वितीयोदाहरणे अञ्जनत्वाद्यजन्यं यत् असितत्वादि च इत्यर्थो लभ्यते ) अहेतुकं लोकप्रसिद्धकारणाभावोपनिबद्धं, स्वाभाविकत्वेन प्रतीयमानमित्यर्थः,

निपुणानुसन्धानेनापि हेत्वन्तराप्रतीतेरिति भावः; इह उदाहरणद्वये, तस्य अन्यहेतुजत्वस्य अहेतुकस्य च, विवक्षा वक्तुमिच्छा, इत्यतः, अविरुद्धता विरोधाभावः। ( अयं भावः,—कारणान्वयव्यतिरेकानुविधानात् कारणमन्तरेण कार्य्योत्पत्ति-र्नहि सम्भवति, इह तु तदङ्गीकारे विरोध एव स्यात्, वस्तुतः अप्रस्तुतं कारणमस्तीति विरोधपरिहारः। विरोधे हि कार्य्यं कारणञ्च बाध्यमानत्वेन प्रतीयेते, इह तु कारणाभावेनोप-क्रान्तत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते इत्यनयोर्भेद इत्यभिप्रायः। तथा हि—"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः। हरताऽपि तनुं यस्य शम्भुना न हृतं बलम् ॥" इत्यादौ बलाहरणेन कार्य्याभावेन तनुहरणरूपं कारणं न बाध्यते, अपि तु सत्यपि तनुहरणाख्ये सामग्रे कथं न बलं हृतमिति कार्य्याभावस्यैव बाध्यत्वेन प्रतीतिः। यदुक्तं—"कारणस्य निषेधेन बाध्यमानः फलोदयः। विभावनाया-माभाति विरोधोऽन्योऽन्यबाधनम् ॥ अतो दूरविभेदोऽस्या विरोधेन व्यवस्थितः ॥" इति। एवं विशेषोक्तौ च कार्य्याभावेन कारणसत्तायाः बाध्यमानत्वमवगन्तव्यम्। राजानकतिलके-नाप्युक्तं—"कारणसामग्र्यमिह बाधकत्वेनैव प्रतीयते कार्य्या-नुत्पत्तिस्तु बाध्यत्वेन" इति। केचित्तु तृणारणिन्यायेन प्रत्येक-पर्य्याप्तकारणतायां व्यभिचारापत्त्या कार्य्यगतं वैजात्यमङ्गीकृत्य पानादिजन्यं घौवत्वादिकमन्यत् शरत्कालजन्यमन्यदिति पानादिकारणाभावेऽपि शरज्जन्यं विजातीयमिदं घौवत्वादिक-मिति विरोधं दूरीकृतवन्तः। ततश्च कारणान्तरस्य स्वभाव-रूपालौकिककारणस्य चानुसन्धानादत्रोऽविद्यमानेऽपि कारणे कार्य्योत्पत्तिरिति वैचित्र्यजनकत्वादेवायमलङ्कार इति सुधीभि-र्विवेच्यम् ॥ २०२ ॥

वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम्।
अकारणरिपुश्चन्द्रो निर्निमित्तासुहृत् स्मरः ॥२०३॥
निसर्गादिपदैरत्र हेतुः साक्षान्निवर्त्तितः।
उक्तञ्च सुरभित्वादि फलं तत् सा विभावना॥२०४॥

इति विभावनाचक्रम्। *

पूर्वमार्थं स्वाभाविकत्वमुक्तं सम्प्रति शाब्दं स्वाभाविकत्वमुदाहरति, वक्त्रमित्यादि।—वक्त्रं मुखं, निसर्गेण स्वभावेन, सुरभि सुगन्धि, न तु केनापि गन्धवस्तुनेति भावः, वपुः शरीरम्, अव्याजेन अकपटेन, सुन्दरं स्वभावसुन्दरं, न तु आहार्य्यशोभयेत्यर्थः, चन्द्रः अकारणरिपुः अहेतुकशत्रुः, तथा स्मरः कामः, निर्निमित्तासुहृत् अकारणशत्रुः; निसर्गादिपदैः सुरभित्वादीनां स्वाभाविकत्वमेव बुध्यते इति तस्य शाब्दत्वम् इत्यभिप्रायः। हेतुनिषेधात्मकस्य प्राक्लक्षणस्य सङ्गतिं प्रतिपादयन्नाह, निसर्गेत्यादि।—निसर्गादिपदैः निसर्गाव्याजाकारणनिर्निमित्तशब्दैरित्यर्थः, हेतुः लोकप्रसिद्धकारणम्, अत्र साक्षात् निषेधवाचकनञादिपदवत्, निवर्त्तितः निवारितः, किमपि गन्धद्रव्यमेव सुरभित्वस्य कारणं भवति, निसर्गपदेन तत्प्रतिषेधः प्रतीयते एवेति भावः; सुरभित्वादिरूपं फलञ्च उक्तं वर्णितं, तत् तस्मात्, कारणाभावेऽपि फलस्योदयात्, तस्य स्वाभाविकत्वावबोधाच्च, सा प्रसिद्धा शब्दगतस्वाभाविकत्वलक्षणा, विभावना इति। (एवमस्यां क्वचित् कारणाभावः कारणविरुद्धमुखेन प्रतिपाद्यते; यथा—"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः। सा चैवास्मि तथाऽपि तत्र

* इति चक्ररूपं, विभावनाचक्रं विभावनासमूहः।

समासोक्तिः।—

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः।
उक्तिः सङ्क्षेपरूपत्वात् सा समासोक्तिरिष्यते ॥२०५॥

सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥" इति। अत्र कौमारहरवराद्यसन्निधानरूपं कारणं विना उत्कण्ठाया उत्पत्तेर्विभावना; तथा कौमारहरवरादिसन्निधानरूपकारणे सत्यपि अनुत्कण्ठारूपकार्य्याभाव इति विशेषोक्तिरपि, एवञ्च सर्व्वत्रैव विभावनाविशेषोक्त्योः सन्देहसङ्कर इति केषाञ्चिन्मतम्। तथा हि यत्र कारणाभावे कार्य्योत्पत्तिस्तत्र कारणाभावरूपकारणसत्त्वेऽपि कार्य्याभावरूपकार्य्यानुत्पत्तेः अलङ्कारद्वयमेव सम्भवति। कौस्तुभकारस्तु तन्नाङ्गीकरोति; तन्मते यत्र कारणाभावरूपकारणसत्त्वे कार्य्याभावरूपकार्य्योत्पत्तिस्तत्र न विभावना, अतस्तेनोक्तं—"यत्र कारणानधिकरणक्षणोत्तरक्षणस्य कार्य्याधिकरणत्वमुच्यते सा विभावना, कारणाधिकरणक्षणोत्तरक्षणस्य च यत्र कार्य्यानधिकरणत्वमुच्यते सा विशेषोक्तिः" इति)॥ २०३॥ २०४॥

समासोक्तिमाह, वस्तु इति।—किञ्चित् किमपि प्रस्तुतं, वस्तु अभिप्रेत्य सङ्कल्प्य, तत्तुल्यस्य तत्सदृशस्य, अन्यस्य उपमानस्याप्रस्तुतस्य, वस्तुनः उक्तिः शब्देन कथनं, (प्रस्तुताप्रस्तुतयोः शब्देन प्रतिपादने भूयान् विस्तारः, शब्दया तत्प्रतिपादनापेक्षया व्यञ्जनया तस्य प्रस्तुतार्थस्य बोधनमतीव चमत्कारपदवीमारोहतीति तथा कथनम्। उक्तञ्च ध्वनिकृता—"वाच्योऽर्थो न तथा स्वदते प्रतीयमानः स एव यथा" इति) संज्ञावीजमाह, सङ्क्षेपरूपत्वादिति।—एकस्य

कार्य्यघटिता समासोक्तिः।—

पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम्॥२०६॥
इति प्रौढ़ाङ्गनाबद्ध-रतिलीलस्य रागिणः।
कस्याञ्चिदपि बालायामिच्छावृत्तिर्विभाव्यते॥२०७॥

प्रयोगेणाभयार्थस्य बोधनादित्यर्थः, समासेन सङ्क्षेपेण, अर्थद्वयस्य उक्तिः प्रत्यायनं, समासोक्तिरिति व्युत्पत्तेरिति भावः, सा प्रसिद्धा, समासोक्तिः इष्यते सुधीभिरभिलष्यते इत्यर्थः। (इत्यञ्च प्रस्तुताप्रस्तुतयोर्द्वयोरेकस्याप्रस्तुतस्य प्रयोगेण सादृश्यात् प्रस्तुतस्यापि प्रत्यायनं समासोक्तिरिति लक्षणमायातम्। केचित्तु उपमानादुपमेयस्य प्रतीतिः समासोक्तिरित्याहुः, तदुक्तं भोजराजेन—"यत्रोपमानादेवैतत् उपमेयं प्रतीयते। अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः॥" इति। सादृश्यञ्चात्र कार्य्यलिङ्गविशेषणानामन्यतमेन सम्भवति, कार्य्यादिसादृश्यादन्यवस्तुन उक्तिश्च व्यवहारसमारोपेणैवेति सुधीभिः विभाव्यम्। उक्तञ्च विश्वनाथेनापि—"समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति। अन्ये तु यदप्रकृते प्रसिद्धधर्मस्य प्रकृते समारोपात्तद्व्यवहारावच्छेदकतया तत्प्रतियोगिनोऽप्रकृतार्थस्य प्रतीतिः समासोक्तिः इत्याहुः। यत्र अप्रकृतेन प्रकृतार्थबोधनं तत्राप्रस्तुतप्रशंसा, प्रकृतेन अप्रकृतार्थबोधनन्तु समासोक्तिरिति तेषामाशयः)॥२०५॥

समासोक्तेः कार्य्यलिङ्गविशेषणघटितत्वात् प्रथमं कार्य्यघटितां समासोक्तिमुदाहरति, पिबन्नित्यादि। भ्रमरः फुल्लपङ्कजे विकसितारविन्दे, यथाकामं मधु पिबन् असन्नद्धसौरभ्यम्

विशेषणघटिता समासोक्तिः ।—

विशेष्यमात्रभिन्नाऽपि तुल्याकारविशेषणा ।
अस्त्यसावपराऽप्यस्ति भिन्नाभिन्नविशेषणा ॥२०८॥

अजातमधुगन्धम अपि, कुड्मलं चुम्बति पश्य । इत्यत्र, प्रौढायाम् अङ्गनायाम् आबद्धा रतिलोला येन तादृशस्य, रागिणः अनुरागवतः कामिनः, कस्याश्चित् बालायां मुग्धायाम, इच्छावृत्तिः अभिलाषोदयः, विभाव्यते ध्वन्यते इति । (अत्र अप्रस्तुतात् भ्रमरकार्य्यात् प्रस्तुतकामुककार्य्यस्य प्रतीतेः कार्य्यघटितेयं समासोक्तिः) ॥ २०६ ॥ २०७ ॥

समासोक्तेः विशेषणघटितभेदं दर्शयन् अभिन्नविशेषणत्वेन भिन्नाभिन्नविशेषणत्वेन च द्विविधं भेदं दर्शयति, विशेष्येति ।— विशेष्यमात्रं विशेष्यपदमात्रं, भिन्नं श्लेषाभावात् एकमात्रबोधकं यत्र सा, विशेष्यपदस्य श्लिष्टत्वे तूभयोः प्रस्तुतत्वेन श्लेषालङ्काराङ्गीकारादिति भावः, तुल्याकारविशेषणा तुल्याकारं श्लेषवशात् वाच्यव्यङ्ग्योभयधर्मबोधकं, विशेषणं यत्र सा इत्येकविधा अस्ति, अपरा च भिन्नम् श्लेषाभावादेकमात्रबोधकम अभिन्नञ्च श्लेषादुभयबोधकञ्च विशेषणं यत्र तादृशी, श्लिष्टाश्लिष्टविशेषणेत्यर्थः, इति द्वितीयाऽपि अस्ति । (इत्यञ्च श्लिष्टविशेषणा श्लिष्टाश्लिष्टविशेषणेति भेदद्वयं बोध्यम् । श्लेषश्चात्र शब्दार्थगतः द्विविध एव । तुल्याकारविशेषणे एकरूपशब्दप्रतिपाद्यत्वेन श्लेषवशात् विशेषणधर्माणां साम्यं, भिन्नविशेषणस्थले तु व्यङ्ग्यधर्मेण विम्बप्रतिविम्बतया साम्यमवगन्तव्यम् । केचित्तु विशेषणसाम्यं श्लिष्टतया, साधारण्येन, औपम्यगर्भत्वेन च भावात् त्रिधा सम्भवतीत्याहुः ; तेषां मते औपम्यगर्भसमासोक्तेः उदाहरणं यथा—"दन्तप्रभापुष्पचिता पाणिपल्लवशोभिता ।

केशपाशालिवृन्देन सुवेशा हरिणेक्षणा ॥" इति। अत्र दन्तप्रभा पुष्पाणि इव इति सुवेशत्ववशादुपमागर्भत्वेन कृते समासे नायिकाया बोधः, पश्चात् दन्तप्रभासदृशैः पुष्पैश्चितेति समासान्तराश्रयणेन समानविशेषणमाहात्म्यात् हरिणेक्षणायां लताव्यवहारप्रतीतिः। "सुवेशा" इत्यत्र "परीता" इति पाठे उपमारूपकसाधकबाधकाभावात् सङ्करगर्भत्वञ्च सम्भवति, औपम्यगर्भस्यापि विशेषणसाम्यस्य उपमारूपकसङ्करगर्भत्वेन त्रिविधत्वस्यैवाङ्गीकारात्। अन्ये तु औपम्यगर्भविशेषणस्थले उपमारूपकयोरेकदेशविवर्त्तितामेवाङ्गीकुर्वन्ति, न तु समासोक्तिम्; अत एव ग्रन्थकारोऽपि विशेषणपदानां द्वैविध्यमेवाह। तथा हि—"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानाऽऽर्द्रनखक्षताभम्। प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥" इत्यादौ आर्द्रनखक्षताभैन्द्रधनुर्धारणरूपविशेषणस्य नायिकाया असम्भवेन साम्याभावात् शरदि नायिकाप्रतीतिः कथमिति एकदेशविवर्त्तिन्युपमैव भवितुं युक्ता, यत्सामर्थ्यात् रविशशिनोर्नायकत्वप्रतीतिः स्यादिति तेषामाशयः, तदन्ये न मन्यन्ते, प्रसादयन्ती सकलङ्कमिन्दुमिति विशेषणसाम्याच्छरदो नायिकात्वप्रतीतौ तदानुगुण्यात् रविशशिनोः समासोक्त्या नायकत्वप्रतीतिः, किमेकदेशविवर्त्तिन्या उपमायाः अङ्गीकारेण? इत्यभिप्रायः। पक्षान्तरे तु अत्र नोपमानत्वेन नायकः स्वरूपेण प्रतीयते, तथाऽपि रविशशिनोरेव नायकव्यवहारप्रतीतिस्तयोरत्र नायकत्वात्। आर्द्रनखक्षताभमैन्द्रं धनुर्दधाना इत्येतद्विशेषणं साम्येन कथं निर्दिष्टमिति चेत् आर्द्रनखक्षताभमित्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयम्, इन्द्रचापाभं नखक्षतं दधानेति प्रतीतेः; यथा "दध्ना जुहोति" इत्यादौ दध्नि सञ्चार्य्यते विधिरिति। एवमियमुपमानुप्राणिता समासोक्तिरेव

रूढमूलः फलभरैः पुष्णन्ननिशमर्थिनः ।
सान्द्रच्छायो महावृक्षः सोऽयमासादितो मया ॥२०९

अनल्पविटपाभोगः फलपुष्पसमृद्धिमान् ।
सुच्छायः स्थैर्य्यवान् दैवादेष लब्धो मया द्रुमः ॥२१०।

उभयत्र पुमान् कश्चित् वृक्षत्वेनोपवर्णितः ।
सर्वे साधारणा धर्माः पूर्वत्रान्यत्र तु द्वयम् ॥२११॥

न तु एकदेशविवर्त्तिन्युपमा ; तदवौपम्यगर्भविशेषणमपि युज्यते इति समाधानम् ॥ २०८ ॥

यथाक्रममुदाहरणे दर्शयति, रूढेति ।—रूढं प्रवृद्धं, मूलं शिफा मूलधनञ्च यस्य सः, फलानां भरैः समूहैः बहुभि-र्धनैश्च, अनिशम् अर्थिनः पुष्णन् प्रतिपालयन्, तथा सान्द्रा घना, छाया अनातपप्रदेशः कान्तिश्च यस्य तादृशः, सः प्रसिद्धः, अयं महान् वृक्षः मया आसादितः प्राप्तः ॥ २०९ ॥

अनल्पेति ।—अनल्पः बहुलः, विटपानां शाखानाम्, आभोगः विस्तारः यस्य सः, फलानां पुष्पाणाञ्च समृद्धिः विद्यते अस्य सः, सुशोभना, छाया अनातपप्रदेशः कान्तिश्च यस्य सः, तथा स्थैर्य्यवान् स्थैर्य्यं सारवत्त्वं तद्वान् दृढप्रतिज्ञश्च, (उक्तञ्च—"व्यसनाद्यैरचलनं स्थैर्य्यं विघ्ने महत्यपि" इति) एवम्भूतः एषः द्रुमः मया दैवात् लब्धः ॥ २१० ॥

उभयत्र लक्षणं सङ्गमयति, उभयत्रेति ।—उभयत्र पद्ययोः, कश्चित् पुमान् वृक्षत्वेन उपमानधर्मिणः वृक्षस्योपमेयत्वेन इत्यर्थः, उपवर्णितः व्यञ्जनया प्रतिपादितः, पूर्वत्र उदाहरणे, सर्वे धर्माः रूढमूलादिविशेषणपदप्रतिपाद्यस्वरूपा इत्यर्थः, साधारणाः श्लेषमूलत्वात् प्रस्तुताप्रस्तुतयोरन्वयित्वेनाभिन्नाः ।

अपूर्वसमासोक्तिः।—

निवृत्तव्यालसंसर्गो निसर्गमधुराशयः।
अयमम्भोनिधिः कष्टं कालेन परिशुष्यति ॥२१२॥
इत्यपूर्वसमासोक्तिः पूर्वधर्मनिवर्त्तनात्।
समुद्रेण समानस्य पुंसो व्यापत्तिसूचनात् ॥२१३॥

इति समासोक्तिचक्रम्। *

---

(विशेष्यपदमात्रं श्लेषस्पर्शाभावात् भिन्नमिति प्रथमोक्तायाः तुल्याकारविशेषणाया उदाहरणमिदमित्यभिप्रायः) अन्यत्र उदाहरणे तु द्वयं भिन्नमभिन्नञ्च इति धर्मद्वितयं प्रदर्शितमिति शेषः। (आद्यद्वितीये विशेषणे श्लेषाभावात् भिन्ने, तृतीयचतुर्थे श्लेषोपलम्भात् अभिन्ने इति भिन्नाभिन्नविशेषणत्वम्) ॥ २११ ॥

अपूर्वसमासोक्तिमुदाहरति, निवृत्तेत्यादि।—निवृत्तः व्यालानां सर्पाणां खलानाञ्च, संसर्गः यस्मात् सः, निसर्गात् स्वभावतः, मधुराणां सुमिष्टजलानाम् इति यावत्, आशयः आधारः, अन्यत्र—मधुरः मनोरमः, आशयो यस्य सः सहृदय इत्यर्थः, अयम् अम्भोनिधिः, कालेन समयेन यमेन च, परिशुष्यति शोषं नीयते विनाश्यते च, कष्टं कष्टकरमेतदित्यर्थः। इत्यत्र, पूर्वधर्मयोः व्यालसंसर्गित्वलवणजलत्वयोः, निवर्त्तनात् अनुपादानेन तद्विपरीत्यधर्मयोः कीर्त्तनादित्यर्थः, समुद्रेण समानस्य पुंसः व्यापत्तिसूचनात् विनाशद्योतनात्, अपूर्वा पूर्वविपरीता, समासोक्तिरियम्। (नवीनोक्तेषु कार्य्यलिङ्गविशेषणेषु कार्य्यविशेषणयोः सादृश्ये समासोक्तिरनेन दर्शिता, लिङ्गसाम्ये तु

* इति वक्तृरूपं, समासोक्तिचक्रे समासोक्तिसमूहः।

अतिशयोक्तिः।—

विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा॥२१४॥

यथा—"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः?। अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः॥" इति। अत्र उत्तरार्द्धे स्त्रीपुंलिङ्गसाम्यात् नायकनायिकाव्यवहारप्रतीतिः। एवम् अस्यालङ्कारस्य व्यवहारसमारोप एव जीवितमिति बहु-प्रकारा समासोक्तिरिति नव्याः। तत्र लौकिके वस्तुनि लौकिक-वस्तुव्यवहारसमारोपः, शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहार-समारोपः, शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोपः, लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः इति चतुर्द्धा व्यवहारसमारोपः सम्भवति। तत्र शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपे उदाहरणं यथा—"येरेकरूपमखिलास्वपि वृत्तिषु त्वां पश्यद्भि-रव्ययमसङ्ख्यतया प्रवृत्तम्। लोपः कृतः किल परत्वजुषो विभक्ते-स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये॥" इति, अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणशास्त्रप्रसिद्धवस्तुसमारोपः। एवमन्यदप्युदा-हरणं ज्ञेयम्)॥ २१२॥ २१३॥

अतिशयोक्तिमाह, विवक्षेति।—विशेषस्य प्रस्तुतवस्तुगतस्य उत्कर्षस्य, लोकसीमा लोकमर्य्यादा, तस्याः अतिवर्त्तिनी अतिरिक्ता, अत्यधिका इत्यर्थः, या विवक्षा उक्तिः, अध्यवसा-यादिना भङ्ग्यन्तरेण वा उपमेयस्य उपमानस्वरूपेण प्रतिपादन-मित्यर्थः, (अत्र स्वार्थे सन्प्रत्ययो बोद्धव्यः) असौ अलङ्कारेषु उत्तमा सर्वालङ्कारश्रेष्ठा इत्यर्थः, अतिशयोक्तिः अतिशयस्य उत्कर्षातिशयस्य, उक्तिः कथनमिति व्युत्पत्तेस्तन्नामालङ्कार-भेदः, स्यात्। (इत्यत्र प्रस्तुतस्य उत्कर्षातिशयप्रतिपादनार्थम्

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥२१५॥

उपमेये उपमानस्यानाहार्य्याभेदबुद्धिः अतिशयोक्तिरिति लक्षणं, रूपके तु आहार्य्याभेदप्रतीतिरित्यनयोर्भेदः। एवञ्च मुखादीनां चन्द्राभिन्नत्वेनोपस्थितौ रूपकं, चन्द्रत्वेनोपस्थितौ त्वतिशयोक्तिरिति निष्कर्षः। अन्ये च प्रस्तुतवस्तुनोऽत्युत्कर्षोक्तिरतिशयोक्तिरित्येवं लक्षणमाहुः। उक्तञ्चाग्निपुराणे—"लोकसीमातिवृत्तस्य वस्तुधर्मस्य कीर्त्तनम्। भवेदतिशयो नाम सम्भवोऽसम्भवो द्विधा॥" इति। अत्र लोकसीमातिवृत्तस्य वस्तुधर्मस्य इत्यनेन उत्प्रेक्ष्यधर्मत्वं बोध्यम्; तदुक्तं वामनेनापि—"सम्भाव्यधर्मस्य तदुत्कर्षकल्पनाऽतिशयोक्तिः" (४ अधि० ३य अ० १० सू०) इति। एवञ्च नवीनैरुक्तानां चतुर्विधानामेव भेदानां लोकसीमातिवर्त्तित्वेन लाभ इत्यवधेयं, तथाविधत्वेनैव तादृशोत्कर्षातिशयसम्भवात्। चतुर्विधत्वमुक्तञ्चास्याः प्रकाशकृता यथा—"निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत्। प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्॥ कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः। विज्ञेयाऽतिशयोक्तिः सा॥"इति)॥२१४॥

अतिशयोक्तिमुदाहरति, मल्लिकेति।—अभिसारिकाः कान्तार्थिन्यः, ("कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इत्यमरः) मल्लिकानां माला मल्लिकामाला, तां बिभ्रतीति मल्लिकामालभारिण्यः, ("इष्टकेषीकामालानां चिततूलभारिषु" (६।३।६५ पा०) इति मालाशब्दस्य ह्रस्वत्वम्) सर्वाङ्गीणं सर्वाङ्गव्यापकम्, आर्द्रं चन्दनं यासां ताः, तथा क्षौमं पट्टवसनं विद्यते यासां ताः, परिहितश्वेतपट्टवसना इत्यर्थः, अत एव ज्योत्स्नायां न लक्ष्यन्ते। (अत्र ज्योत्स्नावर्णनेन

चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तया ।
संशयातिशयादीनां व्यक्तौ किञ्चिन्निदर्श्यते ॥२१६॥

संशयातिशयोक्तिः ।—

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये ! तव ।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्त्तते॥२१७॥

---

प्रस्तुतत्वात् तस्याः श्वेतत्वं मल्लिकामालादिकृतनायिकाश्वेतत्वाभिन्नतया वर्णनात् समधिकत्वेन प्रतीयते, अथवा तादृशरजन्याम् अभिसारिकाणामलक्ष्यत्वासम्भवेऽपि अलक्ष्यत्वकथनात् प्रस्तुतायाः ज्योत्स्नायाः श्वेतत्वस्य सम्यगुत्कर्षः प्रतीयते )॥ २१५ ॥

उक्तोदाहरणे लक्षणं योजयति, चन्द्रातपस्येति ।—अत्र चन्द्रातपस्य ज्योत्स्नायाः, उत्कर्षवत्तया गुणाधिक्यप्रतिपादनार्थं, बाहुल्यं गाढ़त्वम्, उक्तम् ; ( ततश्च मल्लिकामालाधारणादिविशेषणविशिष्टानामभिसारिकाणां ज्योत्स्नायां लक्ष्यत्वेऽप्यलक्ष्यत्वप्रतिपादनेन प्रकृतायाः ज्योत्स्नायाः श्वैतिमोत्कर्षः प्रतीयते इति लक्षणसङ्गतिः ) अन्यानपि भेदान् प्रदर्शयितुमाह, संशयेत्यादि ।—इदानीं संशयातिशयादीनां संशयेन सन्देहेन, अतिशयः उत्कर्षाधिक्यं यत्र तदादीनां संशयातिशयोक्तिप्रभृतीनामित्यर्थः, ( आदिना वक्ष्यमाणनिर्णयातिशयादीनां परिग्रहः ) व्यक्तौ व्यक्तीकरणे, किञ्चित् भेदान्तरं, न तु बहुलमिति भावः, निदर्श्यते उदाह्रियते ॥ २१६ ॥

संशयातिशयोक्तिमुदाहरति, स्तनयोरिति ।—हे प्रिये ! तव मध्यं स्तनयोः, विपुलयोरिति भावः, जघनस्यापि, विपुलस्येति भावः, मध्ये अस्ति वा नास्ति इति सन्देहः मे मम, अद्यापि

निर्णयातिशयोक्तिः।—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ! ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः॥ २१८ ॥

आश्रयाधिक्यातिशयोक्तिः।—

अहो ! विशालं भूपाल ! भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥२१९॥

अस्तीति स्थाने सत्यपीत्यर्थः, न निवर्त्तते। (अत्र मध्यस्यातिकृशत्वेन संशयस्य कल्पना कविना कृता, तेन च तस्य कृशत्वातिशयः प्रतिपादितः, तथाविधसंशयस्य असम्बन्धत्वेऽपि कल्पनया तदुक्तेरियं संशयमूलाऽतिशयोक्तिरिति ध्येयम्) ॥ २१७ ॥

निर्णयातिशयोक्तिमुदाहरति, निर्णेतुमिति।—हे नितम्बिनि! तव मध्यम् अस्ति इति निर्णेतुं शक्यम्, अन्यथा पयोधरयोः स्तनयोः, भरस्य स्थितिः न उपपद्येत मध्यं नास्ति चेत् कथं पयोधरौ तदुपरि वर्त्तताम्? (अत्र पयोधरयोर्निरवलम्बनस्थित्यनुपपत्तेः मध्यदेशस्य अस्तित्वनिर्णयासम्बन्धेऽपि तत्कल्पनेन अतिक्षीणत्वनिर्णयात् निर्णयातिशयोक्तिरियम्) ॥ २१८ ॥

आश्रयाधिक्ये अतिशयोक्तिं दर्शयति, अहो इति।—हे भूपाल! भुवनत्रितयोदरं त्रिभुवनाभोग इत्यर्थः, विशालम् अहो! इति आश्चर्य्यसूचकमव्ययं, त्रिभुवनस्य विशालत्वमत्याश्चर्य्यमित्यर्थः, यत् यस्मात्, अत्र त्रिभुवनोदरे, मातुमशक्योऽपि ते यशोराशिः माति पर्य्याप्ततां गच्छति। (अत्र आश्रयस्य त्रिभुवनोदरस्य विशालत्वप्रतिपादनेन आश्रितस्य यशोराशेराधिक्यवर्णनात् आश्रयाधिक्यातिशयोक्तिः) ॥ २१९ ॥

अतिशयोक्तिप्रशंसा।—

अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥२२०॥

इति अतिशयोक्तिचक्रम्। *

उत्प्रेक्षा।—

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥२२१॥

अस्या अलङ्कारोत्तमत्वं दर्शयति, अलङ्कारेति।—वागीश-महितां वाक्पतिपूजिताम्, इमाम् अतिशयाह्वयाम् अतिशया-ख्याम्, उक्तिम् अतिशयोक्तिमित्यर्थः, अलङ्कारान्तराणाम् अन्ये-षाम् अलङ्काराणाम् अपि, एकं परायणं परमाश्रयम्, आहुः, कवय इति शेषः, अस्या एव वैचित्र्यातिशयमहिम्ना सर्वेषा-मलङ्काराणां प्रादुर्भावादिति भावः। (वैचित्र्यातिशयाभावे विद्य-मानानामपि उपमादीनां नालङ्कारता, यथा—गौरिव गवय इत्यादि। उक्तञ्च—"कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात्। प्रायेणामी अलङ्कारा भिन्ना नातिशयोक्तितः॥" इति; ततश्च तत्तद्वैचित्र्यविशेषेणालङ्कारान्तरत्वं, वैचित्र्यान्तराभावे तु अतिशयोक्तिरिति ध्येयम्। प्रोक्तोदाहरणेषु च अलङ्का-रान्तरसद्भावत्वं कथञ्चित् बोध्यम्। तथा हि "मल्लिकामाल-भारिण्यः" इत्यादौ सामान्यं, "स्तनयोर्जघनस्यापि" इत्यादौ सन्देहः, "निर्णेतुम्" इत्यादौ च निश्चयः, "अहो विशालम्" इत्यादौ च अधिकालङ्कारः इति अन्यैरुक्ता अपि अङ्गी-कार्य्याः) ॥ २२० ॥

अथोत्प्रेक्षां निरूपयति, अन्यथेति।—चेतनस्य इतरस्य

* इति उक्तरूपम्, अतिशयोक्तिचक्रम् अतिशयोक्तिसमूहः।

अचेतनस्य वा, प्रस्तुतस्य इति भावः, अन्यथैव स्वाभाविकत्वेनैव, स्थिता वृत्तिः गुणक्रियादिवर्त्तनं यथावत्स्वरूपञ्च इत्यर्थः, यत्र वैचित्र्येण, अन्यथा अन्यप्रकारेण, अप्रस्तुतस्वरूपत्वेन इति यावत, उत्प्रेक्ष्यते साम्यप्रतियोगिना सह सम्भावनाविषयीक्रियते, तामुत्प्रेक्षां विदुः तादृशवैचित्र्यरूपां सम्भावनामुत्प्रेक्षां जानन्ति इत्यर्थः। (उत् उत्कटा, प्र प्रकृष्टस्य उपमानस्य, ईक्षा ज्ञानं यत्र सा उत्प्रेक्षा इति उत्प्रेक्षापदस्य व्युत्पत्त्याऽपि सम्भावनम् इत्यर्थ एव लभ्यते, सम्भावनञ्च साधारणधर्मदर्शननिमित्तकं प्रकृतविशेष्यकं तादात्म्यसंसर्गात्मकमप्रकृतप्रकारकं निश्चयानात्मकं ज्ञानम्, इत्थञ्च उपमेये उत्कटोपमानकोटिकः संशय उत्प्रेक्षेति लक्षणम्। संशये हि विषयद्वयस्य समकक्षत्वम्, इह तु न तथा इत्यनयोर्भेदः। उपमायामुपमानत्वमुपमेयत्वञ्च तत्त्वेन लोकप्रसिद्धम्, इह तु उपमानताऽवच्छेदकविशिष्टमुपमानमप्रसिद्धमिति द्वयोर्भेदः। तदुक्तं चक्रवर्त्तिना—"यदाऽयमुपमानांशो लोकतः सिद्धिमृच्छति। तदोपमेव येनेव-शब्दः सादृश्यवाचकः॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः। तदोत्प्रेक्षैव येनेव-शब्दः सम्भावनापरः॥" इति। एतेन प्रस्तुतवस्तुनोऽप्रस्तुतरूपत्वेन सम्भावनमुत्प्रेक्षेति सर्वालङ्कारिकानुमोदितः पन्थाः। उक्तञ्च प्रकाशकारेण—"सम्भावनमथोत्प्रेक्षा" इति। तच्च प्रस्तुतस्य निगरणेन भवति, निगरणञ्च क्वचित् प्रस्तुतस्य अनुपादानं क्वचिदुपात्तस्यापि अधःकरणम्। यथा—"विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः। अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते॥" इति। दर्पणकारस्तु—"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा" इति लक्षणं कृत्वा जातिक्रियागुणद्रव्यगततया चास्या विविधभेदानाह। "यत्र" इत्यत्र "यत्तु" इति पाठे—क्रिया-

मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः।
मन्ये मार्त्तण्डगृह्याणि पद्मान्युद्धर्त्तुमुद्यतः ॥२२२॥
स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम्।
तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ॥२२३॥
कर्णस्य भूषणमिदं ममायतिविरोधिनः।
इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते ॥२२४॥

विशेषणम्; यत् उत्प्रेक्षणमित्यर्थः, भावसाधनोऽयं प्रयोगः इत्यभिप्रायः) ॥ २२१ ॥

चेतनागतामुत्प्रेक्षामुदाहरति, मध्यन्दिनेति।—मध्यन्दिनार्केण मध्याह्नसूर्य्येण, सन्तप्तः गजः सरसीं गाहते अवतरति। अत्रोत्प्रेक्ष्यते, मन्ये इति।—मार्त्तण्डगृह्याणि सूर्य्यपक्षान्, पद्मानि उद्धर्त्तुम् उन्मूलयितुम्, उद्यतः इति मन्ये सम्भावयामीत्यर्थः। (अत्र सन्तप्तस्य चेतनस्य गजस्य स्नानपानाद्यर्थकतया स्थितं सरोऽवगाहनं सूर्य्यपक्षपद्मोद्धरणार्थत्वेनोत्प्रेक्षितम्। मन्ये इति पदमुत्प्रेक्षाव्यञ्जकम्। केचित्तु सन्तापकप्रतीकाराक्षमेण गजेन तत्पक्षस्योद्धरणात् अत्र प्रत्यनीकालङ्कारस्य; तदुक्तं— "प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि। तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः॥" इति, तदनयोः सङ्कर इति उक्तं, तन्न मनोरमं, तत्पक्षोद्धरणस्य सम्भावनामात्रविषयत्वेन अतात्त्विकत्वात्, तदुत्कर्षसाधकत्वाविवक्षणाच्च) ॥ २२२ ॥

लक्षणं घटयति, स्नातुमिति।—करिणः स्नातुं पातुं बिसानि च अत्तुं भक्षयितुं, जलगाहनं कविना तस्य वैरनिष्क्रयाय इति उक्तरूपम्, उत्प्रेक्ष्य सम्भाव्य, वर्ण्यते ॥ २२३ ॥

अचेतनगतामुत्प्रेक्षामुदाहरति, कर्णस्येत्यादि।—इदं

अपाङ्ग-भागपातिन्या दृष्टेरंशुभिरुत्पलम् ।
स्पृश्यते वा न वेत्येवं कविनोत्प्रेक्ष्य वर्ण्यते ॥२२५॥

कर्णोत्पलं मम आयतिः दैर्घ्यं, तस्य विरोधिनः बाधकस्य, कर्णस्य भूषणम् इति अस्माद्धेतोः, तव दृष्ट्या विलङ्घ्यते प्रायः निजांशुभिः ताड्यते इव, प्राय इति उत्प्रेक्षाव्यञ्जकम् ॥ २२४ ॥

लक्षणं सङ्गमयति, अपाङ्गेति ।—अपाङ्गभागपातिन्याः आकर्णायतायाः, दृष्टेः अंशुभिः उत्पलं कर्णोत्पलं, स्पृश्यते वा न वा न स्पृश्यते इत्यर्थः, इत्येवम् असन्नपि विषयश्चमत्कारजनकत्वेन, कविना उत्प्रेक्ष्य सम्भाव्य, वर्ण्यते । ( अत्र अचेतनस्य प्रस्तुतस्य विषयस्य उत्प्रेक्षणादचेतनगतत्वं, पूर्वत्र विषयस्य चेतनत्वेन चेतनगतत्वम् इति भेदद्वयं बोध्यम् । नवीनैरुक्ता गुणक्रियादिभेदाश्च सम्भवन्ति, तथा हि, मध्यन्दिनेत्यादिप्रागुक्तोदाहरणे अवगाहनक्रियायाः सूर्य्यपक्षीयपङ्कोद्धरणत्वेनोत्प्रेक्षणात् क्रियागतोत्प्रेक्षा, इह तु स्पर्शाख्यगुणस्य कर्णोत्पलोत्सारणत्वेन इति गुणगतत्वम् । द्रव्योत्प्रेक्षाया उदाहरणं यथा—"पातालमेतन्नयनोत्सवेन विलोक्य शून्यं मृगलाञ्छनेन । इहाङ्गनाभिः स्वमुखच्छलेन कृताऽम्बरे चन्द्रमयीव सृष्टिः ॥" अत्र हि एकवस्तुवाचिनः द्रव्यस्य चन्द्रस्य स्वरूपेणोत्प्रेक्षणम् इति द्रव्यगतत्वम् । जात्युत्प्रेक्षाया उदाहरणं यथा—"ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति । सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥" इति । अत्र विजयस्तम्भस्य बहुवाचकत्वात् जात्युत्प्रेक्षा । तथा उत्प्रेक्षाद्योतकेवादिप्रयोगाभावेऽपि क्वचित् प्रतीयमानोत्प्रेक्षा भवतीत्युक्तं दर्पणकारेण, उदाहृतञ्च तेनैव यथा—"तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् । हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥" इति ।

उत्प्रेक्षोपमयोर्भेदविचारः।—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥२२६॥
केषाञ्चिदुपमाभ्रान्तिरिवश्रुत्येह जायते।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥२२७॥

---

अत्र स्तनयोरचेतनत्वेन लज्जाया असम्भवात् लज्जयेव इत्युत्प्रेक्षा )॥ २२५॥

लिम्पतीति।—श्लोकार्द्धमिदम्, "असत्पुरुषसेवेव दृष्टिर्विफलतां गता" इत्यपरार्द्धं मृच्छकटिके वर्षावर्णनप्रकरणोक्तम्। तमः अन्धकारम्, अङ्गानि शरीराणि, लिम्पतीव, नभः आकाशम्, अञ्जनं वर्षतीव। इतीदमपि पद्यार्द्धं, भूयिष्ठं सम्यक्, उत्प्रेक्षाया लक्षणेन अन्वितं युक्तम्। ( अत्र अचेतनस्य तमसः व्यापनरूपो धर्मः लेपनत्वेन, तथा तादृशस्य तमसः सम्पातरूपो धर्मो नभःकर्तृकाञ्जनवर्षणरूपत्वेन सम्भावित इति उभयत्रैव विषयस्यानुपादानम् )॥ २२६॥

मन्ये शङ्के इत्यादिपदप्रयोगे एवोत्प्रेक्षा, इवप्रयोगे तूपमैवेति केषाञ्चिन्मतं दूषयति, केषाञ्चिदिति।—इह लिम्पतीति पद्ये, इवश्रुत्या इवशब्दप्रयोगेण, तिङन्तेन उपमानं न इति आप्तानां प्रामाणिकानां सुधियां, भाषितं वचनम्, अतिक्रम्य अनादृत्य, केषाञ्चित् अज्ञानामित्यर्थः, उपमाभ्रान्तिः उपमालङ्कार एव अत्रेति भ्रमः, जायते इत्यन्वयः। (अय भावः,—भाष्यकारादयः हि प्रामाणिकाः, ते च "अश्मा लुलुठिषते" "कूलं पिपतिषति" इत्यादौ अचेतनस्य पाषाणादेरिच्छाया असम्भवात् कथं सन्प्रत्यय इति विचारे लुलुठिषते इव लुलुठिषते इत्येवं स्यादित्या-

उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया ।
लिम्पतेस्तमसश्चासौ धर्मः कोऽत्र समीक्ष्यते ? ॥२२८॥

शङ्काब्रुवन्—"न वै तिङन्तेनोपमानमस्ति" इति । व्याख्यातञ्च कैयटेन—"तिङन्तेनेति तिङन्तार्थेनेत्यर्थः ।" तिङन्तपदोपस्थाप्यायाः क्रियायाः साध्यरूपत्वादिति भावः, उक्तञ्च भट्टैः,—"यादृशी भावनाऽऽख्याते धात्वर्थस्यापि यादृशः । नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः सह ॥" इति । क्रिया च फलानुकूलव्यापारसमूहः ; तदाह—"गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदेशभाक् ॥" इति । ननु तथाऽपि कथं क्रियाया नोपमानत्वमिति चेत्, प्रसिद्धेन वस्तुना न्यूनस्योपमा भवति, क्रियायाः न च सिद्धत्वमिति दर्शितमेव, तेन च क्रिया नोपमानं भवितुमर्हति, तस्याः साध्यत्वात् ; उक्तञ्च—"सिद्धमेव समानार्थमुपमानं विधीयते । तिङन्तार्थस्तु साध्यत्वादुपमानं न जायते ॥" इति । अत्र तु प्रस्तुतस्यापि व्यापनस्य शब्दोपात्तत्वाभावात् तमस एव उपमेयत्वस्य वक्तव्यतया तस्य लिम्पतीति तिङन्तार्थस्योपमानत्वं न युक्तम् ; किञ्च, क्रियाया उपमेयत्वमपि नैव, यतः सा क्रियान्तरापेक्षया न्यूनत्वविरहविशिष्टैव ; तदुक्तं भर्त्तृहरिणा—"येनैव हेतुना हंसः पततीत्यभिधीयते । आतौ तस्य समानत्वादुपमार्थो न विद्यते ॥" इति । ननु भिन्नजातीयानां तदस्त्विति नाशङ्कनीयम् ; तथा च उक्तं—"भिन्नजातीयानाञ्च क्रियाणां सादृश्यं नास्ति भुङ्क्ते इव गच्छति" इति । तस्माच्छाब्दकाराद्युक्तिविरोधात् तिङन्तस्योपमानोपमेयभावो न युक्तः इति दण्डिनोऽभिप्रायः ) ॥ २२७ ॥

उपमाशङ्कानिराशाय युक्तिमपि दर्शयति, उपमानोपमेय-

यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः ? ।
स एव धर्मो धर्मी चेत्युन्मत्तोऽपि न भाषते ॥२

त्वमिति।—तुल्यधर्मस्य समानगुणादिरूपसाधारणधर्म व्यपेक्षया सापेक्षतया, उपमानोपमेयत्वं भवतीति ये तदुभयगतधर्माभावात कथमुपमा।...राशङ्केति भाव:। धर्माभावं दर्शयति, लिम्पतेरिति।—अत्र लिम्पतेः लिम्पते तिङन्तार्थस्य पदस्य, (नामत्वानुकरणात् षष्ठीति बोध्य तमसश्च असौ धर्मः साधारण इत्यर्थः, कः समोच्यते ? लक्ष्य न कोऽपीत्यर्थः, तस्मात् लिम्पत्यर्थतमसोः साधर्म्याभाव नोपमाशङ्केति भावः ॥ २२८ ॥

ननु तमसोऽपि आवरकतया गौणलेपनवत्त्वात् लेपनं साधारणधर्मो भवतु इत्याशङ्कां निराकर्त्तुमाह, यदीति।— यदि लेपनमेव इष्टं साधारणधर्मतया अभिलषितं, त लिम्पतिः नाम अपरः साधारणधर्मवान् उपमानरूपो धर्मीत्य कः ? न कोऽपीत्यर्थः ; यद्वा—यदि लेपनं धात्वर्थ एव, इष्ट उपमानत्वेन स्वीकृतं, तदा लिम्पतिर्नाम साधारणधर्मभू अपरः कः ? इत्यर्थः, वैयाकरणैर्व्यापारस्यैव विशेष्यतया तिङन्त पदप्रतिपाद्यत्वेनोक्तत्वात् ; (तदुक्तं—"फलव्यापारयोर्धातुराश्र तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ इति। तथा च, लेपनस्यैव धर्मित्वं न तु धर्मत्वमिति व्यक्त क्तम्। लिम्पतिरित्यत्र अनुकरणे प्रथमेति बोध्यम्) न भेदाभेदवादिनो भेदविरहेऽपि धर्मधर्मिभावमङ्गीकुर्वन्ति तस्मात् एकस्यैव लेपनस्य धर्मित्वं धर्मत्वञ्चास्तु इत्याशङ्क्या स एवेति।—स एव लिम्पतिरेव, धर्मो धर्मी चेति उन्मत्तोऽ वातूलोऽपि, न भाषते, धर्मधर्मिभावस्य भेदनियतत्वात् उपमा

**कर्त्ता यद्युपमानं स्यात् न्यग्भूतोऽसौ क्रियापदे।**
**स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम् ॥२३०॥**

नापि एकस्य धर्मित्वं धर्मत्वं नोच्यते. का कथा सुधियामिति भावः। (अयमभिप्रायः,—भेदाभेदवादिनः भेदविरहेऽपि यत् धर्मधर्मिभावमङ्गीकुर्वन्ति तत्तु भिन्नप्रकारोपस्थितावेव, नीलो घट इत्यादिवत् भेदमादाय न पौनरुक्त्यम्, अभेदमादाय सामानाधिकरण्यमिति तत्सिद्धान्तात्। अत एव कार्य्यादिस्थलेऽप्यन्यप्रकारेणैव भेदाभ्युपगमः; तदुक्तं भामत्यां—"कार्य्यरूपेण नानात्वमभेदः कारणात्मना। हाटकाद्यात्मनाऽभेदः कुण्डलाद्यात्मना भिदा॥" इति। तस्मात् सर्वमतेऽपि एकस्यैव लेपनस्य धर्मधर्मिभावो न युक्त इति बोध्यम्)॥ २२९॥

उपमानाभावस्यैवोपमाबाधकत्वात् किमत्रोपमानमित्यपेक्षायां कर्त्तुरुपमानत्वं निराकरोति, कर्त्तेति।—यदि कर्त्ता तिङा प्रतिपाद्यः लेपनरूपव्यापाराश्रयः, उपमानं स्यात् तमस उपमानत्वेन मन्येत, तदा तदपि न सङ्गतम् इति शेषः, यतः असौ कर्त्ता, क्रियापदे व्यापाररूपे, न्यग्भूतः गौणीभूतः, विशेषणत्वमापन्नः इति यावत्, (तिङर्थस्य विशेषणत्वं पूर्वमुक्तम्। वैयाकरणमते आख्यातार्थस्य कर्त्तुर्धात्वर्थे विशेषणीभूतत्वेन तस्य सादृश्ये स्वप्रतियोगिकत्वसम्बन्धेनान्वयो न भवितुमर्हतीति भावः) नन्वेकत्रान्वयबोधेऽप्यपरेणापि समन्वयः कथं न भवतीत्याह, स्वक्रियेति।—स्वक्रियायाः स्वविशेष्यभूतलेपनरूपायाः भावनायाः, साधने अन्वयेन चरितार्थतासम्पादने, व्यग्रः व्यापृतः, स्वविशेष्यभूतक्रियान्वयेन चरितार्थतयाऽन्यत्रान्वयानाकाङ्क्ष इत्यर्थः, एकत्र जनितान्वयबोधत्वेन निराकाङ्क्षत्वादिति भावः, असौ कर्त्तेति शेषः, अन्यत् सादृश्यादिपदार्थम्, अपेक्षितुं

यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः ।
अङ्गानीति न सम्बद्धं सोऽपि मृग्यः समो गुणः ॥२३

साधयितुं, स्वप्रकारान्वयबोधे विशेष्यतामापादयितुमित्यर्थः, अलं न समर्थः । ( अयं भावः,—"यद्यपि एकत्रान्वितस्या वान्वयो निराकाङ्क्षतया न युक्तः, तथाऽपि कुत्रचित्तदङ्गीका दिहापि तथा स्यात् इति च न वाच्यम्, एकत्र विशेषण नान्वितस्यान्यत्रापि विशेषणत्वेनान्वयस्य सर्वत्रैवायुक्तत्वा इहापि स्वविशेष्यकक्रियायां विशेषणतया अन्वितस्य क उपमेये तमस्यपि तथात्वेनान्वयो न युज्यत एव, उक्तञ्च दीधि कारेण—"इतरविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्व योगात्" इति। अतो नात्र कर्त्तुरुपमानत्वं सङ्गच्छते इति) ॥२

वैयाकरणमते कर्त्तृविशेषणत्वेनोपसर्जनतया यद्यपि उ मानत्वं न सम्भवति, तथाऽपि प्रथमान्तमुख्यविशेष्यकान्व बोधमङ्गीकुर्वाणानां नैयायिकानां मते तु कर्त्तुरेवोपमान स्यादित्याशङ्क्याह, य इति ।—यो लिम्पति लेपनकर्त्ता इत्यर्थ तमः अमुना तुल्यं लेपनकर्त्रा सदृशम्, अत्र यदद:शब्द प्रयोग उपमानोपमेयत्वभावसूचनाय, लेपनकर्त्तेव त इत्यर्थः, इत्यपि शंसतः कथयतः, वादिनः मते इति शे अङ्गानि इति कर्मपदं, न सम्बद्धं न सङ्गतम्, उपमेयतमःकर्त्तृ तदन्वययोग्यक्रियान्तराभावात् उपमेयांशे अनन्वयाच्चेति । न अङ्गकर्मकलेपनकर्त्तृसदृशं तम इत्येवं शाब्दबोधे का क्षति रिति चेत् तत्राह. स इति ।—सोऽपि उपमानमात्रान्विता रूपो गुणोऽपि, समः साधारणधर्मतया, मृग्यः अन्वेष्टव्यः, अव वाच्य इत्यर्थः, तदप्रयोगे साधर्म्याप्रतीतेः उपमाया असम्भव दिति भावः ॥ २११ ॥

यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते।
न तथा लिम्पतौ लेपादन्यदत्र प्रतीयते॥ २३२॥
तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्त्तृकः।
अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम्॥२३३॥

ननु साधारणधर्माप्रयोगे लुप्तोपमाऽपि भवतीति चेत् तत्राह, यथेति।—ते वक्त्रम् इन्दुरिव इत्यत्र यथा कान्तिः सौन्दर्य्यं प्रतीयते साधारणधर्मतया विज्ञायते, अत्र लिम्पतौ लेपात् अन्यत् किमपि साधारणधर्मरूपं, तथा तद्वत्, न प्रतीयते। ( तथा च, साधारणधर्माप्रयोगेऽपि यत्र सादृश्यस्य प्रसिद्धतया साधारणधर्मस्य स्फुटत्वं तत्रैव लुप्तोपमा, अत्र तु तमसः लेपनकर्त्तृत्व न तथात्वमिति साधारणधर्माप्रतीतेरत्रोपमासङ्क्षे काचित् विप्रतिपत्तिरिति भावः )॥ २३२॥

उपसंहरति, तदिति।—तत् तस्मात्, उपश्लेषणं व्यापनमेव, अर्थः उत्प्रेक्षाया विषयः यस्य तथाभूतः, ध्वान्तकर्त्तृकः तमःकर्त्तृकः, तथा अङ्गकर्मा च अयं लिम्पतिः लेपनक्रिया, पुंसा कविनिबन्धनकर्त्रा, एवं प्रस्तुततमोव्यापनस्याप्रस्तुतसादृश्यलेपनत्वेन, उत्प्रेक्ष्यते सम्भाव्यते, इति इष्यताम् इष्टत्वेन गृह्यताम्। ( तथा च, प्राकरणिकोऽर्थः उत्प्रेक्षाया विषयः, सम्भाव्यमानाप्रस्तुतार्थस्तस्या विषयीति नियमः, अत्र हि तमःकर्त्तृकाङ्गव्यापनम् उत्प्रेक्षाया विषयः, लेपनञ्च विषयि, ततश्च प्रस्तुतस्तमोव्यापनरूपो विषयः अप्रस्तुतसादृश्यलेपनरूपविषयित्वेन उत्प्रेक्ष्यते, न तूपमानभूतेन तेन उपमीयते, ततश्च इवार्थोऽत्र सम्भावनैव, न तु सादृश्यमिति सिद्धम्। तदयं निष्कर्षः।— "लिम्पतीव तमः" इत्यत्र धातोर्लेपनक्रियायां शक्तिः अश्वोदेशव्यापने लक्षणा, आख्यातार्थो लक्षणया विषयत्वं सम्भावन-

उत्प्रेक्षाव्यञ्जकशब्दाः ।—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥२३४॥

इति उत्प्रेक्षाचक्रम् । *

हेतुः ।—

हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।
कारकज्ञापकौ हेतू तौ चानेकविधौ यथा ॥२३५॥

मिवार्थः; तथा च तमःकर्तृकाधोदेशव्यापनम् अङ्गलेपनप्रकारकसम्भावनाविषयः इति शाब्दबोधः । यद्वा—लेपनप्रकारकसम्भावनाविषयाधोदेशव्यापनाश्रयस्तमः इति बोधः । प्रथमबोधे इवार्थसम्भावनाया विशेष्यतया आख्यातार्थे तमसश्च कर्तृसम्बन्धेन धातुलभ्याधोदेशव्यापने धातुशक्यलेपनस्य प्रकारतासम्बन्धेन सम्भावनायामन्वयः । द्वितीयबोधे तु शक्यलेपनस्य प्रकारतया सम्भावनाया, तस्या निरूपितत्वेन सम्बन्धेन विषयत्वे, तस्य लभ्ये अधोदेशव्यापने, तस्याश्रयतया तमसि अन्वयः इति विशेषः इति विभाव्यम् ) ॥ २१२ ॥

इवशब्दस्य उत्प्रेक्षाया व्यञ्जकत्वमाह, मन्ये इति ।—मन्ये इत्यादिभिः शब्दैः उत्प्रेक्षा व्यज्यते, इवशब्दोऽपि तादृशः उत्प्रेक्षाव्यञ्जकः इत्यर्थः । ( अत्रेवशब्दोपादानमपि यत्रोपमा न सम्भवति तत्रोत्प्रेक्षात्वमित्यभिप्रायेण, न त्वाख्यातसमभिव्याहृतवादिस्थले उत्प्रेक्षैवेति नियमाभिप्रायेणेति बोध्यम्) ॥२३४॥

हेतुसूक्ष्मलवानामलङ्कारत्वं नासिद्धमिति सूचयन् हेत्वलङ्कारमाह, हेतुरिति ।—हेतुः, सूक्ष्मः, तथा लेशः लव इत्युद्देशवाक्येनाक्तः, एते त्रयः वाचाम् उत्तमभूषणम् उत्कृष्टाल-

* इति उक्तरूपम्, उत्प्रेक्षायाः उत्प्रेक्षाप्रकारश्च, भावसमूहः ।

ङ्काराः। (एतेषामलङ्कारत्वमनङ्गीकुर्वतो भामहादीन् प्रति कटाक्षोक्तिरियम्। येषामलङ्कारत्वं न सिद्धं तेषामुत्तमालङ्कारत्वमेवास्माभिरिष्यते न त्वलङ्कारमात्रत्वमित्युत्तमशब्देन सूच्यते। एषामनलङ्कारत्वमुक्तं यथा—"हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मताः। समुदायाभिधेयस्य वक्रोक्त्यनभिधानतः॥" इति। ते च निर्हेतुताया दोषत्वकथनादवश्यवक्तव्येषु हेतुहेतुमद्वाक्यार्थेषु नालङ्कारत्वमिच्छन्ति, तथा वैचित्र्याभावात् सूक्ष्मस्य अपह्नुत्यलङ्कारेणैकविषयस्य लवस्यापि अलङ्कारत्वं नाङ्गीकुर्वन्ति। नैतदाचार्य्यादीनामभिमतमित्यभिप्रायः) हेत्वलङ्कारलक्षणमतिप्रसिद्धतया नाभिधाय प्रथमं तद्भेदानेव दर्शयति, कारकेत्यादि।—तत्र हेतू द्विविधौ कारकः ज्ञापकश्च। (हेतुत्वञ्च सिषाधयिषितार्थसाधकत्वम्। उक्तञ्च—"सिषाधयिषितार्थस्य हेतुर्भवति साधकः। कारको ज्ञापक इति द्विधा सोऽप्युपजायते॥ प्रवर्त्तते कारकाख्यः प्राक् पश्चात् कार्य्यजन्मतः। पूर्वः शेष इति ख्यातस्तयोरेव विशिष्यता॥ कार्य्यकारणभावात् वा स्वभावात् वा नियामकात्। अविनाभावनियमाद्विनाभावदर्शनात्॥ ज्ञापकस्य च भेदोक्तिर्वैद्या पूर्वोक्तिदर्शनात्॥" इति। तत्र सिषाधयिषतः क्रियारूपार्थसाधकः कारकः वस्तुज्ञानरूपार्थसाधकश्च ज्ञापको हेतुरिति लक्षणमवधेयम्। तयोर्लक्षणमुक्तं भोजराजेन—"यः प्रवृत्तिं निवृत्तिञ्च प्रयुक्तिञ्चान्तराविशन्। उदासीनोऽपि वा कुर्य्यात् कारकं तं प्रचक्षते॥ द्वितीया च तृतीया च चतुर्थी सप्तमी च यम्। क्रियानाविष्टमाचष्टे लक्षणं ज्ञापकश्च सः॥" इति। एवञ्च साधयितुमभिप्रेतार्थस्य कारकज्ञापकान्यतमेन साधने वैचित्र्यप्रतीतिः हेत्वलङ्कार इति लक्षणम्) तौ च कारकज्ञापकौ, अनेकविधौ बहुप्रकारौ, उदाहरणेषु ज्ञातव्यौ इति शेषः। (अस्मिंश्च हेत्वलङ्कारे मता-

कारकहेतुभेदः ।—

अयमान्दोलितप्रौढ़-चन्दनद्रुमपल्लवः ।
उत्पादयति सर्व्वस्य प्रीतिं मलयमारुतः ॥ २३६ ॥
प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम् ।
अलङ्कारतयोद्दिष्टं निवृत्तावपि तत्समम् ॥ २३७ ॥

---

मतोक्तस्य काव्यलिङ्गस्य कार्य्यकारणभावोक्तार्थान्तरन्यासस्य तथा अनुमानस्य च अन्तर्भावात् न पृथगुक्तिरिति बोध्यम् । दर्पणकारस्तु—"अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह" इति लक्षणमाह । स च हेतुहेतुमतोरभेदोक्तिरूपो हेतुरस्मिन् मते अतिशयोक्तिरेवेति ध्येयम् ) ॥ २३५ ॥

कारकहेतुमुदाहरन्नाह, अयमित्यादि ।—आन्दोलिताः आधूताः, प्रौढ़ाः परिणताः, ऋतुराजस्य वसन्तस्य परिणामेनेति भावः, चन्दनद्रुमस्य पल्लवा येन तादृशः, अयं मलयमारुतः सर्व्वस्य प्रीतिम् उत्पादयति । ( अत्र मलयमारुतस्य प्रीत्युत्पादनक्रियायाः कारकत्वम् आन्दोलितत्यादिविशेषणेन मान्द्यसौगन्ध्यशैत्यादिप्रतिपादनात् समधिकं वैचित्र्यमावहति सहृदयानामिति हेत्वलङ्कारः ) लक्षणं सङ्गमयति, प्रीत्युत्पादनेति ।—प्रीत्युत्पादनयोग्यस्य आनन्दजननसमर्थस्य, रूपस्य प्रोक्तविशेषणविशिष्टस्य कर्त्तुरित्यर्थः, अत्र उक्तोदाहरणे, उपबृंहणं वैचित्र्यजनकतया कीर्त्तनम्, अलङ्कारतया उद्दिष्टं हेत्वलङ्कारत्वेन निर्दिष्टं, वैचित्र्यस्य प्रतीतेरिति भावः, ( इत्यञ्च वैचित्र्याभावे नायमलङ्कार इत्यायातम् ) तत् उपबृंहणं, निवृत्तावपि निषेधेऽपि, समं प्रवृत्तितुल्यम् । ( क्रियायाः प्रवृत्तौ उक्तोदाहरणमेव । निवृत्तौ यथा—"मुग्धे ! तव मुखामोदलोलुपो मधुपो भ्रमन् । कर्णिकाकमलं फुल्लमपि नाभिसर्…

चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान्।
पथिकानामभावाय पवनोऽयमुपस्थितः॥ २३८॥
अभावसाधनायालमेवम्भूतो हि मारुतः।
विरहज्वरसम्भूत-मदनाग्न्यातुरे जने॥ २३९॥

त्ययम्॥" इति। अत्र अभिसरणक्रियाया निषेधः)॥ २३६॥

॥ २३७॥

पूर्वं भावसाधने उदाहरणं दर्शयित्वा इदानीम् अभाव-साधनाय उदाहरति, चन्दनेति।—अयं पवनः चन्दनारण्यं चन्दनवनम्, आधूय कम्पयित्वा, तथा मलयनिर्झरान् स्पृष्ट्वा पथिकानाम् अभावाय नाशाय, उपस्थितः, तादृशस्य पवनस्य विरहिणामतीव दुःसहत्वादिति भावः॥ २३८॥

अभावेति।—एवम्भूतः उक्तगुणसमन्वितः, मारुतः हि निश्चयेन, विरहज्वरेण सम्भूतः यः मदनाग्निः तेन आतुरे जने (अत्र षष्ठ्यर्थे सप्तमी) तादृशस्य जनस्य इत्यर्थः, अभावसाधनाय अलं समर्थः। ("क्रियायाः साधको हेतुः" इत्युक्तलक्षणस्य कारक-हेतोरुदाहरणं दर्शयित्वा अभावस्यापि तद्विशिष्टक्रियाबोधकत्वेन साध्यत्वं दर्शयितुम् इदमुदाहरणान्तरम्, अभावस्य क्रियात्वा-भावेऽपि साध्यत्वसम्भवात् अत्र नानुपपत्तिरिति बोध्यम्; तथा हि अभावाय इत्यत्र उपस्थित इति क्रियाया अध्याहारात् निमित्ततया अभावविशिष्टाया उपस्थितिक्रियाया एव साध्यत्वं, क्रियारहितस्य वाक्यत्वाभावादेव यत्र क्रियापदं नास्ति तत्र तदध्याहर्त्तव्यमेव। उक्तञ्च—"यत्रान्यत् क्रियापदं न श्रूयते तत्र अस्तिर्भवतीत्यपरः प्रयोक्तव्यः" इति। ततश्च एवं-भूतस्य पवनस्य पथिकविनाशसाधनक्रियायां कर्त्तृत्वेना-वेशात् कारकहेतुभेदः)॥ २३९॥

निर्वर्त्त्ये च विकार्य्ये च हेतुत्वं तदपेक्षया।
प्राप्ये तु कर्मणि प्रायः क्रियापेक्षैव हेतुता ॥२४०॥
हेतुर्निर्वर्त्तनीयस्य दर्शितः शेषयोर्द्वयोः।
दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते ॥ २४१ ॥

क्रियापेक्षया हेतुत्वम् उदाहृतं, सम्प्रति कर्मापेक्षयाऽपि सम्भवति इति दर्शयितुमाह, निर्वर्त्त्ये चेति।—निर्वर्त्त्ये च विकार्य्ये च कर्मणि, तदपेक्षया हेतुत्वं तत्तत्कर्मापेक्षो हेतुरित्यर्थः, प्राप्ये तु कर्मणि प्रायः बाहुल्येन, हेतुता क्रियापेक्षैव क्रियाया अपेक्षा यत्र सा तथाभूतैव, क्रियापेक्षो हेतुरित्यर्थः। (तत्र निर्वर्त्त्यं पूर्वमसदेव क्रियया जन्यम अथवा पूर्वं सदेव क्रियया प्रकाश्यमानमिति द्विविधम्। यथा—कटं करोति, पुत्रं प्रसूते इत्यादि। विकार्य्यं यत् सदेव वस्तु क्रियया पूर्वरूपस्योच्छेदेनानुच्छेदेन वा रूपान्तरमापाद्यमानम। यथा—काष्ठं दहति, सुवर्णं कुण्डलं करोति इत्यादि। उक्तञ्च—"यदसज्जायते पूर्वं जन्मना यत् प्रकाशते। तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। किञ्चित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥" इति। प्राप्यन्तु कर्त्तुः क्रियया यत्र व्याप्तिमात्रं प्रतीयते तत्, न तु विकृत्यादिगुणान्तरितमित्यवधेयम्। तदुक्तं—"क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते ॥" इति। जौमरास्तु अनीप्सितमपि कर्मेच्छन्ति। यथा—दुःसंसर्गं परिहरतीत्यादि। अत्रापि क्रियापेक्षो हेतुरिति बोध्यम) ॥ २४० ॥

हेतुरिति।—निर्वर्त्तनीयस्य कर्मणः, हेतुः दर्शितः, आन्दोलितेत्याद्युदाहरणे इति शेषः, शेषयोः उक्तावशिष्टयोः,

उत्प्रबालान्यरण्यानि वाप्यः सम्फुल्लपङ्कजाः।
चन्द्रः पूर्णश्च कामेन पान्थदृष्टेर्विषं कृतम् ॥२४२॥
मानयोग्यां करोमीति प्रियस्थानस्थितां सखीम्।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥२४३॥

द्वयोः विकार्य्यप्राप्ययोरित्यर्थः, उदाहरणद्वयं दत्त्वा दर्शयित्वा, ज्ञापको हेतुः वर्णयिष्यते। (प्रतिज्ञेयं ग्रिष्याणामुत्कण्ठावारणा-येति बोध्यम)॥ २४१॥

विकार्य्यकर्महेतुं दर्शयति, उत्प्रबालानीति।—उत्प्रबालानि उद्गतपल्लवानि, अरण्यानि, सम्फुल्लानि पङ्कजानि यासु तादृश्यः, वाप्यः दीर्घिकाः, तथा पूर्णः चन्द्रश्च, कामेन मदनेन, पान्थदृष्टेः पथिकनयनस्य, विषं कृतं विषीभावरूपविकारं नीतम्, उक्तानामेव त्रयाणामतीवोद्दीपकतया सन्तापकत्वादिति भावः। (अत्र प्रकृतिभूतम् उक्तत्रयं विषीभावरूपं विकारमापादितमिति प्रकृतिविकृतिभावरूपस्यारोपस्य वैचित्र्यजनकत्वेन हेत्वलङ्कारत्वम्, अनेवंविधे सुवर्णं कुण्डलं करोतीत्यादौ विकारस्य सत्यतया वैचित्र्याभावान्नालङ्कारतेति बोध्यम्)॥ २४२॥

प्राप्यहेतुं दर्शयति, मानयोग्यामिति।—बाला मुग्धा काचित्, भ्रुवोर्भङ्गेन जिह्मे अक्षिणी यस्याः सा, तथा स्फुरितः कम्पितः, अधरो यस्यास्तादृशी सती, मानयोग्यां मानाभ्यासम्, ("अभ्यासः खुरली योग्या" इत्यमरमाला) करोमीति, अभि-प्रेत्येति शेषः, प्रियस्य स्थाने सकाशे, स्थितां सखीं पश्यति निरीक्षते। (अत्र सखीमिति प्राप्यकर्म बालायास्तद्विषयक-दर्शनक्रियापेक्षया हेतुत्वात् विशेषणानां काल्पनिकत्वाच्च हेत्वलङ्कारः)॥ २४३॥

ज्ञापकहेतुभेदाः।—

गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
इतीदमपि साध्वेव कालावस्थानिवेदने॥ २४४॥
अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम्।
देहोष्मभिः सुबोधं ते सखि! कामातुरं मनः॥२४५॥
इति लक्ष्याः प्रयोगेषु रम्या ज्ञापकहेतवः।
अभावहेतवः केचित् व्याक्रियन्ते मनोहराः॥२४६॥

ज्ञापकहेतुमुदाहरति, गत इति।—अर्कः अस्तं गतः, इन्दुः भाति, पक्षिणः वासाय वासस्थानाय, यान्ति, (गमनार्थयोगे कर्मणि चतुर्थी) इति उक्तरूपम्, इदमपि गतोऽस्तमर्क इत्यादिकमपि, कालावस्थायाः कालविशेषस्य सन्ध्याया इत्यर्थः, निवेदने ज्ञापने, साधु एव वैचित्र्यजनकत्वात् उत्कृष्टोपाय इत्यर्थः। (अस्तगतदिवाकरादिः ज्ञापको हेतुः, ज्ञाप्या च सन्ध्या, अत्र तु ज्ञाप्यस्य अशब्दत्वात् प्रतीयमानत्वम्। सन्ध्या वर्त्तते इत्यादौ तु नालङ्कारता वैचित्र्याभावादिति बोध्यम्)॥२४४॥

ज्ञाप्यस्य शाब्दत्वे उदाहरति, अवध्यैरिति।—हे सखि! ते तव, कामातुरं विरहाकुलं, मनः इन्दुपादानां चन्द्रकिरणानाम्, अवध्यैः अनाश्यैः, तथा चन्दनाम्भसां चन्दनाक्तजलानाम्, असाध्यैः अप्रतिकार्य्यैः, देहस्य ऊष्मभिः सन्तापैः, सुबोधं सुखेन ज्ञेयम्। (अत्र मनसः कामातुरत्वं ज्ञाप्यं, तच्च शाब्दं, देहतापाश्च ज्ञापकाः, तेषाञ्च चन्द्रकिरणचन्दनरसानपनेयत्वात् आतपजन्यत्वादिव्यावर्त्तनेन विरहस्यासाधारणप्रतिपादनात् वैचित्र्यं, वैचित्र्यस्यैव च अलङ्कारत्वम्)॥ २४५॥

इतीति।—इति एवंरूपाः, ज्ञापकहेतवः रम्याः हृद्याः

चमत्कारकाः, प्रयोगेषु कवीनां निबन्धेषु, लक्ष्याः ज्ञातव्याः। [ द्वितीया-तृतीया-चतुर्थी-सप्तमीघटितलक्षणत्वेन भेदाश्चात्र न दर्शिताः। तदुक्तं भोजराजेन—"द्वितीया च तृतीया च चतुर्थी सप्तमी च यम्। क्रियानाविष्टमाचष्टे लक्षणं ज्ञापकश्च यः॥" इति। इह पञ्चैव लक्षणे विभक्तयो विहिताः; तद्यथा—"अनुर्लक्षणे" (१।४।८४ पा०) "लक्षणेत्थम्भूत" (१।४।९० पा०) इत्यादिना द्वितीया, "येनाङ्गविकारः" (२।३।२० पा०) "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इत्येताभ्यां तृतीया, "उत्पातेन ज्ञापिते च" (वा०) इति चतुर्थी, "यस्य च भावेन भावलक्षणम्" (२।३।३७ पा०) इति सप्तमी, "षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी। तत्र द्वितीयाया उदाहरणं यथा—"तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः। प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः॥" अत्र इन्दुमतीमालम्बनविभावीकृत्य शृङ्गारचेष्टास्तथैव अवच्छिद्यन्ते, तदवस्था एव च लक्ष्यन्ते, ततो भवति हेतुत्वम्; सोऽयं लक्षणहेतुः प्रतिना योगे द्वितीयामुत्पादयति। तृतीयावाच्यमङ्गविकारलक्षणं यथा—"स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः। युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः॥" इति; अत्र वपुषा चतुर्भुज इत्याद्यङ्गविकारैरङ्गिनो विकृतिर्लक्ष्यते, वपुषा इत्यादौ तृतीया विभक्तिश्च अङ्गविकारलक्षणा। एवमन्यासां विभक्तीनामुदाहरणं स्वयमूहनीयम् ] मनोहराः केचित् अभावहेतवः अभावरूपाः हेतवश्च, व्याक्रियन्ते उच्यन्ते। (एतेन भोजराजोक्तचतुर्विधभेदप्रदर्शनमेवाख्याभिप्रायः। द्वैविध्यन्तु प्रधानतयोक्तम्। चतुर्विधत्वञ्च भोजेनोक्तं, यथा—"क्रियायाः कारणं हेतुः कारको ज्ञापकश्च सः। अभावश्चित्रहेतुश्च चतुर्विध

प्रागभावहेतुः ।—

अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।
अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥२

ध्वंसाभावहेतुः ।—

गतः कामकथोन्मादो गलितो यौवनज्वरः ।
गतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥२

इष्यते ॥" इति । अभावहेतवः इति बहुवचनेन प्राग ध्वंसाभावः अन्योऽन्याभावः अत्यन्ताभावश्चेति चतुर्विधा हे उदाहरिष्यन्ते इति सूचितम् ) ॥ २४६ ॥

कारकज्ञापकभेदेन हेतोर्द्वैविध्यमभिधाय 'तौ चानेकवि इत्यनेन सूचितानन्यानपि भेदान् दर्शयन् उदाहरि चतुर्विधहेतून् प्रथमं प्रागभावमाह, अनभ्यासेनेति ।—विद्या अनभ्यासेन अशिक्षया, धीमतां साधूनाम्, असंसर्गेण, न अक्षाणाम् इन्द्रियाणाम्, अनिग्रहेण असंयमेन हेतुना, नृ व्यसनं स्त्रीपानाद्यष्टादशविधदुष्प्रवृत्तिरिति यावत्, जाय ( तत्र मनुना व्यसनप्रस्तावे—"मृगयाऽक्षो दिवास्वप्नः प वादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दश गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डज पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥" इति । यावत् विद न अभ्यस्यन्ति, यावन्न धीमद्भिः संसृज्यन्ते, यावच्च अक्षाणि निगृह्णन्ति तावत् व्यसनमिति विवक्षणात् नात्यन्ताभावमङ्ग इति बोध्यम् । अत्र विद्याऽनभ्यासादेः प्रागभावस्य व्यसन कारणत्वम् इति प्रागभावरूपो हेत्वलङ्कारः । एवं ध्वंसाभाव दीनामुदाहरणान्यपि क्रमेण दर्शयिष्यन्ते ) ॥ २४७ ॥

ध्वंसाभावमुदाहरति, गत इति ।—कामकथया कामालाप

अन्योऽन्याभावहेतुः ।—

**वनान्यमूनि न गृहाण्येता नद्यो न योषितः ।**
**मृगा इमे न दायादास्तन्मे नन्दति मानसम् ॥ २४९ ॥**

अत्यन्ताभावहेतुः ।—

**अत्यन्तमसदार्य्याणामनालोचितचेष्टितम् ।**
**अतस्तेषां विवर्द्धन्ते सततं सर्वसम्पदः ॥ २५० ॥**

अवगतेन, य उन्मादः उन्मत्तता, गतः स दूरीभूतः, यौवनज्वरः गलितः, मोहः अज्ञानं, गतः, तृष्णा वासना, च्युता, अतः पुण्याश्रमे सन्न्यासाश्रमे, मनः कृतम् अर्पितम् । (अत्र कामक्रोधादीनां प्रागुत्पन्नानां नाशात् ध्वंसरूपस्याभावस्य पुण्याश्रमे मनोनिधानं प्रति हेतुत्वम्) ॥ २४८ ॥

अन्योऽन्याभावमुदाहरति, वनानीति ।—अमूनि वनानि, नानाविधाशनजातविहीनान्यपि स्वेच्छाविहरणयोग्यानीति भावः, न गृहाणि, स्वेच्छाभोगप्रतिकूलत्वेन दुःखातिशयप्रदगृहभिन्नानि इति भावः, एता नद्यः, नक्रादिक्रूरजन्तुसमाकुला अपि महौदार्य्यशालिन्यः इति भावः, न योषितः, प्रभूतवस्त्रालङ्कारलाभेनापि कुटिलैकभूमिललनाभिन्ना इत्याशयः, तथा इमे मृगाः, यत्किञ्चिदशनयत्नादिलाभेऽपि तुष्टाः सरलताऽऽधाराश्च इति भावः, न दायादाः, सर्वस्वग्रहणेनापि अपरितृप्तस्वार्थप्रवीणबान्धवभिन्ना इति भावः, तत् तस्मात्, मे मम, मानसं नन्दति । (गृहस्थाश्रमात् वानप्रस्थाश्रमं गतस्योक्तिरियम् । अत्र वनगृहादीनाम् अन्योऽन्यभेदस्य वनं गतस्य नन्दने हेतुतया निर्देशात् अन्योऽन्याभावरूपहेतुत्वम्) ॥ २४९ ॥

अत्यन्ताभावमुदाहरति, अत्यन्तमिति ।—आर्य्याणां साधूनाम्, अनालोचितचेष्टितम् अविमृश्यकारित्वम्, अत्यन्तम्

प्रागभावाभावहेतुः।—

**उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।**
**देयः पथिकनारीणां सतिलः सलिलाञ्जलिः॥२**

अतिशयम्. असत् अविद्यमानं, नास्तीत्यर्थः, विमृश्यकारित्वात्, तेषां साधूनां, सर्वसम्पदः विभूत सततं विवर्द्धन्ते निर्विघ्नेन वृद्धिं लभन्ते इत्यर्थः। (अत्र अ मृश्यकारितायाः अत्यन्ताभावः सर्वसम्पद्वृद्धौ हेतुरि अत्यन्ताभावहेतुर्नामालङ्कारः)॥ २५०॥

भावप्रतियोगिकानामभावानामुदाहरणानि दर्शयि अभावप्रतियोगिकस्याभावस्य हेतुत्वमुदाहरणेन दर्शया उद्यानेति।—उद्यानसहकाराणाम् उपवनचूतानां, मञ्जरी अनुद्भिन्ना अपि तु उद्भिन्ना, अतः पथिकनारीणां प्रोषि भर्तृकाणां, सतिलः सलिलाञ्जलिः तर्पणाञ्जलिः, देयः विधेय चूतमञ्जर्य्युद्भेदेन वसन्तकालोदयावगतेः तस्य च कामोद्दीप तया पतिविरहेण नूनमेव तादृशीनां मरणमुपस्थितं, मृतान मेव तर्पणाञ्जलिदानविधानात् इति भावः। (अत्र मञ्जरीण मुद्भेदाभावस्य अभावः पथिकरमणीमरणकारणत्वेन निर्दि इति अभावाभावस्य हेतुत्वम्। वस्तुन उत्पादः प्रागभावाभा उच्यते, ततश्च मञ्जरीणामुद्गमस्य पथिकरमणीनां मरणे हेतु त्वादयं प्रागभावाभाव इति बोध्यम्। एवं ध्वंसाभावाभावे उदा हरणं यथा—"पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्च स्तनं पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः। स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे यस्मै सोऽच्युत-नाभिपद्मवसतिर्वेधाः शिवं ध्यायति॥" इति ; अत्र अच्युतनाभि-पङ्कजनिवासिनो विधेः मनोनिर्वृतिं प्रति तन्नाभिपङ्कजानुपघात

प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः ।
भावाभावस्वरूपस्य कार्य्यस्योत्पादनं प्रति ॥२५२॥

चित्रहेतुभेदाः ।—

दूरकार्य्यस्तत्सहजः कार्य्यानन्तरजस्तथा ।
अयुक्तयुक्तकार्य्यौ चेत्यसङ्ख्याश्चित्रहेतवः ॥२५३॥

---

एव हेतुः, ततश्च वस्तुनोऽवस्थानस्यैव प्रध्वंसाभावाभावत्वादयं ध्वंसाभावाभाव इत्यवधेयम् । एवम् अन्योऽन्यात्यन्ताभावाभावौ अपि उदाहरणीयौ ) ॥ २५१ ॥

अभावस्य अभावाभावस्य च हेतुत्वेन भेदान् प्रतिपाद्य अभावहेतुमुपसंहरति, प्रागिति ।—इह एतेषु उदाहरणेषु इत्यर्थः, कार्य्यस्य उत्पादनं प्रति भावाभावस्वरूपस्य भावरूपस्य अभावरूपस्य च, प्रागभावादिरूपस्य वस्तुनः निषयस्य, हेतुत्वं, दर्शितमिति शेषः । ( तत्र भावान् प्रति हेतुत्वं दर्शितमेव, अभावं प्रति हेतुत्वन्तु प्राक् प्रदर्शिते उद्यानेत्याद्युदाहरणे ज्ञेयम् । एवमुक्तोदाहरणेषु कारकहेतुत्वमपि बोध्यम् ) ॥ २५२ ॥

कारकज्ञापकाभावरूपत्वेन हेतोस्त्रैविध्यं दर्शयित्वा अधुना चित्राख्यहेतुभेदान् निर्दिशति, दूरकार्य्य इति ।—दूरं दूरवर्त्ति, कार्य्यं यस्य सः, तत्सहजः तेन कार्य्येण सह जातः, कार्य्यं सहोत्पत्तिकतया निबद्ध इत्यर्थः, कारणशक्तिप्रकर्षात् समकालमिव कार्य्यं प्रतिभासते इति यावत्, कार्य्यानन्तरजः कार्य्यस्य अनन्तरं जातः, तथा अयुक्तम् अनुचितं, युक्तम् उचितञ्च, कार्य्यं ययोस्तौ, इति एवम्प्रकाराः, असङ्ख्याः सङ्ख्यातीताः, बहुविधा इत्यर्थः, चित्रहेतवः चित्राख्याः हेतवः । ( उक्तास्व

तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः ।
अत्यन्तसुन्दरा दृष्टास्तदुदाहृतयो यथा ॥२५४॥

दूरकार्य्यश्चित्रहेतुः ।—

त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने ! ।
मुक्तं तदन्यतस्तेन सोऽप्यहं मनसि क्षतः॥२५५

---

भोजराजेन—"विदूरकार्य्यः सहजः कार्य्यानन्तरजस्तथ युक्तो न युक्त इत्येवमसङ्ख्याश्चित्रहेतवः ।" इति ) ॥ २५३ ॥

तेऽमीति ।—ते पूर्वोक्ताः, अमी चित्रहेतवः, गौणी वृत्तिः सादृश्यनिबन्धना लक्षणा, सैव व्यपाश्रयः अवलम् येषां तादृशाः, प्रयोगाणां निबन्धानां, मार्गेषु रीतिषु, अत्य सुन्दराः अतिमनोहराः, दृष्टाः, तेषामुदाहृतयः उदाहरणा यथा वक्ष्यन्ते इति भावः ॥ २५४ ॥

दूरकार्य्यमुदाहरति, त्वदपाङ्गाह्वयमिति ।—अङ्गने ! चार्वङ्गि ! यत् तत् प्रसिद्धं, जैत्रं जयसाधनं, तव अपाङ्गाह्व अपाङ्गरूपम्, अनङ्गस्य कामस्य, अस्त्रम् अन्यतः अन्यस्मिन् ज मुक्तं पातितं, त्वयेति शेषः, तेन अस्त्रेण, सः लक्ष्यभूतः ज तथा अहमपि अलक्ष्यभूत इत्यर्थः, मनसि क्षतः विद्धः । ( अस्त्रस्य लक्ष्यवेधरूपं कार्य्यं सन्निहितम् अलक्ष्यवेधरू दूरवर्त्ति इति हेतोरस्त्रस्य दूरकार्य्यत्वं, तस्य चासम्भवाद्वि मिति दूरकार्य्यो नाम चित्रहेतुः । अस्य उदाहरणान्त यथा—"अनभ्रवानेन युगोपमानमलब्धमौर्वीकिणलाञ्छने असृष्टखङ्गत्सरुणाऽपि चासीद्रक्षावती तस्य भुजेन भूमिः इति ; सोऽयं बाल्य एव नवयौवनकार्य्यकरणात् दूरका नाम चित्रहेतुः ॥ २५५ ॥

तत्सहजोदाहरणं यथा—

आविर्भवति नारीणां वयः पर्य्यस्तशैशवम् ।
सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः ॥२५६॥

कार्य्यानन्तरजोदाहरणं यथा—

पश्चात् पर्य्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥२५७॥

---

तत्सहजमुदाहरति, आविर्भवतीति ।—नारीणां पर्य्यस्तं निराकृतं, शैशवं येन तादृशं, वयः यौवनमित्यर्थः, पुंसां विविधैः अङ्गजेन कामेन, यः उन्मादः तस्य विभ्रमैः सहैव आविर्भवति । ( अत्र नारीणां यौवनरूपस्य हेतोस्तत्कार्य्यभूतपुरुषविभ्रमैः सहाविर्भावात् तत्सहजत्वं, तच्च कार्य्यकारणयोर्यौगपद्येन वैचित्र्यातिशयसूचनात् चित्रम्, एवञ्च यौवनरूपकारणादनन्तरं जायमानानां विभ्रमाणां प्रागुत्पद्यमानत्वेनाध्यवसायात् अध्यवसायमूलत्वं न तु गौणव्यपाश्रय इति बोध्यम् । उदाहरणान्तरं यथा—"सममेव समाक्रान्तं द्वयं द्विरदगामिना । तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥" अत्र राज्याभिषेकरिपुमण्डलाक्रमणयोर्हेतुहेतुमद्भावेन सत्यपि पौर्वापर्य्ये क्षिप्रकारित्वात्तुल्यमेव कार्य्यकारणभावो विवक्षितः इति सहजो नाम चित्रहेतुः ) ॥ २५६ ॥

कार्य्यानन्तरजमुदाहरति, पश्चादिति ।—हरिणाक्षीणां रागसागरः प्रेमानुरागसमुद्रः, प्रागेव उदीर्णः उच्छलितः, स्फीत इत्यर्थः, पश्चात् किरणान् पर्य्यस्य उत्क्षिप्य, चन्द्रमण्डलम् उदीर्णम् उदितम् । ( अत्र चन्द्रोदयलक्षणाद्धेतोः पूर्वकालमेव रागसागर उदीर्ण इति कार्य्यस्योदयलाभः, सः इह गुणवृत्त्याश्रयणेन हेतावतिशयं पुष्यतीति कार्य्यानन्तरजनामायं

अयुक्तकार्य्यचित्रहेतुः ।—

राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः ? ।
देव ! त्वच्चरणद्वन्द्व-रविबालातपः स्पृशन् ॥२५८॥

युक्तकार्य्यहेतुः ।—

पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।
त्वत्पादनख-चन्द्राणामर्च्चिषः कुन्दनिर्मलाः ॥२५९॥

चित्रहेतुः ; तच्च कार्य्यकारणयोरग्रपश्चाद्भावप्रतिपादनेन समधिकं वैचित्र्यमावहतीति चित्रम् । अत्रापि पश्चाद्भावित्वस्य पूर्वभावित्वेन अध्यवसितमिति अध्यवसायमूलत्वमस्येति ज्ञेयम् ) ॥ २५७ ॥

अयुक्तकार्य्यमुदाहरति, राज्ञामिति ।—हे देव ! तव चरणद्वन्द्वमेव रविबालातपः नवोदितार्कमयूखः, राज्ञां हस्ता एव अरविन्दानि तानि स्पृशन् कुतः कुड्मलीकुरुते ? मुकुलीकरोति ? इत्यर्थः ; बालातपस्पर्शात् अरविन्दानां विकास एव भवति, न तु सङ्कोचः । ( अत्र बालातपरूपकारणस्य अरविन्दसङ्कोचरूपकार्य्यमयुक्तमिति अयुक्तकार्य्यत्वं, तच्च राजविषयकरतिभावस्य सातिशयचमत्कारविषयत्वात् अतिमनोरममिति चित्रम् । यथा वा—"न मीलयति पद्मानि न नभोऽप्यवगाहते । त्वन्मुखेन्दुर्ममासूनां हरणायैव यस्यति ॥" अत्र मुखेन्दोः पद्मनिमीलनादि न युज्यते इति अयुक्तकार्य्यः नाम चित्रहेतुः ) ॥ २५८ ॥

युक्तकार्य्यमुदाहरति, पाणिपद्मानीति ।—कुन्दनिर्मलाः कुन्दपुष्पधवलाः, तव पादनखचन्द्राणां पादनखरूपचन्द्राणाम्, अर्च्चिषः भूपानां पाणिपद्मानि पाणिरूपाणि पद्मानि, सङ्कोचयितुम् ईशते प्रभवन्ति । ( अत्र चन्द्रकिरणरूपकारणस्य

इति हेतुविकल्पानां दर्शिता गतिरीदृशी।

इति हेतुचक्रम्।

सूक्ष्म:।—

इङ्गिताकारलक्ष्योऽर्थ: सौक्ष्म्यात् सूक्ष्म इति स्मृत:
॥२६०॥

पद्मनिमीलनकार्य्यं युक्तं, तच्च राजविषयिणो रतिभावस्य व्यञ्जकतया सातिशयां चमत्कृतिपदवीमारोहतीति चित्रम्। यथा वा—"गुणानुरागमिश्रेण यशसा ते प्रसर्पता। दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम्॥" अत्र दिग्वधूमुखेषु ते गुणानुराग: कुङ्कुमं, यशस्तु चन्दनमिति गौणवृत्तिव्यपाश्रयेण युक्तत्वात् युक्तकार्य्यो नाम चित्रहेतु: )॥ २५८॥

हेतुमुपसंहरति, इतीति अर्द्धेन श्लोकेन।—हेतोर्विकल्पानां प्रभेदानाम्, इति पूर्वोक्तप्रकारा, ईदृशी गति: दर्शिता; अनयैव रीत्या अन्येऽपि प्रभेदा: ज्ञातव्या इति भाव:। ( एवं शक्तिहानिव्यधिकरणादय: अन्येऽपि हेतुभेदा: अन्यैरुक्ता: ज्ञातव्या:। तत्र शक्तिहानिहेतुर्यथा—"अनुरागवती सन्ध्या दिवसस्तत्पुर:-सर:। अहो ! दैवगतिश्चित्रा तथाऽपि न समागम:॥" इति। अत्र अनुरागवत्त्व-तत्पुर:सरत्वयो: समागमहेत्वो: सामर्थ्यविघाते दैव-गति: कारणमिति शक्तेर्हानि:। तथा—"सा बाला वयम-प्रगल्भवचस: सा स्त्री वयं कातरा:" इत्यादौ अभिव्यक्तमेव कार्य्यकारणयो: व्यधिकरणत्वं प्रतीयते इति व्यधिकरणो नाम चित्रहेतु:। एवमन्येऽपि )॥—

अथ सूक्ष्मं निरूपयति, इङ्गितेति।—इङ्गितम् अभिप्राय-प्रकाशकचेष्टाविष्कार:, नेत्रहस्तादिव्यङ्ग्य: इत्यर्थ:; ("इङ्गितं

---

इति चक्रवर्त्त, हेतो: हेतवहारक, चक्रं समूह:।

इङ्गितलक्ष्यसूक्ष्मः।—

कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम्।
अवेक्ष्य कान्तमबला लीलापद्मं न्यमीलयत्॥२६१॥
पद्मसम्मीलनादत्र सूचितो निशि सङ्गमः।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम्॥२६२॥

इङ्गितं भावः" इति विश्वः) आकारः अवस्थाविशेषव्यञ्जक-मुखरागादिः, ("स्यादाकारोऽङ्गवैकृतम्" इति पालितः) एताभ्यां लक्ष्यः अनुमेयः, अर्थः विषयः, सौक्ष्म्यात् दुर्ज्ञेयत्वात्, सूक्ष्म इति स्मृतः। (इत्यत्र सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः योऽर्थः, स यदा निपुणमतिभिरिङ्गिताकाराभ्यां संलक्ष्यते तदा तस्य संलक्षितस्य यत् प्रकाशनं स सूक्ष्मालङ्कार इति लक्षणम्। अत एव प्रकाशकारः,—"कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते। धर्मेण केनचित् यत्र तत् सूक्ष्मं परिचक्षते॥" इत्याह। "संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा। कयाऽपि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते॥" इति च दर्पणकारः) ॥ २६० ॥

इङ्गितलक्ष्यं सूक्ष्ममुदाहरति, कदेत्यादि।—कदा कस्मिन् समये, नौ आवयोः, सङ्गमो भावी इति आकीर्णे जनबहुले स्थाने, वक्तुमक्षमं कान्तम् अवेक्ष्य अबला कामिनी, लीलापद्मं क्रीड़ाकमलं, न्यमीलयत् समकोचयत्। अत्र अङ्गजपीड़ितं कामार्त्तं, प्रियम् आश्वासयितुम् इच्छन्त्या अनया कामिन्या, पद्मसम्मीलनात् निशि रात्रौ, सङ्गमः, भावीति शेषः, सूचितः। (पद्मनिमीलनमिह इङ्गितं निशि प्रियसङ्गमरूपसूक्ष्मोऽर्थः इति बोध्यम्। अस्य च सहृदयचमत्कारितया अलङ्कारत्वमव-गन्तव्यम्। यथा वा—"तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां

आकारलक्ष्यसूक्ष्मम् ।—

मदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्द्धत ।
उद्दामरागतरला च्छाया काऽपि मुखाम्बुजे॥२६३॥
इत्यल्पनिम्नरूपत्वात् रत्युत्सवमनोरथः ।
अनुल्लङ्घ्य सूक्ष्मत्वमभूदेव व्यवस्थितः ॥२६४॥

इति सूक्ष्मम् ।

---

प्रणयाग्रदृत्यः । प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥" अत्र राज्ञां राजपुत्रीं प्रति प्राप्तिलक्षणस्य मनोरथस्य शृङ्गारचेष्टात्मकेन इङ्गितेन व्यङ्ग्यत्वात् इङ्गितलक्ष्यः सूक्ष्मः )॥ २६१ ॥ २६२ ॥

आकारलक्ष्यं सूक्ष्मं दर्शयति, मदर्पितदृश इति ।—गीतगोष्ठ्यां सङ्गीतसंसदि, मयि अर्पिते दृशौ यया तादृश्याः, तस्याः मुखाम्बुजे उद्दामः अतिप्रवृद्धः, यः रागः रमणाभिलाषः, तेन तरला विकस्वरा, काऽपि अनिर्वचनीया, छाया कान्तिः, अवर्द्धत । ( अत्र मुखच्छायावैलक्षण्येन नायिकाया रत्युत्सवाभिलाषस्य लक्षितत्वात् सूक्ष्मत्वम् । उदाहरणान्तरं यथा—"सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् । रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निरक्रामदरालकेश्याः ॥" इति ; अत्र अभिलाषबन्धो रोमाञ्चलक्ष्येण गात्रयष्टिं भित्त्वा निरक्रामत् इत्याकारलक्ष्यः सूक्ष्मभेदः ) ॥ २६३ ॥

कदा नौ इत्यादौ निशि सङ्गमस्य पद्मसङ्कोचनेन सूचनरूपः अर्थस्तु सूक्ष्म इति तत्र सूक्ष्मत्वमस्त्वावद्भवतु, अत्र तु तादृशमुखकान्त्या रत्युत्सवस्य स्फुटं प्रतीयमानत्वात् कथं सूक्ष्मत्वमित्याशङ्क्याह, इतीति ।—अत्र रत्युत्सवमनोरथः इति उक्तरूपेण,

* इति एवं, सूक्ष्मं सूक्ष्माख्यालङ्कारनिरूपणं, समाप्तमिति शेषः ।

लेशः।—

लेशो लेशेन निर्भिन्न-वस्तुरूपनिगूहनम्।
उदाहरण एवास्य रूपमाविर्भविष्यति ॥२६५॥

अनुद्भिन्नरूपत्वात् आकारलक्षितत्वेन स्फुटतया प्रतीयमानत्वाभावात्, सूक्ष्मत्वम् अनुसृत्येव अपरित्यज्यैव, व्यवस्थितः वर्णितः, अभूत्। (तथा च तादृशो मुखच्छाया अवश्यमेव तत्सङ्गमनोरथं व्यञ्जयतीति न तावन्नियमः, अन्यविषमनोरथेनापि तत्सम्भवात्, अतो नियतत्वाभावात् स्फुटं तादृशमनोरथो न प्रतीयते, विशेषपर्य्यालोचनया तादृशसुनिपुणो लक्षयिता कथञ्चित् इममर्थं लक्षयितुं शक्नोतीति सूक्ष्मालङ्कारस्यावकाश इति बोध्यम्) ॥ २६४ ॥

इदानीमुद्देशवाक्यप्राप्तलवापरपर्य्यायं लेशं निरूपयति, लेश इति।—लेशेन किञ्चिन्मात्रतया, निर्भिन्नं प्रकटितं, वस्तुनः यत् रूपं स्वरूपं, तस्य निगूहनं गोपनं, लेशः, उदाहरणे एव राजकन्यानुरक्तमित्यादौ वक्ष्यमाणे एव इत्यर्थः, अस्य अलङ्कारस्य, रूपं वैचित्र्यात्मकं स्वरूपम्, आविर्भविष्यति प्रकाशिष्यते। (इत्यञ्च नेत्रादिव्यङ्गेन ईषत्प्रकाश-गोप्यविषयस्य यत् केनचित् व्याजेन गोपनं स लेशः इति लक्षणम्। इममेव व्याजोक्तिं वदन्ति केचित्; यथा—"व्याजोक्तिश्छद्मनोद्भिन्न-वस्तुरूपनिगूहनम्" इति। विश्वनाथस्तु—"गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन। यदि श्लेषेणान्यथा वाऽन्यथयेत् साऽप्यपह्नुतिः॥" इत्युक्तलक्षणां द्वितीयापह्नुतिमत्र मन्यते; उदाहरति च श्लिष्टाश्लिष्टत्वेन—"काले वारिधराणामपतितया नैव शक्यते स्थातुम्। उत्कण्ठितासि तरले! ? नहि नहि सखि! पिच्छिलः पन्थाः॥" "इह पुरोऽनिलकम्पितविग्रहा

राजकन्याऽनुरक्तं मां रोमोद्भेदेन रक्षकाः।
अवगच्छेयुरा ज्ञातमहो! शीतानिलं वनम्॥२६६॥
आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम्।
अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम्॥२६७॥

मलति का न वनस्पतिना गता?। स्मरसि किं सखि! कान्तरतोत्सवम्? न हि घनागमरीतिरुदाहृता॥" इति। पूर्वत्र अपाततया इत्यस्य श्लिष्टत्वेन पतिमन्तरेण इत्यर्थमभिधाय घनाभावत्वेन निगूहनम्; द्वितीये पतिसङ्गेच्छां सूचयित्वा घनागमस्वभावत्वेन तन्निगूहनम् इत्यपह्नुतिरेव। व्याजोक्तौ गोपनकृता गोपनीयं प्रथममभिधीयते, अपह्नुतौ तु न तथा इति तयोर्भेदः तेनैव दर्शितः; वक्ष्यमाणापह्नुतौ तु लेशनिर्भिन्न-वस्तुनः व्याजेन नापह्नवः, लेशे तु तथेत्यनयोर्भेदः)॥ २६५॥

अनिष्टसम्भावनायां लेशमुदाहरति, राजकन्येति।—रोमोद्भेदेन रोमहर्षेण, राजकन्याया दर्शनजनितेनेति भावः; मां राजकन्यायाम् अनुरक्तम् अभिलाषुकं, रक्षकाः राजान्तःपुर-रक्षिणः, अवगच्छेयुः, (सम्भावनायां विधिलिङ्) आ ज्ञातम् आ इति स्मरणार्थकमव्ययं, ज्ञातं विदितं, निगूहनप्रकारो ज्ञायते इत्यर्थः, (ज्ञातमिति वर्त्तमाने क्तप्रत्ययः) अहो! वनं शीतः अनिलः यत्र तत्, शीतानिलस्पर्शेन रोमाञ्चोदय इति भावः। (अत्र रोमोद्भेदस्य शीतानिलजत्वेन अनुरागनिगूहनं वैचित्र्यमावहतीति अस्यालङ्कारत्वम्)॥ २६६॥

लज्जायां लेशमुदाहरति, आनन्दाश्रु इति।—कन्यकां दृष्ट्वैव मे मम, कथम् आनन्दाश्रु प्रवृत्तम्? विवाहार्थमुद्वाह-समितौ समानीतायाः कन्याया दर्शनमात्रेण अनुरागोदयात्

इत्येवमादिस्थानेऽयमलङ्कारोऽतिशोभते ।

लेशे मतान्तरप्रदर्शनम् ।—

लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम् ॥२६८॥

युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।

रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥२६९॥

आनन्दाश्रुप्रवृत्तिर्लज्जाकरोति भावः । अत्र निगूहनप्रकारमाह, अश्वानीति ।—वातोद्धतेन पवनचालितेन, पुष्परजसा कुसुमपरागेण, मे अक्षि दूषितम् । (अत्र आनन्दाश्रुणोऽक्षिदूषणजत्वप्रतिपादनव्याजेनानुरागस्य संवरणादलङ्कारत्वम् इति] ॥ २६७ ॥

अस्यालङ्कारत्वं प्रतिपादयन्नाह, इतीति ।—इत्येवमादिस्थाने एवमाद्युदाहरणे, अयम् अलङ्कारः अतिशोभते सहृदयचमत्कारितया समुल्लसति ।—

लेशे मतान्तरं प्रदर्शयति, लेशमिति ।—एके पण्डिताः, लेशतः छलेन, कृतां निन्दां वा स्तुतिं व्याजस्तुतिमित्यर्थः, लेशं विदुः । (तदुक्तं—"दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः । स लेशः स्यात् ततो नान्या व्याजस्तुतिरपीष्यते ॥" इति । लेशकृतस्तुतिनिन्दयोरपि लेशतामात्रालङ्कारत्वं, किं व्याजस्तुतीति नामान्तराभ्युपगमेन इति भावः ) ॥ २६८ ॥

स्तुतिव्याजेन निन्दामाह, युवेति ।—एष राजा युवा गुणवान् तथा ऊर्जितः विक्रान्तः, अतः ते तव, योग्यः पतिः, यस्य मनः कामोत्सवादपि रणोत्सवे सक्तम् । (स्वयंवरां कन्यां प्रति सख्या इत्युक्तिरियम् । अत्र द्वितीयार्द्धे महावीरत्वेन स्तुतिर्बोधिताऽपि कामोत्सवे अनासक्तत्वप्रतिपादनव्याजेन तस्य

वीर्य्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये।
कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरम्॥२७०॥
चपलो निर्दयश्चासौ जनः किं तेन मे सखि!?।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः॥२७१॥
दोषाभासो गुणः कोऽपि दर्शितश्चाटुकारिता।
मानं सखीजनोद्दिष्टं कर्त्तुं रागादशक्तया॥२७२॥

इति निन्दास्तुतिः। *

सम्भोगसुखं दुर्लभम्, अतो नायं वरणीय इति द्योतयतीति स्तुत्या निन्दैव प्रतिपादिता)॥२६९॥

अत्रालङ्कारं सङ्गमयति, वीर्य्येति।—अस्मिन् उदाहरणे, निरन्तरं भोगान् रतोत्सवान्, निर्विविक्षोः भोक्तुमिच्छोः, ("निर्वेशो भृतिभोगयोः" इत्यमरः) कन्यायाः भावस्य वरणाभिप्रायस्य, निवृत्तये वीर्य्योत्कर्षस्य वीर्य्याधिक्यस्य, स्तुतिः निन्दैव कल्पते निन्दारूपेणैव पर्य्यवस्यतीत्यर्थः॥२७०॥

निन्दाव्याजेन स्तुतिमाह, चपल इति।—हे सखि! असौ जनः चपलः अस्थिरः, निर्दयः परपीडानभिज्ञतया दयारहितश्च, येन आगःप्रमार्जनाय अपराधक्षालनाय, चाटवः प्रियवादाः, शिक्षिताः, अतस्तेन युष्माभिरुपदिष्टेन मानेन इत्यर्थः, मे मम, किम्? तस्मिन् जने निष्प्रयोजनं मानकरणमित्यर्थः, तस्य चाटुवचनेन अनुरागजननात् मानस्यापगमादिति भावः। (प्रेयसि मानो गौरवजनकत्वेन विधेय इत्युपदिशन्तीं सखीं प्रति कस्याश्चिन्नायिकाया उक्तिरियम्)॥२७१॥

दोषाभास इति।—रागात् प्रियानुरागाधिक्यात्, सखी-

* इति समाप्तौ, निन्दायाः स्तुत्यावसानत्वात्, वस्तु इमूढ़ः, इति समाप्तिमित्यर्थः।

यथासङ्ख्यम् ।-

उद्दिष्टानां पदार्थानामनूद्देशो यथाक्रमम् ।
यथासङ्ख्यमिति प्रोक्तं सङ्ख्यानं क्रम इत्यपि ॥२७३॥
ध्रुवं ते चोरिता तन्वि ! स्मितेक्षणमुखद्युतिः ।
स्नातुमम्भः प्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥२७४॥

---

अनेन उद्दिष्टम् उपदिष्टं, मानं कर्त्तुम् अशक्तया नायिकया, चाटुकारिता चाटुकारिताकृपः, कोऽपि स्त्रीजनहृद्यः इत्यर्थः, गुणाः दोष इव आभासते इति तथोक्ताः, दर्शितः दोषरूपेण कथित इत्यर्थः। (अत्र निन्दाव्याजेन स्तुतिरभिहिता; केचिदिमां व्याजस्तुतिं केचन वा लेशं मन्यन्ते इत्यभिप्रायः) ॥ २७२ ॥

यथासङ्ख्यालङ्कारं निरूपयति, उद्दिष्टानामिति ।— उद्दिष्टानाम् उक्तानां, पदार्थानां यथाक्रमम् अनु पश्चात्, उद्देशः पश्चादुक्तपदार्थैः सङ्गतिः, यथासङ्ख्या सङ्ख्यामनतिक्रम्य इति यथासङ्ख्यम्, इति, नाम्नेति शेषः, प्रोक्तं, सङ्ख्यानं क्रम इत्यपि पर्य्यायशब्द इत्यर्थः ॥ २७३ ॥

यथासङ्ख्यमुदाहरति, ध्रुवमिति ।—हे तन्वि ! स्नातुम् अम्भः जलं, प्रविष्टायाः ते तव, स्मितेक्षणमुखद्युतिः ईषद्धास्यलोचनवदनानां कान्तिः, कुमुदोत्पलपङ्कजैः कैरवेन्दीवरकमलैः, ध्रुवं निश्चितं, चोरिता अपहृता, क्रियदंशेनेति शेषः, समग्रहरणे नायिकायां तदसत्त्वेन चारुत्वापायादिति भावः। (अत्र स्मितद्युतिः कुमुदेन, ईक्षणद्युतिः उत्पलेन, मुखद्युतिः पङ्कजेनेति यथाक्रममुक्तपदार्थानां पश्चादुक्तपदार्थैः समन्वयश्चारुत्वातिशयमापादयतीति अस्यालङ्कारत्वम्) ॥ २७४ ॥

प्रेयोरसवदूर्जस्विनां लक्षणानि।—

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्।
ऊर्जस्वि रूढ़ाहङ्कारं युक्तोत्कर्षञ्च तत्त्रयम् ॥२७५॥

सम्प्रति प्रेयःप्रभृतीनां त्रयाणामेव असंलक्ष्यक्रमरूपैकधर्मवत्त्वेन एकत्र सन्निवेशस्यैव न्याय्यत्वेन प्रेयोरसवदूर्जस्विनामकमलङ्कारत्रितयं निरूपयति, प्रेय इति।—प्रियतरं भावाभिव्यक्त्या अतिप्रीतिकरम्, आख्यानं प्रेयः; (अतिप्रियत्वादन्वर्थसञ्ज्ञेयम्। भावाश्चात्र निर्वेदादयस्त्रयस्त्रिंशत् देवादिविषयश्च रत्यादिः। तत्र निर्वेदादयो यथा—"निर्वेदग्लानिशङ्काऽऽख्याः तथाऽसूयामदश्रमाः। आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः॥ व्रीड़ा चपलता हर्ष आवेगो जड़ता तथा। गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च॥ सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता। मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः। त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥" इति। देवादिविषयाणामानन्त्यात् रतेरनेकत्वेऽपि रत्यात्मभावरूपत्वेनास्या एकत्वमुक्तम्; यथा—"रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः। भावः प्रोक्तः—" इति। ततश्च आख्यानचातुर्य्येण रसोपकारकतया व्यज्यमानदेवादिविषयकरतिभावः वाच्यशोभाजनकतया प्रेयोनामालङ्कारः इति लक्षणम्) तथा रसपेशलं रसेन रत्यादिस्थायिभावरूपेण, पेशलं सहृदयानन्दजननं, रसवत् रसो विद्यते यत्र तदात्मकं रसवदलङ्कारः इत्यर्थः। (इत्थञ्च आख्यानचातुर्य्येण व्यज्यमानो रस एव वाच्यशोभाजनकतया रसवदलङ्कार इति लक्षणम्। रसध्वानमन्तरेणास्यालङ्कारस्याप्रतीतेः तत्स्वरूपमादौ निरूपणीयमिति किञ्चित्

उच्यते—इयमश्रव्यान्यतमकाव्यनिष्ठो रत्यादिस्थायिभाव एव यदा सहृदयानां सहृदयतावशवर्त्तिना भावनाविशेषमहिम्ना वास्तवरामपत्न्यादावपि विगलितरामपत्नीत्वादिबोधैः, सीतादिभिरालम्बनविभावैः, चन्द्रकादिभिरुद्दीपनविभावैः, चिन्तादिभिः व्यभिचारिभावैः, अश्रुपातादिभिः कार्य्यैश्चाभिव्यज्यमानः अलौकिकचमत्कारात्मकं ब्रह्मास्वादस्वरूपं प्रकर्षगतमानन्दं सामाजिकानां चेतसि स्वाभिन्नतया जनयति तदा स एव रस इति व्यपदिश्यते। उक्तञ्च—"व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः" इति। ते च रसा अष्टौ, तेषाञ्च स्थायिभावाः, —रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयाः इत्यष्टौ। शान्तनामाऽपि रसोऽस्ति, निर्वेदः शमो वा तत्र स्थायिभावः) तथा रूढः अभिव्यक्तः, अहङ्कारः गर्वः यत्र तादृशं गर्वप्रधानमाख्यानम्, ऊर्जस्वि ऊर्जो बलं तदस्यास्तीति योगबलात् अहङ्कारस्य च ऊर्जोविमरूपत्वात् तथा व्यपदेशः, आख्यानचातुर्य्येणाभिव्यज्यमानो गर्वाख्यो व्यभिचारिभावः एव ऊर्जस्विनामालङ्कार इति निष्कर्षः। (गर्वस्य—"गर्वो मदः प्रभावश्री विद्यासत्कुलतादिजः" इत्युक्तलक्षणः) एषामलङ्कारसंज्ञायां हेतुमाह, युक्तोत्कर्षमिति।—तेषाम् उक्तानां प्रेयःप्रभृतीनाम् अलङ्काराणां, त्रयं युक्तः अलङ्कारव्यपदेशसमुचितः, उत्कर्षो यस्मिन् तादृशम्; वाच्यार्थशोभाजनकतया यथा उपमादयः अलङ्कारपदवाच्याः, तथा वाच्यशोभाजनकत्वसाम्याद्भावादयोऽपि, अत एवेषामलङ्कारत्वकीर्त्तनं न दोषावहमिति भावः। (उल्लिखितेषु भावेषु च देवादिविषयकरतिभावस्यैव प्रेयोनामालङ्कारत्वम्, अन्येषां भावानां रसाभास-भावाभास भावशान्ति-भावोदय भावशबलतानाञ्च रसाभासपदार्थत्वेन रसवदलङ्कारत्वम्; उक्तञ्च विश्वनाथेन—

"रसभावौ तदाभासौ भावस्य प्रशमोदयौ। सन्धिः शबलता चेति सर्वेऽपि रसनात् रसाः॥" इति। गर्व्वाख्यभावस्य तु ऊर्ज्जस्विनामालङ्कारत्वमिति विशेषः। ननु अङ्गिनो रसादेरलङ्कार्य्यत्वात् कथमलङ्कारत्वमिति चेन्न, अङ्गभूतस्य रसादेरलङ्कारत्वस्य युक्तत्वात्; यावता उपमादीनां सर्व्वालङ्काराणां प्रकृतवस्तूपस्कारकत्वमलङ्कारत्वे निबन्धनम्, अङ्गभूतेनापि रसेन तत् क्रियत एव, प्रकृतस्य रसादेस्तदुपस्कृतत्वेन भावात्; अत उपमादीनामलङ्कारत्वे यादृश्येव वार्त्ता तादृश्येव रसादीनाम्; तदुक्तं—"प्रधानतां यत्र रसादयो गताः रसो रसादिध्वनिगोचरो भवेत्। भवन्ति ते यत्र रसादिपोषका रसाद्यलङ्कारदशा हि सा पृथक्॥" इति। अत्र केचिदाहुः,—"निर्व्वेदादीनां भावानां कदाचिदपि स्वप्राधान्याभावात् सर्व्वदा रसाद्यङ्गत्वे एव ध्वनिभेदत्वमिति कथमेषामलङ्कारत्वम्? तथा चोक्तं—निर्व्वेदादीनां सर्व्वदैवाङ्गभावात् प्रेयोलङ्कारस्तद्व्यपेक्षो न वाच्यः। तस्मादेतेषां व्यङ्ग्यतायां ध्वनित्वं न प्राधान्यं क्वापि यस्मादृजन्ते॥ एतेन भावप्रशमादयोऽपि व्यङ्ग्याः सदैव ध्वनितां प्रयान्ति। ध्वनित्वमिष्टं यदि तर्हि तेषु न लक्षणीयस्तु समाहितादिः॥" इति। नैतत् समीचीनं, प्रधानाप्रधानभावस्यापेक्षिकत्वात् "क्वचिदप्यपरस्याङ्गम्" इति नीत्या एषामङ्गित्वमङ्गत्वञ्च इत्यभ्युपगमत्वात्; तथा चोक्तं—"मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन" इति; ततश्च रसव्यक्तौ एषां सहकारित्वम्, अङ्गित्वे ध्वनित्वम्, अङ्गत्वे चालङ्कारत्वमिति विभागः। यत्र असतो वस्तुनो रसस्य स्वरूपनिष्पत्तये निर्व्वेदादयो भावाः तदङ्गतामुपयान्ति, तत्र रसोपसर्ज्जनीभूतत्वात्तद्व्यञ्जनमात्रमेव फलमिति सहकारित्वमेषां, न तत्र ध्वनित्वं न वा अलङ्कारत्वं, रसव्यक्तिव्यतिरिक्तप्रयोजनान्तरसम्पादनत्वात्;

योगात्। यत्र तु ते लब्धसत्ताकस्याङ्गिन उपकारकतया अङ्गता-मुपयान्ति तत्रालङ्कारत्वं, यत्र रसानुद्गमेन निर्वेदादयः वाक्य-तात्पर्य्यविषयत्वेन विश्राम्यन्ति, तत्र तेषामेव प्राधान्यमित्यभि-प्रायः । यथा—"इतश्चारुप्रेमप्रणयसुकुमारा वरवधूः इतः स्वेच्छालभ्यानुपमफलमूला वनमही। इतो मौर्वीनादोन्मुख-निखिलसैन्यो रणविधिः क्व नामायं मादृक् तरलहृदयो रज्यतु जनः ?" ॥ अत्र मुख्यानामपि शृङ्गारादिरसानामप्ररूढत्वेन विभावानुभावाभ्यां व्यञ्जितायाश्चिन्ताया एव वाक्यतात्पर्य्य-विषयत्वेन प्राधान्यादङ्गित्वम्। रसस्याङ्गित्वं यथा—"नायं कञ्चुलिकाविमोचनमयः स्पृष्टो न काञ्चीगुणः प्रक्रान्ता न मया विपर्य्ययरतारम्भाय वा प्रार्थना। न त्वत्कर्त्तुंक्षमर्थयामि निविड़ं दोःकन्दलीबन्धनं तन्निष्कारणमेव बालवल्लीवल्लीव किं वेपसे ?"॥ अत्र आलम्बनविभावो लता, वेपनादिरनुभावः, वितर्कश्च व्यभिचारिभावः,एषाञ्च रसव्यञ्जकत्वमात्रमेव प्रयोजनं न किञ्चित् फलान्तरमिति रसस्यैवात्र प्राधान्यम्। रसस्याङ्गत्वं यथा—"पार्वत्यार्चिताङ्कपालि वृषभारूढं विलासाङ्गद-ग्रन्थि-क्लान्तमहाहिलोचनलसज्जालं पिणाकाङ्कितम्। कन्दर्पार्पित-शासनाङ्कविवलत्कङ्कालमर्द्धेन्दुमत् भस्माङ्कञ्च पुनातु वो नव रसान् पुष्णन्पुरारेर्वपुः ॥" अत्र भगवद्विषयायाः रतेः नव रसा अङ्गाः ; ततश्च रसानामङ्गत्वे रसवदलङ्कारः, भावानामङ्गत्वे प्रेयोनामालङ्कारः, रसाभास-भावाभासानामङ्गत्वे ऊर्ज-स्वालङ्कारः, भावशान्तेरङ्गत्वे समाहितालङ्कारः, भावोदय-भाव-सन्धि-भावशबलतानामङ्गत्वे तत्तन्नामालङ्कारः इति। ध्वनि-कारश्च अङ्गिनो रसादेरलङ्कार्य्यत्वम्, अङ्गस्य तु अलङ्कारत्व-मित्याह ; यथा—"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥" विश्वनाथस्तु

प्रेयः-उदाहरणम्।—

अद्य या मम गोविन्द! जाता त्वयि गृहागते।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः॥२७६॥

—"रसभावौ तदाभासौ भावस्य प्रशमस्तथा। गुणीभूतत्वमायान्ति यदाऽलङ्कृतयस्तदा॥ रसवत् प्रेय ऊर्ज्जस्वि समाहितमिति क्रमात्। भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः॥" इत्याह। स्वमते तु—"काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते" इत्यलङ्कारलक्षणेन शब्दार्थशरीरस्य काव्यस्यैवालङ्कार्य्यत्वप्रतिपादनात् तदुपस्कारकस्य व्यङ्ग्यमात्रस्यैवालङ्कारत्वं सिद्धं, तथा हि, यथा अचेतनं शवशरीरादिकं कटकाद्युपेतमपि अलङ्कार्य्यत्वाभावान्न शोभते, अतः देहद्वारेणात्मैवालङ्कार्य्यः, तथा इहापि शब्दार्थशरीरत्वात् तन्मुखेनालङ्कार्य्यत्वम् इति सिद्धान्तात्। उपमादौ सादृश्यमाश्रित्यालङ्कारत्वम्, इह तु रसभावादितात्पर्य्यमाश्रित्य इति विवेचनीयम्)॥ २७५॥

प्रेय उदाहरति, अद्येति।—गोविन्द! अद्य त्वयि गृहागते या मम प्रीतिः जाता, कालेन समयान्तरेण, तवैव (नान्यस्य कस्यचित् साधोरित्येवकारेण ध्वन्यते) पुनरागमनात् एषा प्रीतिः भवेत् भविष्यतीत्यर्थः, यदा त्वं पुनरागमिष्यसि तदैव ईदृशी प्रीतिः भविष्यति नान्यथेति भावः। (स्वभवनमागतं भगवन्तं प्रति विदुरस्य सानुरागोक्तिरियम्। अत्र भगवद्विषयकरतिभावो वाक्यभङ्ग्या भगवतः प्रीत्यतिशयोत्पादनेन वाच्यशोभां जनयन् सहृदयानां सातिशयचमत्कृतिमादधातीति प्रेयोऽलङ्कारः। अयञ्च श्लोकः,—'या प्रीतिः पुण्डरीकाक्ष! तवागमनकारणात्। सा किमाख्यायते तुभ्यमन्तरात्माऽसि देहिनाम्॥" इति भारतोद्योगपर्व्वीयविदुरवचनस्य प्रतिरूपः)॥ २७६॥

इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः।
भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः ॥२७७॥
सोमः सूर्य्यो मरुद्भूमिर्व्योम होताऽनलो जलम्।
इति रूपाण्यतिक्रम्य त्वां द्रष्टुं देव! के वयम्?॥२७८॥
इति साक्षात्कृते देवे राज्ञो यद्राजवर्म्मणः।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥ २७९ ॥

---

एतदेव सङ्गमयति, इत्याहेति।—विदुर इति "अद्य या मम" इत्यादि प्रागुक्तमित्यर्थः, स्वभवनमुपागतं हरिं प्रति तद्वाक्यस्योक्तेरिति भावः, युक्तम् आह, यतस्तस्य अन्यतः अन्यस्मात् आगन्तुकात, तादृशी धृतिः सन्तोषः, न, आसीदिति शेषः, ततश्च भक्तिमात्रेण न तु केनाप्यन्येनोपचारेणेति भावः, समाराध्यः हरिः सुप्रीतः, तस्य अभवत् इति वाक्यशेषः। ( ततश्च प्रीतिकराख्यानयोगात् इह प्रेयोऽलङ्कार इति सङ्गतिः ) ॥ २७७ ॥

एवं वक्तृबोद्धव्ययोः प्रीतावुदाहृतम्, इदानीं केवलं वक्तुः प्रीतावुदाहरति, सोम इत्यादि।—हे देव! सोमः चन्द्रः, सूर्य्यः, मरुत् वायुः, भूमिः, व्योम आकाशं, होता यजमानः, अनलः अग्निः, तथा जलम इति ते रूपाणि अष्टौ मूर्त्तीरित्यर्थः, अतिक्रम्य अतीत्य, स्थितमिति शेषः, त्वां परमात्मस्वरूपं, सूक्ष्मस्वरूपमिति भावः, द्रष्टुं वयं के? न वयं योग्या इत्यर्थः, तथाऽपि यत् दृष्टोऽसि तत्र केवलं भक्तानुग्रह एव हेतुरिति भावः। देवे महेश्वरे, साक्षात्कृते तपसा प्रत्यक्षगोचरीकृते सति, राजवर्म्मणः राजवर्म्माख्यस्य राज्ञः, इति उक्तरूपं, यत् प्रीतिप्रकाशनं महादेवविषयकरतिभावसूचनं, तच्च तदपि, प्रेय

रसवदलङ्कारो यथा ।—

मृतेति प्रेत्य सङ्गन्तुं यथा मे मरणं मतम् ।
सैषा तन्वी मया लब्धा कथमत्रैव जन्मनि ?॥२८०॥

इति अवगम्यताम् । (अत्र परब्रह्मणो भगवतो जन्यप्रीतेरभावात् वक्तुरेव भगवद्विषयकप्रीतिर्व्यज्यते, व्यज्यमानस्य स्थिरत्वाभावस्य सत्त्वाच्च प्रेय इति निष्कर्षः । प्राक्तनश्लोकद्वये देवविषयकरतिभावो दर्शितः । मुनिविषयकरतिभावो यथा—"हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः । शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥" इति ) ॥ २७८ ॥ २७९ ॥

अथ रसवदलङ्कारं दर्शयन् रसानाम् शृङ्गारादीनां प्राथम्येन सर्वजनहृद्यत्वेन च प्रथमं शृङ्गारमुदाहरति मृतेति ।— मृता इति, निश्चित्य इत्यध्याहार्यम् ; प्रेत्य परलोकं गत्वा, यया कान्तया, सङ्गन्तुं संयोगं प्राप्तुं, मे मरणं मतम् इष्टं, मरणावधारणं कृतमित्यर्थः, एषा सा तन्वी अत्रैव जन्मनि मरणं विनेति भावः, कथं मया लब्धा ? प्राप्ता ? । (मृतां मदालसां नागानां प्रसादेन पुनः प्रत्युज्जीवितां प्राप्य तत्पत्युः कुवलयाश्वस्योक्तिरियम् । "सैषा तन्वी" इत्यत्र "सैवाऽऽवन्ती" इति पाठोऽपि दृश्यते, तथात्वे आवन्ती अवन्तिदेशभवा वासवदत्तेत्यर्थः, तस्याश्च दाहप्रवादेन मरणनिश्चयात् दुःखितस्य वत्सराजस्य पुनस्तां प्राप्यानन्दोक्तिरियम् । अत्र सम्भोगशृङ्गारः ; तल्लक्षणमुक्तं विश्वनाथेन, यथा—"दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः ॥" इति । अयञ्च विप्रलम्भानन्तर्यात् परां पुष्टिं नीतः ; उक्तञ्च विश्वनाथेन—"न विना विप्रलम्भेन सम्भोगः

प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥

पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते ॥" इति । विप्रलम्भस्य तेनैवोक्तः यथा—"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । स च पूर्वराग-मान-प्रवास-करुणात्मकः चतुर्द्धा स्यात् ॥" इत्यनेनोक्तस्य चतुर्भेदस्य तस्यात्र करुणविप्रलम्भाख्यः शृङ्गार इत्यवधेयम । तल्लक्षणान्तूक्तं विश्वनाथेन यथा—"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये । विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥" इति ) ॥ २८० ॥

नन्वत्रापि नायिकाविषयकरतिभावो व्यज्यते, तत् प्रेयोऽलङ्कार एव कथमत्र न स्यादित्याशङ्क्याह, प्रागिति ।—प्राक् पूर्वोक्तयोः "अद्य या" तथा "सोमः सूर्य्यः" इत्युदाहरणयोः, प्रीतिः विभावादिभिरपरिपुष्टा रतिः, दर्शिता भगवद्विषयकरतिव्यञ्जकत्वेन प्रेयोऽलङ्कारतया प्रतिपादितेत्यर्थः ; ( एतेन प्रीतिप्रेमणोरेकपर्य्यायत्वं सूचितम ; उक्तञ्च—"मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं वचः । असम्प्रयोगविषया सेव प्रीतिर्निगद्यते ॥" इति ) सम्प्रयोगस्य विभावादिभिः परिपोषः, स चात्र वर्त्तते ततो न प्रीतिरियमित्याह, सेयमिति ।—सा देवादिविषयकरतिसजातीया इत्यर्थः, इयं रतिः,—"रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम" इत्युक्तलक्षणरूपः कान्ताविषयकोऽनुराग इत्यर्थः, रूपस्य स्वरूपस्य, रत्यात्मकस्य इति यावत्, बाहुल्यं विभावानुभावव्यभिचारिभिः पुष्टिः, तस्य योगेन सम्बन्धेन, शृङ्गारतां गता चमत्कारजनकतया तत्परिणामेन वा शृङ्गाररूपत्वं प्राप्ता । ( तथा हि अत्र नायिका विभावः, स्मेरतादयो-

रौद्ररसोदाहरणम् ।—

निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम ।
सोऽयं दुःशासनः पापो लब्धः किं जीवति
क्षणम् ? ॥ २८२ ॥
इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।
भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥ २८३ ॥

ऽनुभावाः, हर्षविस्मयादयः सञ्चारिणः, तैरभिव्यक्तः रत्यादि-स्थायिभावः एव रसव्यपदेशं लभते इत्यर्थः । उक्तञ्च भरतेन—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति । रसोद्बोधे च विभावादीनां समुदितानां त्रयाणामेव हेतुत्वं, यत्र तु एकस्य द्वयोर्वा सद्भावः, तत्रान्यतमस्य औचित्यादाक्षेपेण समुदितत्वं बोध्यं, यत्र तु कष्टेनाक्षेपस्तत्र तु दोष एव ) तस्मात् इदं सूतेत्युक्तं, वचः रसवत् रसवदलङ्कारेण अलङ्कृत-मित्यर्थः ॥ २८१ ॥

रौद्ररसमुदाहरति, निगृह्येति ।—येन मम अग्रतः मामनादृत्य इत्यर्थः, कृष्णा द्रौपदी, केशेषु ( अवच्छेदे सप्तमी ) निगृह्य निग्रहं कृत्वा, आकृष्टा, सः अयं पापः दुःशासनः मया लब्धः प्राप्तः, क्षणं जीवति किम ? नैव जीवतीत्यर्थः ॥ २८२ ॥

इतीति ।—शत्रुं दुःशासनं, पश्यतः भीमस्य क्रोधः इति उक्तप्रकारेण, परां कोटिम् आरुह्य विभावादिभिः परिपोषं प्राप्य इत्यर्थः, रौद्रतां रौद्रभावं, गतः रौद्ररसत्वेन परिणत इत्यर्थः, इति अस्माद्धेतोः, एतत् प्रागुक्तं 'निगृह्य' इत्यादि, वचः वाक्यं, रसवत् रसवदलङ्कारेणालङ्कृतमिति । ( तथा च प्रकृते आलम्बनविभावः, कृष्णाकेशाकर्षणादिकमुद्दीपन-

वीररसोदाहरणम् ।—

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम्?॥२८४॥
इत्युत्साहः प्रकृष्टात्मा तिष्ठन् वीररसात्मना ।
रसवत्त्वं गिरामासां समर्थयितुमीश्वरः ॥ २८५ ॥

---

विभावः, पाप इत्यधिक्षेपवाक्यमनुभावः, गर्वादयश्च प्रतीयमाना व्यभिचारिणः, एतैः पुष्टिं नीतः क्रोधः स्थायिभावः रौद्ररसत्वमापन्नः ) ॥ २८३ ॥

वीररसमुदाहरति, अजित्वेति ।—सार्णवां ससागराम्, उर्वीं पृथिवीम्, अजित्वा जयेन अलब्ध्वा, विविधैः बहुविधैः, मखैः यज्ञैः अश्वमेधादिभिः, अनिष्ट्वा देवान् अपरितोष्य, तथा अर्थिभ्यः याचकेभ्यः, अर्थं धनम्, अदत्त्वा अवितीर्य, कथं केन रूपेण, पार्थिवः राजा, भवेयम्? राजकर्त्तव्यानामुक्तानामकरणे पार्थिवत्वं विडम्बनैवेति भावः ॥ २८४ ॥

इतीति ।—उत्साहरूपः प्रकृष्टः आत्मा यस्य सः विभावादिभिः परिपुष्ट इत्यर्थः, उत्साहः "कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते" इत्युक्तलक्षणः संरम्भ इत्यर्थः, वीररसात्मना तिष्ठन् वीररसरूपेण परिणमन्, आसां गिरां वाचां, रसवत्त्वं रसवदलङ्कारयुक्तत्वं, समर्थयितुं दृढीकर्त्तुम्, ईश्वरः समर्थः । ( दान-धर्म-दया-युद्धभेदात् वीररसस्य चतुर्विधत्वं, तेनात्र युद्धवीरः धर्मवीरः दानवीरश्च इति वीररसत्रयमेकत्र दर्शितम् । क्रमेण युद्ध धर्म-दानविषया उत्साहाः स्थायिभावाः इति बोध्यम् ; तत्र सार्णवामुर्वीमजित्वा इत्यनेन युद्धे जेतव्याः शत्रवः, अनिष्ट्वा इत्यनेन धर्मे धर्मः, अर्थिभ्यः अर्थम् अदत्त्वा

करुणमोदाहरणम्।—

यस्याः कुसुमशय्याऽपि कोमलाङ्ग्या रुजाकरी।
साऽधिशेते कथं तन्वी हुताशनवतीं चिताम्?॥२८६॥
इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम्।
तथा परेऽपि बीभत्स-हास्याद्भुतभयानकाः॥२८७॥

इति च दाने याचकाः क्रमेण उत्साहस्य आलम्बनविभावाः, प्रतीयमानाः सहायान्वेषणादयः अनुभावाः, हर्षधृत्यादयो व्यभिचारिणः, एतैरभिव्यक्तः उत्साहरूपस्थायिभावः वीररसतां लभते इति; तथा चोक्तं विश्वनाथेन—"उत्तमप्रकृतिर्वीरः उत्साहस्थायिभावकः। महेन्द्रदैवतो हेम वर्णोऽयं समुदाहृतः॥ आलम्बनविभावास्तु विजेतव्यादयो मताः। विजेतव्यादिचेष्टाद्या-स्तस्योद्दीपनरूपिणः॥ अनुभावास्तु तत्र स्युः सहायान्वेषणादयः॥ सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः। स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात्॥" इति। तत्र दयावीरो यथा—"शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति। तृप्तिं न पश्यामि तवापि तावत् किं भक्षणात्त्वं विरतो गरुत्मन्!?"॥ अत्र जीमूतवाहनस्य गरुडभुक्तावशिष्ट-सर्पान् प्रति दययासमुत्साहः स्थायिभावः वीररसतामुपगतः इति दयावीरत्वम् इति)॥ २८५॥

करुणरसमुदाहरति, यस्या इत्यादि द्वाभ्याम्।—यस्याः कोमलाङ्ग्याः कुसुमशय्याऽपि रुजाकरा पीडाकरी, सा तन्वी कथं हुताशनवतीं ज्वलन्तीमित्यर्थः, चिताम् अधिशेते? इति उक्तरूपेण, उद्रिक्तं विभावादिभिः परिपुष्टं, कारुण्यं करुणरस-स्थायिभावः शोकः, इष्टनाशादिजनितदुःखविशेष इत्यर्थः,("इष्ट-

बीभत्सोदाहरणम्।—

पायं पायं तवारीणां शोणितं पाणिसम्पुटैः।
कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः॥ २८८॥

नाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्" इति लक्षणात्) अलङ्कारतया करुणरसोभूय काव्यशोभासम्पादनात् रसवदलङ्कारत्वेन, स्मृतं ज्ञातम्। (अत्र गतप्राणा तन्वी आलम्बनविभावः, कुसुमशय्याऽपोत्यादिना जीवितायां नायिकायाः सर्वविधभावस्मरणम् उद्दीपनविभावः, तादृशकरुणवचनम् अनुभावः, कथमित्यनेन प्रतीयमानाश्चिन्तादयो व्यभिचारिणः, एतैः परिपुष्टः शोकाख्यः स्थायिभावः करुणरसतां लभते इति ज्ञेयम्) तथा परे अन्ये, बीभत्सहास्याद्भुतभयानका अपि, रसा वेदितव्या इति शेषः। (एतेन स्वमते रसानामष्टत्वं सूचितम्; यथा पूर्वोदाहरणेषु रतिक्रोधोत्साहशोकस्थायितया शृङ्गाररौद्रवीरकरुणरसरूपाश्चत्वारो दर्शिताः, तथा वक्ष्यमाणेष्वपि जुगुप्साहासविस्मयभयस्थायित्वेन बीभत्सादयश्चत्वारः रसाः दर्शयिष्यन्ते। "तन्वी" इत्यत्र "देवी" इति क्वचित् पाठः)॥ २८६॥ २८७॥

तत्र बीभत्समुदाहरन्नाह, पायमिति।—कौणपाः राक्षसाः, कबन्धैः अशिरस्कक्रियायुक्तकलेवरैः सह, ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः) अन्त्रं पुरीतत्, भूषणं येषां तादृशाः सन्तः, पाणिसम्पुटैः तव अरीणां शोणितं पायं पायं पुनः पुनः पीत्वा, नृत्यन्ति। (अत्र जुगुप्सा स्थायिभावः, सा च—"दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा" इत्युक्तलक्षणा; तस्याश्च शोणितपायिनः अन्त्रभूषणाः राक्षसाः आलम्बनविभावाः, अन्ये च अनुभावादयः आक्षिप्ताः, तथा हि

हास्यरसोदाहरणम्।—

इदमम्लानमानाया लग्नं स्तनतटे तव।
छाद्यतामुत्तरीयेण नवं नखपदं सखि!॥ २८९॥

अद्भुतरसोदाहरणम्।—

अंशुकानि प्रवालानि पुष्पं हारादिभूषणम्।
शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम्॥२९०॥

---

निष्ठीवनाश्वचलनादयोऽनुभावाः, मोहापस्मारादयः व्यभिचारिणः, तैश्च परिपुष्टा जुगुप्सा बीभत्सरसत्वं भजते। अत्र राजविषयकरतिभावस्य प्राधान्यात् बीभत्सपरिपुष्टतया तस्यैव चमत्कारित्वात् प्रेयोऽलङ्कारत्वमेव युक्तमिति बोध्यम्। रसवत्-प्रेयसोः सङ्कर इति केचित्)॥ २८८॥

हास्यमुदाहरन्नाह, इदमिति।—हे सखि! अम्लानः अखण्डितः, अस्मद्विनयादिनाऽप्यप्रशमित इत्यर्थः, मानो यस्याः तथाविधायाः अपि, तव स्तनतटे लग्नम् इदं नवं, न तु प्राचीनमिति भावः, नखपदं नखाघातचिह्नम्, उत्तरीयेण छाद्यताम्। (सखीसन्निधौ कृतमानप्रकाशां रहसि कान्तेन सह कृतविहारां काञ्चित् नायिकां प्रति तत्सख्याः सोपहासोक्ति-रियम्। अत्र हासः स्थायिभावः, स च—"वागादिवैकृत-श्चेतोविकाशो हास उच्यते" इत्युक्तलक्षणः; तादृशी मानवती नायिका आलम्बनविभावः, नखक्षतमुद्दीपनविभावः, तादृश-वचनानि अनुभावाः, व्यभिचारिणश्च प्रतीयमानाः अवहित्था-दयः, एतैश्च परिपुष्टः अयं स्थायिभावः हासः हास्यरसत्वेन परिणमति)॥ २८९॥

अद्भुतरसमुदाहरति, अंशुकानीति।—एषां नन्दनशाखिनां कल्पद्रुमाणां, प्रवालानि किसलयाः, अंशुकानि वसनानि, पुष्पं

भयानकरसोदाहरणम् ।—

इदं मघोनः कुलिशं धारासन्निहितानलम् ।
स्मरणं यस्य दैत्यस्त्री-गर्भपाताय कल्पते ॥२९१॥

वाक्यस्याग्राम्यतायोनिर्माधुर्यं दर्शितो रसः ।
इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥२९२॥

इति रसवच्चक्रम् । *

हारादिभूषणं, प्रासादाश्च मन्दिराणि गृहाणि, चित्रं विस्मयकरमित्यर्थः । ( अत्र स्थायिभावो विस्मयः ; तल्लक्षणं यथा—"विविधेषु पदार्थेषु लोकसीमातिवर्तिषु । विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ॥" इति । अलौकिकनन्दनादिभिरालम्बनविभावैः, तेषाञ्च रचनादिसम्पत्कणगणोत्कर्षैरुद्दीपनविभावैः प्रतीयमानैः स्तम्भस्वेदादिभिरनुभावैः, सञ्चारिभिश्च वितर्कादिभिः परिपुष्टः विस्मयः अद्भुतरसतया पर्यवस्यतीति ) ॥ २९० ॥

भयानकरसमुदाहरति, इदमिति । इदं मघोन इन्द्रस्य, कुलिशं वज्रं, धारासु सन्निहितः अनलः यस्य तादृशं, यस्य स्मरणं दैत्यस्त्रीणाम् असुरकामिनीनां, गर्भपाताय कल्पते प्रभवति । ( अत्र दैत्यस्त्रीणां भयमेव स्थायिभावः ; तल्लक्षणं यथा—"रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्" इति । मघोना आलम्बनविभावेन, तादृशकुलिशेन उद्दीपनविभावेन, गर्भपातेन च अनुभावेन प्रतीयमानैः आवेगसम्मोहादिभिः व्यभिचारिभावैश्च परिपुष्टं भयं भयानकरसत्वं प्राप्नोतीति ) ॥ २९१ ॥

ननु माधुर्यनिरूपणे "मधुरं रसवत्" इत्युक्तेः रसवत्त्वस्य

* रसवतः रसवदलङ्कारस्य, चक्रं समूहः, इति समाप्तमित्यर्थः ।

माधुर्य्यगुणत्वम् अभिहितम्, अत्र तु अलङ्कारत्वं कथं सङ्गच्छते इत्याह, वाक्यस्येति।—माधुर्य्ये माधुर्य्यनिरूपणे, वाक्यस्य वाच्यस्य इत्यर्थः, (वाच्योपलक्षकमिह वाक्यग्रहणं "वस्तुन्यपि रसस्थितिः" इत्युक्तेः) अग्राम्यता ग्राम्यत्वदोषाभावत्वेनालङ्कारादिसत्त्वेत्यर्थः, सा एव योनिः कारणं, व्यञ्जिकेत्यर्थः, तया तादृशः, रसः दर्शितः ("कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति। तथाऽप्यग्राम्यतैवैनं भारं वहति भूयसा।") इत्यनेन निरूपित इत्यर्थः, अग्राम्यताया एव रसत्वेन उपचारतः कीर्त्तनमिति भावः। इह तु गिरां विभावानुभावव्यभिचारिभावोपस्थापकवाक्यानां, रसवत्ता रसवदलङ्कारवत्ता, अष्टरसायत्ता अष्टसु रसेषु शृङ्गारादिषु आयत्ता शृङ्गारादिरसाधीना, स्मृता। (एतेन रसव्यञ्जकग्राम्यत्वदोषाभावसहकृतालङ्कारादिसत्त्वं माधुर्य्यगुणत्वं, रसवदलङ्कारस्तु रस एवेत्यनयोर्भेद इति बोध्यम्। एवं देवादिविषयकरतिभावानां रसाभास-भावाभास-भावोदय-भावसन्धि-भावशान्ति-भावशबलतानाञ्च रस्यमानत्वात् रसवदलङ्कारत्वम्। इह रसानामष्टत्वं यदुक्तं तत् नाट्याभिप्रायेण "अष्टौ नाट्ये रसाः स्मृताः" इत्युक्तेः; श्रव्यकाव्ये तु अन्यैरुक्तः शान्तनामाऽपि रसो दृश्यते, तथा चोक्तं प्रकाशकृता—"निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः" इति। विश्वनाथेनापि उक्तं यथा—"शान्तः शमस्थायिभावः उत्तमप्रकृतिर्मतः। कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः॥ अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या। परमात्मस्वरूपं वा तस्यालम्बनमिष्यते॥ पुण्याश्रमहरिक्षेत्र-तीर्थरम्यवनादयः। महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः॥ रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः। निर्वेदहर्षस्मरण-मतिभूतदयाऽऽदयः॥" इति। तस्योदाहरणं यथा प्रकाशकारोक्तम्—"अहौ वा हारे वा कुसुमशयने

ऊर्जस्वि।—

अपकर्त्ताऽहमस्मीति हृदि ते मास्म भूत् भयम्।
विमुखेषु न मे खड्गः प्रहर्त्तुं जातु वाञ्छति ॥२९३॥
एवमुक्त्वा परो युद्धे निरुद्धो दर्पशालिना।
पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम् ॥२९४॥

वा दृषदि वा मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा। तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः॥" अत्र शमः स्थायिभावः, शिवः वस्तुनः अस्थायित्वं वा आलम्बनविभावः, पुण्यारण्यादय उद्दीपनविभावाः, रोमाञ्चादयोऽनुभावाः, हर्षादयः व्यभिचारिभावाः इति शान्तरसः) ॥ २९२ ॥

ऊर्जस्व्यलङ्कारमुदाहरति, अपकर्त्तेति।—अहं ते अपकर्त्ता शत्रुः, अस्मि इति हेतोः, ते हृदि मनसि, भयं मास्म भूत् न भवतु. मे मम, खड्गः विमुखेषु प्रहर्त्तुं जातु कदाचिदपि, न वाञ्छति। (तथा चोक्तं इन्यादित्यनुवृत्तौ मनुना; यथा— "नायुधव्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्। न भीतं न परावृत्तं सतां धर्ममनुस्मरन्॥" इति। युद्धे पलायनपरं शत्रुं प्रति कस्यचित् वीरस्योक्तिः। अत्र युद्धवीररसस्य गर्वरूपो व्यभिचारिभावः स्थायिभावादपि उत्साहादुद्रिक्ततया व्यक्त इति ऊर्जस्विनामालङ्कारः, ऊर्जो बलप्रकाशनमत्रास्तीति व्युत्पत्तेरिति भावः। यत्र तु गर्वरूपं व्यभिचारिभावं निगीर्य्य उत्साह एव प्रधानतया वर्त्तते, तत्र वीरो रसः, स एव रसवदलङ्कारतया व्यपदिश्यते इति बोध्यम्) ॥ २९३ ॥

एवमुक्तेति।—दर्पशालिना अहङ्कारवता, केनापि पुंसा

पर्य्यायोक्तम् ।—

**अर्थमिष्टमनाख्याय साक्षात् तस्यैव सिद्धये ।**
**यत् प्रकारान्तराख्यानं पर्य्यायोक्तं तदिष्यते ॥२६५॥**

एवम् उक्तरूपं वचनम्, उक्ता युद्धे परः शत्रुः निरुद्धः, तत् तस्मात्, इत्येवमादिकम् उक्तरूपं निरोधनं तादृशमन्यत् रसान्तरव्यभिचारि च इत्यर्थः, ऊर्जस्वि ज्ञेयम् ऊर्जस्विनामालङ्कारः स्मृतः, रसान्तरेऽपि तादृशो गर्वः ऊर्जस्वीति निष्कर्षः ॥२६४॥

पर्य्यायोक्तं लक्षयति, अर्थमिति ।—इष्टम् अभिलषितम्, अर्थं साक्षात् वाचकशब्देन, अनाख्याय अकथयित्वा, तस्यैव इष्टार्थस्य, सिद्धये प्रतिपत्तये, यत् प्रकारान्तरेण भङ्गिविशेषेण, आख्यानं व्यञ्जनया द्योतनं, तत् पर्य्यायोक्तम् इष्यते। ( एतेन वाच्य एवार्थो यत्र प्रकारान्तरेण व्यङ्ग्यतया उच्यते, तत् पर्य्यायोक्तमिति लक्षणं बोद्धव्यम् ; न च एकस्यैवार्थस्य व्यापारद्वयेन बोधवैयर्थ्यात् पौनरुक्त्यमिति वाच्यं, प्रकारभेदसत्त्वेन तदभावात् ; तदुक्तं—"यदेवोच्यते तदेव व्यङ्ग्यं न तु यथोच्यते तथा" इति। यथा हि निर्विकल्पकज्ञाने घटो घटत्वञ्च विषयः, घट इति सविकल्पकेऽपि तदेव ; तत्र निर्विकल्पकत्वे घटघटत्वयोर्विशकलितत्वेन सविकल्पकत्वेन तयोर्विशिष्टत्वेन प्रतीतिरिति तयोर्भेद उपपद्यते, तद्वदत्रापि इति न दोषः। एवञ्च "निवेद्यतां हन्त समापयन्तौ शिरोधिकोषस्त्वदिमाभिमानम्। पदौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ?" ॥ अत्र कियद्दूरं गन्तुमिच्छसीति व्यङ्ग्यं, तदेव भङ्ग्यन्तरेण उक्तं दूरगमनेच्छात्वेन प्रकारेण व्यङ्ग्यत्वं, पादनिधानेच्छात्वेन इच्छाया वाच्यत्वमिति न दोषः। ततश्च ध्वनित्वं नात्र सम्भवति, तत्र वाच्यव्यङ्ग्ययोर्भेदात्। केचित्तु एकस्यैव

एकस्मिन् काले वाच्यत्वगम्यत्वासम्भवात् "गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्य्यायोक्तम्" इति लक्षणमभिधाय लक्षणानुपपत्तिमाशङ्क्य भङ्ग्यन्तरेण इत्यस्य कार्य्यादिद्वारेण इत्यर्थमाहुः, व्यङ्ग्यस्याभिधेयत्वायोगात् गम्यस्य यत् कार्य्यादिद्वारेणाभिधानं तत् पर्य्यायोक्तमिति तेषां लक्षणार्थः। उदाहृतश्च तैः,—"स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः। सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः॥" इत्येतत् पद्यम्। अत्र हयग्रीवस्य कार्य्यमुखेन स्वर्गविजयो वर्णितः प्रभावातिशयश्च प्रतिपादितः। अभिनवगुप्ताचार्य्यपादास्तु—"पर्य्यायेण वाच्यादतिरिक्तप्रकारेण व्यञ्जनेनावगमनम् उक्तम् अभिहितं पर्य्यायोक्तम्" इति व्युत्पत्तिलभ्यो लक्षणार्थ इत्याहुः। दीक्षितेन तु—"गम्यस्यापि रूपान्तरेणाभिधाने बहून्युदाहरणानि" इत्यभिधाय दर्शितानि तथाविधानि बहून्युदाहरणानि। तत्र दिङ्मात्रं यथा—"नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ।" अत्र भगवान् वासुदेवः स्वासाधारणरूपेण व्यङ्ग्यः, राहुवधूकुचवैयर्थ्यकारित्वरूपान्तरेण स एवाभिहितः। इदमत्रावधेयं—पर्य्यायता हि शब्दानामेकार्थत्वं, तच्च एकयैव वृत्त्या इति न नियमः, वृत्त्यन्तरेणापि तदर्थप्रतिपादकत्वे पर्य्यायताऽनपायात्; ततश्च पर्य्यायेण उक्तं विवक्षितं यत्र तत् पर्य्यायोक्तमिति व्युत्पत्तिलभ्यार्थस्वीकारेऽपि न काचित् क्षतिरिति सर्वमवदातम्। विवक्षितार्थस्यात्र क्वचित् वाच्य एव भङ्ग्यन्तरेण व्यज्यते क्वचिच्च वाच्यार्थनियतसम्बन्धित्वेन वक्त्रादिवैशिष्ट्यमन्तरेणापि प्रयुक्तशब्देन झटिति व्यज्यते इत्यस्य द्वौ भेदौ। प्रथमस्य यथा—"यं प्रेक्ष्य चिररूढ़ाऽपि निवासप्रीतिरुज्झिता। मदेनैरावणमुखे मानेन हृदये हरेः॥" इत्यत्र शक्रैरावणौ मानमदमुक्तौ जाताविति व्यङ्ग्यं, तदेव प्रकारान्तरेण वाच्य-

दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥२९६॥
सङ्गमय्य सखीं यूना सङ्केते तद्रतोत्सवम् ।
निर्वर्त्तयितुमिच्छन्त्या कयाऽप्यपसृतं ततः ॥२९७॥

इति पर्य्यायोक्तम् । *

समाहितम् ।—

किञ्चिदारभमाणस्य कार्य्यं दैववशात् पुनः ।
तत्साधनसमापत्तिर्या तदाहुः समाहितम् ॥२९८॥

मिति । द्वितीयस्तु—"दशत्यसौ परभृतः" इत्यादि ग्रन्थकृता यदुदाहरिष्यते ) ॥ २९५ ॥

पर्य्यायोक्तमुदाहरति, दशतीति ।—असौ परभृतः कोकिलः, सहकारस्य, कुञ्जनिःस्थितस्यापि शेषः, मञ्जरीं दशति, अहं तं वारयिष्यामि, युवाभ्यां स्वैरं स्वच्छन्दम्, आस्यतां स्थीयतामिति । ( कान्तकामिन्योः सुरतोत्सवस्य व्याघातो मा भूदिति सख्यास्तत्राऽपसरणस्यौचित्ये इतोऽहं गच्छामीति वाचकपदेनाभिधाने वैचित्र्यातिशयस्याभावो जायते इति परभृतवारण-व्याजेन तदपसरणं व्यक्तीकृतमिति पर्य्यायोक्तम् ) ॥ २९६ ॥

सङ्गमय्येति ।—सङ्केते सङ्गमस्थाने, सखीं यूना सह सङ्गमय्य तयोः रतोत्सवं निर्वर्त्तयितुं सम्पादयितुम्, इच्छन्त्या कयाऽपि सख्या, ततः अपसृतमित्यन्वयः ॥ २९७ ॥

समाहितं निरूपयति, किञ्चिदिति ।—किञ्चित् कार्य्यम् आरभमाणस्य कर्त्तुमुपक्रममाणस्य, दैववशात् अकस्मात्, पुनः या तस्य साधनस्य समाधानस्य, समापत्तिः सौकर्य्यं, तत्

* इति पर्य्यायोक्तं व्याजोक्ताद्यलङ्कारनिरूपणं समाप्तम् ।

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥२९९॥

इति समाहितम्।

समाहितम् आहुः। ( कार्य्यं समाधीयते अनेन इति समाहितं, हेत्वन्तरसमाधानरूपत्वात् अन्वर्थसंज्ञेयमिति, ततश्च चिकीर्षितस्य कार्य्यस्य सिद्ध्यर्थमभिमतो यो हेतुस्तदतिरिक्तहेतुना तत्सम्पादनं समाहितमिति लक्षणम्। दैववशादिति तु न नियमपरं, बुद्धिपूर्वककारणान्तरालम्बनेन कार्य्यसमाधानेऽपि अस्य सद्भावात्; तदुक्तं भोजराजेन—"कार्य्यारम्भे सहायाप्तिर्दैवाद्दैवकृतेह या। आकस्मिकी बुद्धिपूर्वाभयी वा तत् समाहितम् ॥" इति। अन्ये तु—"कारणान्तरयोगात् कार्य्यस्य सुकरत्वं समाधिः" इति लक्षणं कृत्वा कारणस्य भेदद्वयात् द्वैविध्यमाहुः, तत्र दैववशादागन्तुकहेतौ "मानमस्याः" इत्यादि उदाहृतम्। द्वितीयस्य यथा—"स्त्रैणं लीलाभरणमभितस्त्रोटयित्वा श्रमाम्भः श्रान्त्या पत्रावलिमृगमदव्याञ्जितश्मश्रुदेहः। केलिक्षोभः कुवलयदृशां मान्मथे कार्य्यभावे पुंवद्भावं घटितमभितः परिपूर्णं निनाय॥" अत्र खेदादिना घटितस्यापि पुंवद्भावस्य केलिक्षोभाख्येन कारणान्तरेण स्त्रैणाभरणत्रोटनादिना स्वरूपोपचयाधानात् समाधिरिति। एतेन भावशान्तेः समाहितत्वं तेषामभिमतमिति दिक्) ॥ २९८ ॥

समाहितमुदाहरति, मानमिति।—अस्याः मानिन्याः, मानं निराकर्त्तुं पादयोः पतिष्यतः मे मम, उपकाराय दिष्ट्या दैवेन, एतत् घनगर्जितम् उदीर्णम्। ( अत्र मानभङ्गाय पादपतनप्रवृत्तस्य दैवादुदीर्णेन घनगर्जितेन तस्यातीवोद्दीपकत्वात्

* इति समाहितं समाहितालङ्कारलक्षणादिकं समाप्तम्।

उदात्तम्

**आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्।**
**उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः ॥३००॥**

अङ्गेन तत्समाधानमिति समाहितमलङ्कारः। विश्वनाथस्तु अस्य समाधिरिति नाम कृत्वा इममेव उदाहृतवान्। तल्लक्षणं यथा—"समाधिः सुकरं कार्य्यं दैवाद्वस्त्वन्तरागमात्" इति)॥ २९९॥

उदात्तं निरूपयति, आशयस्येति।—आशयस्य अभिप्रायस्य, विभूतेः सम्पत्तेः, वा यत् अनुत्तमम् अलौकिकं, महत्त्वम् आधिक्यं, वर्ण्यते इति शेषः, मनीषिणः तम् अलङ्कारम् उदात्तं नाम प्राहुः; वर्णनीयस्य महाशयत्ववर्णनं लोकातिशयसम्पत्तिवर्णनं वा द्विविध उदात्तालङ्कार इत्यभिप्रायः। (तथा च, प्रस्तुतस्य उदाराशयत्ववर्णनेन लोकातिशयसम्पद्वर्णनेन वा यत् वैचित्र्य स एव उदात्तालङ्कार इति निष्कर्षः। अत्र अलौकिकमित्यनेन कविप्रतिभोत्थापितमैश्वर्य्यलक्षणम् असम्भाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं, स्वभावोक्तौ भाविके च यथावत् वस्तुवर्णनमिति उदात्तेन एतयोः भेद इति बोध्यम्। केचित्तु— "यद्वाऽपि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" इति प्राहुः। तन्मते महापुरुषाणामुदात्तचरितानां प्रस्तुतस्याङ्गभावेन उपनिबध्यमानं चरितञ्च उदात्तं, महापुरुषचरितस्योदात्तत्वात्। यथा—"तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी। निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः॥" अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम्। इदमपि प्रकृतस्य माहात्म्यातिशयव्यञ्जकत्वेन लोकातीतविभूतिवर्णनरूपमेवेति मन्यमाना पृथगुपन्यासः न कृत इति बोध्यम्)॥ ३००॥

गुरोः शासनमत्येतुं न शशाक स राघवः।
यो रावणशिरश्छेद-कार्य्यभारेऽप्यविक्लवः ॥३०१॥
रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥३०२॥
पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम्।
सुव्यञ्जितमिति प्रोक्तमुदात्तद्वयमप्यदः ॥ ३०३ ॥

इति उदात्तम्।

आशयमहत्त्वे उदाहरति, गुरोरिति।—यः रावणस्य शिरश्छेदः एव कार्य्यं, तस्य भारः तस्मिन्नपि, अविक्लवः अव्याकुलः, स राघवः गुरोः पितुः, शासनं राज्यत्यागपूर्वकवनगमनादेशम्, अत्येतुम् अतिक्रमितुं, न शशाक। (अत्र रावणवधरूपासाध्यसाधनक्षमस्य तादृशगुरुनिदेशवर्त्तित्वेन अलौकिकं माहात्म्यं प्रतीयते इत्युदात्तत्वम्) ॥ ३०१ ॥

विभूतिमहत्त्वे उदाहरति, रत्नभित्तिष्विति।—आञ्जनेयेन अञ्जनासुतेन हनूमता, कृच्छ्रात् अतिकष्टेन, बहुपर्य्यालोचनया इत्यर्थः, रत्नभित्तिषु सङ्क्रान्तैः प्रतिफलितैः, प्रतिबिम्बानां शतैः वृतः लङ्केश्वरः रावणः, तत्त्वतः ज्ञातः ईदृशैश्वर्य्यशाली नास्तीति अयमेव लङ्केश्वर इति विदित इत्यर्थः। (अत्र लङ्केश्वरस्य तादृशैश्वर्य्यमहत्त्वकीर्त्तनमेव उदात्तालङ्कार इति) ॥३०२॥

द्वैविध्यमुपसंहरति, पूर्वत्रेति।—पूर्वत्र गुरोरित्युदाहरणे, आशयस्य माहात्म्यम्, अत्र रत्नभित्तिष्वित्युदाहरणे, अभ्युदयस्य गौरवं सुव्यञ्जितं सुप्रतीतमिति अदोऽपि उदात्तद्वयं प्रोक्तम्, उभयत्रापि वैचित्र्यस्य सद्भावादिति भावः। (अत्र

* इति उदात्तम् इत्यारभ्य इत्यन्तपाठः प्रमादपतित इति ।

अपह्नुतिः ।—

**अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।**
**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥२०४॥**

"प्रोक्तम्" इत्यत्र "व्यक्तम्" इति पाठान्तरं, तत्र स्फुटं प्रतीयमानमित्यर्थः ) ॥ २०३ ॥

अपह्नुतिं निरूपयति, अपह्नुतिरिति ।—किञ्चित् किमपि, प्रकृतस्य गुणक्रियादिकमिति भावः, अपह्नुत्य अपलप्य, अन्यस्य अर्थस्य अप्रकृतधर्मान्तरस्य, दर्शनं व्यवस्थापनं, सत्यतया निर्द्धारणम् इति यावत्, अपह्नुतिः । ( अत्र प्रकृतधर्मापह्नवेन धर्मान्तरारोपणं, तत्त्वापह्नवरूपके प्रकृतधर्मिनिषेधेन धर्म्यन्तरारोप इत्यनयोर्भेदः दर्शित एव तत्त्वापह्नवरूपके । येषां मते तत्त्वापह्नवरूपकम् इति रूपकभेदो नास्ति, तन्मते तु उभयत्राप्यपह्नुतिः । अत एवोक्तं—"यत्र प्रकृतमुपमेयं कथञ्चित् शब्दतोऽर्थतो वा निषिध्य तत्सदृशाप्रकृतार्थत्वेनैव वर्ण्यते सा अपह्नुतिः" इति । इह अपह्नुत्य इत्यनेन रूपकसामान्यादस्य भेदो दर्शितः । तत्र तु मुखे चन्द्रताद्यवर्णनं न मुखनिषेधपूर्वकमिति । एवञ्च उत्प्रेक्षाऽतिशयोक्त्योरपि निषेधाभावादस्माद्भेदः इत्यवगन्तव्यम् )। उदाहरति, नेति ।—स्मरः कामः, पञ्चेषुर्न, तन्मात्रेषुभिः समग्रजगतामेतादृशपीडनासम्भवादिति भावः, तस्य पत्रिणां सहस्रम्, अस्तीति शेषः । ( अत्र स्मरस्य पञ्चेषुत्वधर्मं प्रतिषिध्य सहस्रेषुत्वरूपधर्मान्तरारोपरूपापह्नुतिः । केचित्तु—"सादृश्यस्थले एव अपह्नुतिः" इत्याहुः । तन्मते 'न पञ्चेषुः' इत्यादौ नापह्नुतिः सादृश्याभावात्, किन्तु 'प्रकृतस्य यदन्यत्वम्' इत्येवंरूपातिशयोक्तिरिति बोध्यम् ) ॥ २०४ ॥

विषयापह्नुतिः।—

चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः।
सेयमग्निमयी सृष्टिर्मयि शीता परान् प्रति ॥३०५॥
शैशिर्य्यमभ्युपेत्यैव परेष्वात्मनि कामिना।
औष्ण्यप्रकाशनात्तस्य सेयं विषयनिह्नुतिः ॥३०६॥

स्वरूपापह्नुतिः।—

अमृतस्यन्दिकिरणश्चन्द्रमा नामतो मतः।
अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः ॥३०७॥

---

विषयापह्नुतिमुदाहरति, चन्दनमित्यादि द्वाभ्याम्।—चन्दनं चन्द्रिका तथा मन्दः दक्षिणः गन्धवाहश्च, इयं सृष्टिः मयि विरहिणीत्यर्थः, अग्निमयी अग्निवत् मया प्रतीयते इत्यर्थः, परान् अन्यान्, अविरहिण इत्यर्थः, प्रति सा सृष्टिः, शीता शीतला, तेषामतीव सुखकरत्वादिति भावः। अत्र कामिना परेषु शैशिर्य्यं शीतलत्वम्, अभ्युपेत्य आरोप्य, तस्यैव आत्मनि औष्ण्यप्रकाशनात् अग्निमयत्वधर्मारोपणेन चन्दनादीनां शैत्यदाहकत्वयोर्विषयभेदस्य कीर्त्तनात्, सा इयं विषयनिह्नुतिरित्यन्वयः ॥ ३०५ ॥ ३०६ ॥

स्वरूपापह्नुतिमाह, अमृतेत्यादि द्वाभ्याम्।—चन्द्रमाः अमृतस्यन्दिनः किरणा यस्य सः, नामतः नाम्नैव, सुधांशुरिति संज्ञामात्रवाधाय इत्यर्थः, न तु अर्थत इति भावः, मतः ख्यातः, तस्य अमृतस्यन्दिकिरणैराह्लादकत्वं विरहिणामनुभवविरुद्धत्वेन तत्त्वतो नास्ति, सन्तापकत्वेन तेषाममङ्गलीयत्वादिति भावः। स्वरूपनिषेधपूर्वकमारोप्यं निर्दिशति, अन्य एवायमिति।—अर्थात्मा तादृशविशेषणविशिष्टस्य चन्द्रमा

इति चन्द्रत्वमेवेन्दौ निवर्त्त्यार्थान्तरात्मता ।
उक्ता स्मरार्त्तेनेत्येषा स्वरूपापह्नुतिर्मता ॥३०८॥
उपमाऽपह्नुतिः पूर्वमुपमास्वेव दर्शिता ।
इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः ॥३०९॥

इति अपह्नुतिचक्रम् । *

इति पदस्य शक्तिप्रतिपाद्यार्थभूतः, अयं चन्द्रमाः, अन्य एव तादृशार्थभिन्न एव, चन्दति आह्लादयतीति व्युत्पत्तिलभ्यार्थात् अन्यपदार्थ एवेत्यर्थः । (यथा, मण्डपादिशब्दा व्युत्पत्तिलभ्येषु मण्डपानकर्तृरूपेषु अर्थेषु अशक्ता गृहादिरूपार्थवाचकास्तद्वदिति भावः) तदाऽसौ किंस्वरूप इत्यपेक्षायामाह, विषनिष्यन्दिदीधितिरिति ।—विषनिष्यन्दिन्यो दीधितयो यस्य तथोक्तः । (अत्र चन्द्रस्य विषनिष्यन्दिकिरणत्वधर्मारोपणम् अमृतस्यन्दिकिरणत्वधर्मनिषेधपूर्वकमिति धर्मिनिषेधपूर्वकधर्म्यन्तरारोपाभावात् न तत्त्वापह्नवरूपकप्रसङ्ग इति बोध्यम्) लक्षणं सङ्गमयति, इतीति ।—इति प्रागुक्तरूपेण, स्मरार्त्तेन विरहिणा, इन्दौ चन्द्रत्वम् आह्लादकत्वस्वरूपं, निवर्त्त्य निषिध्य, अपह्नुत्य इत्यर्थः, अर्थान्तरात्मता वस्त्वन्तरस्वरूपत्वं, विषनिष्यन्दिकिरणात्मकत्वमित्यर्थः, उक्ता आरोपिता, इति अतः, एषा स्वरूपापह्नुतिः स्वरूपस्य स्वाभाविकधर्मस्य अपह्नवपूर्विकेयमपह्नुतिरिति व्युत्पत्त्यर्थः, मता ॥ ३०७ ॥ ३०८ ॥

उपमाऽपह्नुतिरिति ।—उपमायाः सादृश्यस्य, अपह्नुतिः उपमाऽपह्नुतिः साम्यनिषेधपुरःसरतदतिशयस्थापनात्मिकेत्यर्थः, पूर्वम् उपमासु उपमालङ्कारभेदेषु एव, प्रतिषेधोप-

* इति अपह्नुतिचक्रम् अपह्नुतेर्लक्षणादिकं समाप्तम् ।

मायामित्यर्थः, दर्शिता प्रतिषेधोपमाख्यया वर्णिता इत्यर्थः, इति उक्तरूपायाः, अपह्नुत्याः भेदानां विस्तरः लक्ष्येषु यथायथं लक्ष्येषु उदाहरणेषु, लक्ष्य अनुसन्धेय इत्यर्थः। (अत्र च अन्येरुक्ताः कतिपये भेदा यथा—अपह्नवपूर्वकः आरोपः इत्येकः, आरोपपूर्वकोऽपह्नव इति द्वितीयः, छलादिशब्दै-रसत्यताप्रतिपादकैर्वा अपह्नवनिर्देशः तृतीयः इति त्रिविधाः भेदाः ज्ञातव्याः। तत्र आद्या यथा—"पूर्णेन्दोः परिपोषकान्त-वपुषः स्फारप्रभाभास्वरं नेदं मण्डलमभ्युदेति गगनाभोगे जिगीषोर्जगत्। मारस्योच्छ्रितमातपत्रमधुना पाण्डुप्रदोषश्रिया मानोन्नद्धजनाभिमानदलनोद्योगैकहेवाकिनः॥" इति। द्वितीयो यथा—"विलसदमरनारीनेत्रनीलाब्जखण्डा न्यधिवसति सदा यः संयमाधःकृतानि। न तु रुचिरकलापे वर्त्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्य्यश्रियं वः॥" तृतीयो यथा—"उद्भ्रान्तोज्झितगीर्ज्ञगुर्ज्जरवधू कम्पाकुलोच्चैःकुच-प्रेङ्खन्नामलहार-वल्लिविगलन्मुक्ताफलच्छद्मना। साश्रूं त्वद्रिपुभिस्त्वदीययशसां शून्ये मनो धावतां भ्रष्टं राजमृगाङ्क! कुन्दमुकुलस्थूलैः श्रमाम्भः-कणैः॥" "शून्ये" इत्यत्र "मन्ये" इति पाठ सापह्नवोत्प्रेक्षा इत्यपि भेदः। तथा मालारूपाऽपि सम्भवति। एवं एकं निषिध्य बहूनामारोपे अपरा च। किञ्च तत्त्वोक्त्या भ्रान्तिवारणे भ्रान्ताप-ह्नुतिरपि; यदाह जयदेवः,—"भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे। तापं करोति सोत्कण्ठं ज्वरः किं न सखि! स्मरः?"॥ इति। यत्तु—"अन्यत्र तस्यारोपार्थः पर्य्यस्ताप-ह्नुतिस्तु सा। नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्॥" इति; तन्नाहुः,—"प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः" इत्यपह्नुतिसामान्यलक्षणायोगान्नायमपह्नुतिः, किन्तूपमेयोपमानताऽवच्छेदकयोः सामानाधिकरण्यस्य भास-

श्लेषः ।—

श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः ।
तदभिन्नपदं भिन्न-पदप्रायमिति द्विधा ॥३१०॥

मानत्वाद्रूपकमेव । एवमन्येऽपि भेदा ग्रन्थबाहुल्यभिया नोदाहृताः इति दिक् ) ॥ ३०९ ॥

शब्दगतमर्थगतञ्च श्लेषं लक्षयति, श्लिष्टमिति ।—अनेकार्थम् अभिधया वृत्त्या युगपदनेकार्थप्रतिपादकपदवत्, एकेन अभिन्नेन, रूपेण आकारेण, अन्वितं युक्तम्, अर्थभेदात् भिन्नमपि युगपदेकप्रयत्नोच्चार्य्यमाणशब्दस्वरूपमिति यावत्, वचः वाक्यं, श्लिष्टं श्लेषालङ्कारयुक्तम्, इष्टं कविभिरभिलषितम् । ( तथा च, शब्दार्थयोरेकताऽवभासहेतुः सम्बन्धविशेषः श्लेषः, स चात्र शब्दयोरेकप्रयत्नोच्चार्य्यत्वरूपः अर्थयोस्तु एकप्रयत्नोच्चार्य्यमाणशब्देन ऐककालिकत्वबोधरूपः । अन्ये तु शब्दयोर्जतुकाष्ठन्यायेन अर्थयोश्च एकवृन्तगतफलद्वयन्यायेन श्लेष इत्याहुः । यत्र अभिधया वृत्त्या शब्दस्य अनेकार्थत्वं तत्रैव श्लेषः, यत्र तु अनेकार्थसङ्केतितस्यापि शब्दस्य शक्तिसङ्कोचकानां संयोगादीनां सद्भावात् अभिधायाः सङ्कुचितत्वेन एकार्थस्यैव प्रतीतिस्तत्र न श्लेषः । अनेकार्थशब्दानामेकार्थनियन्त्रणनिदानञ्च संयोगादिकमुक्तं विश्वनाथेन—"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ यथा—'सशङ्खचक्रो हरिः' इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्ते" इत्यादि । तादृशस्थले संयोगादिना एकार्थबोधनात् अभिधायां विरतायां पश्चात् व्यञ्जनया अर्थान्तरप्रतीतौ ध्वनित्वमेव न श्लेषः, अभिधया

युगपदर्थद्वयप्रतीतेरभावात् ; यथा—"भद्रात्मनो दुरधिरोह-तनोर्विशालवंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥" इत्यत्र प्रकरणेन प्रथमं प्रकृतः पुरुषमात्र एव प्रतीयते, पश्चात् व्यञ्जनया हस्तीति न श्लेषः । श्लेषे अर्थस्य अनेकत्वं क्वचित् वस्तुतः, क्वचिदेकरूपत्वेऽपि सम्बन्धिभेदेन इति बोध्यम् । आद्ये तावत् शब्दश्लेषः, द्वितीये तु अर्थश्लेष इति विश्वनाथादयः । तत्र अर्थश्लेषो यथा—"स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अहो ! सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥" इति । अत्रैका एवोन्नतिरधोगतिश्च तुलाकोटि-खलसम्बन्धिभेदाद्भिन्नत्वेन प्रतीयते । स्वमते तु सम्बन्धिभेदेन तयोरनेकत्वात् तद्वाचकपदयोरप्यनेकत्वमिति लक्षणसमन्वयः । दोषगुणालङ्काराणां शब्दार्थवृत्तित्वावधारणं तावदन्वयव्यतिरेकाभ्यामिति काव्यप्रकाशकारस्याशयः, तथा हि, शब्दानां परिवृत्त्यसहत्वे शब्दवृत्तित्वं, तत्सहत्वे तु अर्थवृत्तित्वम् । अत्र "अल्पेनोन्नतिमायाति" इत्यादि प्रयोगेऽपि श्लेषनिर्वाहात् अर्थश्लेषः, तदर्थकशब्दान्तरोपादानेऽपि यत्रोभयानुगतार्थप्रतीतिस्तत्रार्थश्लेष एव इति निष्कर्षः । केचित्तु—"त्रिविधश्चायं, द्वयोः प्रकृतत्वे, द्वयोरप्रकृतत्वे, अन्यतरस्यैव प्रकृतत्वे चेति ; स पुनर्द्विविधः, शब्दश्लेषः, अर्थश्लेषश्चेति । तत्र शब्दश्लेषोऽपि द्विविधः पदभेदे, तदैक्ये च ; आद्यः खण्डश्लेषः ; तत्र शब्दश्लेषः शब्दालङ्कारः अर्थश्लेषस्त्वर्थालङ्कार इति काव्यप्रदीपः, द्वयमपि शब्दालङ्कार इत्यन्ये, द्वयमप्यर्थालङ्कार इति अलङ्कारसर्वस्वकारः" इत्याहुः । तत्र द्वयोः प्रकृतत्वे यथा—"गतेषु सैन्येषु सुशर्महेतोः सुलब्धचिह्नः सुजयोत्तरश्रीः । हरेस्तनूजः प्रतिपन्नकालं नृपप्रियाऽन्वेषणतत्परोऽभूत् ॥" इति । अत्र हनूमदर्जुनयोरुभयोरप्युभयकथायां

प्रकृतत्वम्। द्वयोरप्रकृतत्वे यथा—"आज्ञया च पितुरत्रिभिया च श्रीरङ्गोयत मह्नीप्रभवा द्विः। लङ्घितश्च भवता किमु न द्विर्वारिराशिरुदन्काङ्गलङ्घः॥" अत्र रामवैरिणोर्द्वयोरप्य-प्रकृतत्वम्। द्वयोः प्रकृताप्रकृतत्वे यथा—"हिममुक्तचन्द्ररुचिरः सपद्मकः मदयन् द्विजान् जनितमीनकेतनः। अभवत् प्रसादित-सुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः॥" इति। अत्र भगवतो वसन्तादेश्च प्रकृताप्रकृतत्वे। शब्दार्थभेदेन द्विविधोऽप्ययं श्लेषः एकत्रापि सम्भवति, शब्दस्य नानार्थत्वे अर्थयोः श्लिष्टत्वात्, "अर्थभेदेन शब्दभेदः" इति नयेन शब्दस्यापि विभिन्नत्वस्वीकारेण शब्दयोः श्लिष्टत्वाच्च। अत्रायं विवेकः,—नानार्थकशब्दश्लेषे शब्दस्यैव वैचित्र्यजनकत्वेन प्राधान्यात् शब्दालङ्कारमध्ये अस्य निरूपणमुचितमित्यपि न वाच्यं, शब्दस्यार्थद्वयप्रतीतिरेव वैचित्र्य-जनकत्वेनार्थसापेक्षतया स्वतो वैचित्र्याभावतया च शब्दस्य मुख्यत्वाभावात ; अत एवार्थालङ्कारमध्य श्लेषस्य निरूपणं कृतमिति दिक्) तस्य अभङ्ग-सभङ्गत्वेन प्रथमं द्वैविध्य-माह, तदिति।—तत् वचः, अभिन्नपद शक्यताऽवच्छेदकस्य विभिन्नत्वेऽपि एकप्रकृतिप्रत्ययसमासादिघटितत्वेन अभिन्नानि पदानि यस्मिन् तत्, तथा भिन्नानाम् अनेकप्रकृतिप्रत्ययादि-घटितत्वेन विलक्षणानां, पदानां प्रायो बाहुल्यं यत्र तत् तादृशम्, इति उक्तरूपेण, द्विधा द्विप्रकारं, भवतीति शेषः। (तथा च, अभिन्नपदवाक्ये अभङ्गश्लेषः भिन्नपदवाक्ये सभङ्ग-श्लेष इति द्विविधत्वम्। शेषस्तु समधिकचमत्कारितया कविभि-र्बाहुल्येन प्रयुज्यते इति प्रायपदाभिप्रायः। विश्वनाथस्तु वर्णप्रत्ययादिभेदेन शब्दश्लेषस्याष्टविधत्वमाह, यथा:—"वर्ण-प्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि। श्लेषात् विभक्तिवचन-भाषाणामष्टधा च सः॥" इति। तत्र वर्णश्लेषो यथा—"प्रति-

अभिन्नपदश्लेषोदाहरणम्।—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति लोकस्य हृदयं मृदुभिः करैः॥३११॥

भिन्नपदश्लेषोदाहरणम्।—

दोषाकरेण सम्बध्नन् नक्षत्रपथवर्त्तिना।
राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते?॥३१२॥

कूलतामुपगते हि विधौ विफलत्वमिति बहुमाधनता। अवलम्बनाय दिनभर्त्तरभून्न पतिष्यतः करसहस्रमपि॥" इत्यत्र विधाविति विधिविधुशब्दयोरिकारोकारयोर्वर्णयोः श्लेषः। एवं प्रत्ययादिश्लेषादाहरणानि तत्र द्रष्टव्यानि )॥ ३१०॥

तत्राभिन्नपदमुदाहरति, असाविति।—उदयम् उन्नतिम् उदयाचलञ्च, आरूढः,कान्तिमान् कमनीयमूर्त्तिः शुभ्रकिरणश्च, रक्तमण्डलः अनुरक्तप्रकृतिः लोहितबिम्बश्च, राजा नृपः शशी च, मृदुभिः अल्पैः अतीक्ष्णैश्च, शीतलैश्चेत्यर्थः, करैः राजस्वैः किरणैश्च, लोकस्य हृदयं हरति। ( अत्र प्रकरणादिनियमाभावात् राजचन्द्रौ द्वावपि वाच्यौ, उदयादिपदान्यपि एकप्रकृतिप्रत्ययसाधितत्वादभिन्नानीति अभङ्गश्लेषः )॥ ३११॥

भिन्नपदमुदाहरति, दोषाकरेणेति।—प्रदोषः रजनीमुखं प्रकृष्टदोषयुक्तः कश्चित् पुरुषश्च, दोषाकरेण निशाकरेण दोषस्य आकरेण च, तथा नक्षत्रपथे आकाशपथे वर्त्तते इति तथोक्तेन क्षत्रपथे क्षत्रोचिताचारे न वर्त्तमानेन च, राज्ञा चन्द्रेण नृपेण च, सम्बध्नन् संयोगं प्राप्नुवन् सन्, अप्रियं प्रियारहितं द्वेष्यञ्च, माम् इत्थम् एवंप्रकारेण, न बाधते किम्? न पीड़यति किम्? अपि तु पीड़यत्येवेत्यर्थः, ( अत्र दोषाकरेणेत्यादिपदानि दोषां रात्रिं करोतीत्यादिव्युत्पत्त्या दोषस्याकर इत्यादिव्युत्पत्त्या च

श्लेषस्यालङ्कारान्तराङ्गत्वम् ।—

**उपमारूपकाक्षेप-व्यतिरेकादिगोचराः ।**
**प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥२१३॥**

---

प्रकृतिप्रत्ययसमासैर्भिद्यन्त इति सभङ्गश्लेषः, राजेत्यत्र तु अभङ्गः, तदत्र सभङ्गाभङ्गश्लेष इति । विश्वनाथस्तु सभङ्गाभङ्गात्मकं तृतीयभेदमङ्गीकृत्यास्य त्रैविध्यमाह, यथा—"पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः" इति । केवलसभङ्गोदाहरणं विश्वनाथेन दर्शितम्; यथा—"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! । विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥" पृथूनां कार्त्तस्वराणां स्वर्णानां, तथा पृथुकानां बालकानाम्, आर्त्तस्वरस्य रोदनस्य, पात्रं, भूषिता अलङ्कृताः, भुवि उषिताश्च, निःशेषपरिजना यत्र तत्, विलसद्भिः करेणुभिः हस्तिभिः, तथा बिले सीदन्ति इति बिलसत्का मूषिकाः, तेषां रेणुभिश्च गहनम् इति श्लिष्टपदानां भिन्नप्रकृत्यादिकत्वात् भिन्नत्वमितीति सभङ्गश्लेषः । तथा समास-भेदेन स्वरभेदात्तद्भेदेन च शब्दभेदावश्यकत्वात्तत्र जतुकाष्ठ-न्यायेन शब्दयोरेव श्लिष्टत्वात् शब्दश्लेषश्च इति ) ॥ २१२॥

पूर्वोदाहरणद्वये श्लेषस्य प्राधान्यं दर्शयित्वा अलङ्कारान्तराणामपि शोभाजनकत्वेनाङ्गभूतं तं दर्शयिष्यन्नाह, उपमेति ।—प्रागेव उपमारूपकाक्षेपव्यतिरेकादिः गोचरो येषां तादृशाः, श्लेषाः दर्शिताः अलङ्कारान्तरनिर्वाहकतया अङ्गत्वेन निरूपिताः इत्यर्थः, अपरे केचन अपरालङ्काराङ्गभूता इत्यर्थः, दर्श्यन्ते । ( अत्र उपमा च साधारणधर्मप्रयोगवती बोध्या, ततः साधारणधर्मप्रयोगे तथा भवत्वे च—"अशोकरामिवातानाम्" इत्यादिधर्मोपमा श्लेषोपमादौ शब्दश्लेषः, "शालिवोद्यानमालेयं

श्लेषभेदाः।—

अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोऽपरः।
विरुद्धकर्मा चास्त्यन्यः श्लेषोऽनियमवानपि ॥३१४॥
नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि।
तेषां निदर्शनेष्वेव रूपमाविर्भविष्यति ॥३१५॥

अभिन्नक्रियश्लेषः।—

वक्राः स्वभावमधुराः शंसन्त्यो रागमुल्बणम्।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान्॥३१

मालकाननशोभिनी" इत्यादिसमानोपमायान्तु शब्दश्लेष रूपकपदमपि अत्र साधारणधर्मप्रयोगवत-श्लिष्टरूपकादि बोध्यम्। आक्षेपश्च "अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके इत्यादि श्लिष्टाक्षेप एव। व्यतिरेकोऽपि साधारणधर्मप्रयो वानेव। आदिना समासोक्त्यर्थान्तरन्यासादीनां परिग्रहः एवमन्यत्रापि बोध्यम )॥ ३१३ ॥

दर्शयिष्यमाणश्लेषभेदानाह, अस्तीति द्वाभ्याम्।—कश्चि श्लेषः, अभिन्नक्रियः, अपरः अविरुद्धक्रियः, अन्यः विरुद्ध कर्मा च, तथा अनियमवानपि, नियमाक्षेपरूपोक्तिः, अविरोधी तथा विरोधी अपि अस्ति, निदर्शनेषु वक्ष्यमाणेषु उदा हरणेषु एव, तेषां भेदानां, रूपं स्वरूपम, आविर्भविष्यति प्रकाशिष्यते। (भोजराजस्तु भिन्नपदश्लेषः भिन्नक्रियश्लेष भिन्नकारकश्लेषः अभिन्नपदश्लेषः अभिन्नक्रियाश्लेषः अभिन्न कारकश्लेषश्च इति षड्भेदमाह; उक्तञ्च—"पदक्रियाकारकै श्याद्भिन्नाभिन्नैः स षड्विधः" इति )॥ ३१४ ॥ ३१५ ॥

तत्र अभिन्नक्रियमुदाहरति, वक्रा इति।—कान्ताभिः

अविरुद्धक्रियश्लेषः ।—

मधुरा रागवर्द्धिन्यः कोमलाः कोकिलागिरः ।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥२१७॥

क्षिप्ताः प्रक्षिप्ताः आनेतुं प्रेरिताश्च, वक्राः तिर्य्यक् निक्षिप्ताः कुटिलमार्गदर्शयित्र्यश्च, स्वभावेन मधुराः मनोहारिण्यः मिष्ट-भाषिण्यश्च, तथा उल्वणम् अतिप्रवृद्धं, रागं लौहित्यं प्रेमानु-रागञ्च, शंसन्त्यः सूचयन्त्यः प्रकाशयन्त्यश्च, दृशः नयनानि, दूत्यश्च प्रियान् कर्षन्ति आवर्ज्जयन्ति, आकृष्य नयन्तीत्यर्थः। (अत्र कर्षन्ति इति एकस्यां क्रियायां दृशां दूतीनाञ्च श्लिष्टपदत्वेन सम्बन्धात् अभिन्नक्रियो नाम श्लेषः, स च तुल्ययोगिताऽलङ्कारस्य पोषकत्वात् तदङ्गभूत इति मन्तव्यम्। केचित्तु एकया क्रियया वाक्यद्वयस्य दीपनात् प्रधानस्य दीपकस्य अङ्गमित्याहुः) ॥ २१६ ॥

अविरुद्धक्रियमुदाहरति, मधुरा इति ।—मधुराः मनो-हारिण्यः माधुर्य्याख्यस्वाभाविकाङ्गनालङ्कारवत्यश्च, (माधुर्य्य-लक्षणन्तु उक्तं यथा—"सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता" इति) रागवर्द्धिन्यः उद्दीपकत्वात् प्रणयाविष्करणाच्च अनुरागं वर्द्धयन्त्यः, कोमलाः सुखश्रवाः मृद्वङ्ग्यश्च, तथा मदकलाः वसन्तागमनजनितहर्षेण मधुरास्फुटाः सौभाग्यादिजनितगर्व्वेण मृदुमन्दभाषिण्यश्च, (मदलक्षणन्तूक्तं यथा—"मदो विकारः सौभाग्य-यौवनाद्यवलेपजः" इति) तथा आसितेक्षणा आसिते उपविशति, अन्तःप्रमोदजननात् निश्चलीभवति इति यावत्, ईक्षणे नयने याभिस्ताः, सर्व्वोऽपि मधुरं शब्दमाकर्णयन् निश्चलाक्षो भवतीति भावः, कोकिलानां गिरः वाचः, आकर्ण्यन्ते श्रूयन्ते, तथा कोकिलागिरः कोकिलानां गिर इव गिरः यासां ताः

विरुद्धक्रियश्लेषः।—

रागमादर्शयन्नेष वारुणीयोगवर्द्धितम्।
तिरोभवति घर्मांशुरङ्गजस्तु विजृम्भते ॥३१८॥

नियामकश्लेषः।—

निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता।
शरेष्वेव नरेन्द्रस्य मार्गणत्वञ्च वर्त्तते ॥ ३१९ ॥

---

मधुरभाषिण्य इत्यर्थः, असितेक्षणाः नीलोत्पललोचनाः कृष्णचक्षुष इति वा, श्लथन्ते च आलिङ्गन्ते च, कामिभिरिति शेषः। (अत्र आकर्षयन्ते श्लिष्यन्ते च इति क्रियापदद्वितयस्य प्राधान्यतः समुच्चयेन उपात्तस्य मधुरा इत्यादिभिः श्लिष्टैः पदैः कोकिलादिभिः इति असितेक्षणाः इति वा विशेष्यैकपदत्वं पर्य्यायतः सम्बन्धो भवति। स च परस्परमविरुद्धः इति अविरुद्धक्रियोऽयमभङ्गश्लेषः पूर्ववत् तुल्ययोगितामिव पुष्णातीति तदङ्गम। भोजस्तु त्रिभिन्नक्रिययोभिन्नार्थकरूपाणां पदार्थानामुपश्लेषात् भिन्नक्रियश्लेषोऽयमित्याह) ॥ ३१७॥

विरुद्धक्रियाद्वयश्लेषमुदाहरति, रागमिति।—एष घर्मांशुः सूर्य्यः, वारुण्याः पश्चिमाशायाः सुरायाश्च, योगेन समाश्रयेण पानेन च, वर्द्धितं रागं लौहित्यम् अनुरागञ्च, आदर्शयन् प्रकटयन्, तिरोभवति अस्तं गच्छति, अङ्गजस्तु कामस्तु, विजृम्भते उद्यातते। (अत्र तिरोभवनजृम्भणक्रिये परस्परं विरुद्धे इति विरुद्धक्रियश्लेषस्तथैव तुल्ययोगितां परिपुष्णातीति तदङ्गम्) ॥ ३१८ ॥

नियमवन्तं श्लेषमुदाहरति, निस्त्रिंशत्वमिति।—अस्य नरेन्द्रस्य निस्त्रिंशत्वं निर्गतास्त्रिंशतोऽङ्गुलिभ्य इति व्युत्पत्त्या

त्रिंशदङ्गुल्यधिकपरिमाणवत्त्वं निर्दयत्वञ्च, ("अथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु" इति मेदिनी ) असौ खड्ग एव, न तु हृदये इति भावः, तस्य खड्गान्यस्ते त्रिंशदङ्गुलाधिकपरिमाणत्वमासीत् हृदये निर्दयत्वं नासीदिति समुदितार्थः, वक्रता कौटिल्यं प्रतिकूलता च, धनुष्येव, न व्यवहारे इति भावः, धनुष्येव कौटिल्यं न तु लोकव्यवहारे प्रतिकूलत्वमिति निष्कर्षः; मार्गणत्वं बाणत्वं याचकत्वञ्च, शरेषु एव, न तु आत्मनि इति भावः, वर्त्तते इति सर्वत्रान्वेतव्यम् । ( अत्र प्रत्येकमेवकारेण निस्त्रिंशत्वादिपदानां द्वितीयार्थाः व्यवच्छेद्येषु निषिद्धतया प्रतीयन्ते इति पदानामनेकार्थवत्त्वात् श्लेषः, स च एवकारेण नियमद्योतनात् नियमवान् । इह परिसङ्ख्याऽलङ्कार एव प्रधानं तदङ्गभूतश्च श्लेषः इति बोध्यम् । परिसङ्ख्यालङ्कारस्य ग्रन्थकृता अनुक्तः परं वैचित्र्यसद्भावात् अपरैरुक्तोऽपि स्वीकार्य्यः; उक्तञ्च विश्वनाथेन—'प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥ परिसङ्ख्या—" इति । आर्थपरिसङ्ख्यायाम एवकाराभावेऽपि अन्यव्यवच्छेदरूपनियमः सामर्थ्यादेव प्रतीयते, यथा —"यस्मिंश्च राजनि जितजगति परिपालयति महीं चित्रकर्मसु वर्णसङ्कराः, चापेषु गुणच्छेदाः" इत्यादि ; अत्र चित्रकर्मस्वेव वर्णानां नीलपीतादीनां सङ्कराः मिश्रणानि, न तु प्रजासु वर्णानां ब्राह्मणादीनां सङ्करा इति स्फुटम् अर्थद्वयस्य नियमस्य च प्रतीयमानत्वात् नियमश्लेषाख्यपरिसङ्ख्ययोरङ्गाङ्गिभावेनोपपत्तिरवगन्तव्या । न च "विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । अत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥" इत्यनेन नियमपरिसङ्ख्ययोर्भेदप्रतीतेः कथमनयोः नियमपरिसङ्ख्ययोरेकत्र समावेश इति वाच्यम् ? मतेऽस्मिन् परिसङ्ख्याया अन्यव्यपोह-

पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति।
अथवा दृश्यते रागि-मिथुनालिङ्गनेष्वपि ॥३२०॥
महीभृत् भूरिकटकस्तेजस्वी नियतोदयः।
दक्षः प्रजापतिश्चासीत् स्वामी शक्तिधरश्च सः॥३२१॥

मात्रप्रतीतिरूपार्थत्वात् व्यपोहस्यात्र स्फुटं प्रतीयमानत्वाच्च। वैयाकरणनये एव तादृग्लक्षणनियमपरिसङ्ख्ययोर्भेदाङ्गीकारे न कश्चिद्दोष इति बोध्यम् )॥ ३१८ ॥

नियमाक्षेपरूपोक्तिश्लेषमुदाहरति, पद्मानामिति।—त्वयि रक्षति सति पद्मानामेव दण्डेषु नालेषु, न तु दण्डनामकोपायेषु इति भावः, अथवा रागिणः अनुरक्तस्य, मिथुनस्य स्त्रीपुंसयोः द्वन्द्वस्य, आलिङ्गनेषु अपि कण्टकः तीक्ष्णाग्रः तर्वारवयवविशेषः क्षुद्रशत्रुः रोमाञ्चश्च, ("रोमाञ्चे क्षुद्रशत्रौ च तरोरङ्गे च कण्टकः" इति शाश्वतः) दृश्यते। (अत्र पद्मानामेवेति नियमस्य अथवेत्यादिना आक्षेपरूपा उक्तिरिति नियमाक्षेपरूपोक्तिश्लेषः; स च पूर्वार्द्धे परिसङ्ख्यायाः प्राधान्यात् उभयोरेवार्थयोश्च एकत्र निहितकण्टकस्य वाक्यद्वयोद्दीपनेन दीपकस्य प्राधान्याच्च तदङ्गमित्यवधेयम् )॥ ३२० ॥

अविरोधिनमुदाहरति, महीभृदिति।—सः महीभृत् राजा, भूरिकटकः बहुस्कन्धावारः, तेजस्वी प्रतापवान्, तथा नियतोदयः सततोन्नतिशाली, दक्षः निपुणः, प्रजापतिः प्रजापालः, स्वामी प्रभुः, शक्तिधरः प्रभावोत्साहमन्त्रजशक्तिसम्पन्नश्च, आसीत्। पक्षे—महीभृत् पर्वतः,भूरिकटकः विशालनितम्बः; तेजस्वी दीप्तिमान्, सूर्य्य इत्यर्थः, नियतोदयः प्रतिदिवसं जातोदयः; तथा दक्षः तदाख्यो राजा च, प्रजापतिः

अच्युतोऽप्यवृषच्छेदी राजाऽप्यविदितक्षयः।
देवोऽप्यविबुधो जज्ञे शङ्करोऽप्यभुजङ्गवान् ॥२२२॥

इति श्लेषचक्रम्। *

विशेषोक्तिः।—

गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम्।
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥२२३॥

सृष्टिकर्त्ता, स्वामी विशाखश्च, कार्त्तिकेय इत्यर्थः, ("स्वामी प्रभु-विशाखयोः" इति मेदिनी) शक्तिधरः शक्त्याख्यास्त्रविशेषधारी, आसीत्। (अत्र महीभृत्-तेजस्वि-दक्ष-स्वामिशब्दाः राजपक्षे विशेषणतया पक्षान्तरे च विशेष्यतया अन्वेतव्याः। महीभृदादीनां चतुर्णां ये एकैकविशेषधर्मास्ते सर्वे एकस्मिन्नेव राजनि विद्यन्त इति वैचित्र्यं बोध्यम्। किञ्च महीभृदादिश्लिष्टपदार्थानां परस्परसम्बन्धे अविरोधात् अयम् अविरोधी श्लेषः) ॥ ७२१ ॥

विरोधमुदाहरति, अच्युत इति।—अच्युतः सत्पथादभ्रष्टः विष्णुश्च अपि, अवृषच्छेदी वृषः धर्मः वृषरूपो कंसानुचरः कश्चिदसुरश्च, तस्य छेदी न भवतीति तथोक्तः, राजा नृपतिः चन्द्रश्च अपि, अविदितः अज्ञातः, क्षयः सम्पत्तिनाशः रोगविशेषश्च येन तादृशः, देवः राजा अमरश्च अपि, अविबुधः विगतपण्डितः देवश्च न भवतीति तथोक्तः, शङ्करः शुभकृत् हरश्च अपि, अभुजङ्गवान् दुर्जनरहितः सर्परहितश्च, जज्ञे, स इति कर्तृपदमध्याहार्य्यम्। (अत्र अच्युतादिपदानां द्वितीयार्थे विष्ण्वादौ वृषच्छेद्यादिपदानां द्वितीयार्थस्य अभावात् विरुद्ध इति विरोधवान् अयं श्लेषः विरोधाभासस्याङ्गम्) ॥ ७२२ ॥

विशेषोक्तिं निरूपयति, गुणेति।—विशेषः प्रस्तुतस्य

* इति श्लेषचक्रं श्लेषस्य श्लेषालङ्कारस्य, चक्रं समूहः।

गुणविशेषोक्तिः।—

न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः।
तथाऽपि जितमेवासीदमुना भुवनत्रयम् ॥३२४॥

वीर्य्याद्यतिशयः, तस्य दर्शनायैव प्रतिपत्तये एव, गुणजाति-क्रियादीनाम् (आदिपदेन द्रव्याणाञ्च) यत्तु वैकल्यदर्शनं कार्य्यसिद्धौ अनुपयोगित्वप्रतिपादनं, सा विशेषोक्तिर्नाम अलङ्कार इष्यते। (अतिशयोक्तौ प्रस्तुतस्य विशेषदर्शनसद्भावेऽपि गुणादीनां वैकल्यप्रतिपादनं नास्ति विशेषोक्तौ तदस्तीत्य-नयोर्भेदः। एवकारेण विशेषदर्शनाभावे नायमलङ्कार इति ध्वनितम्। विश्वनाथादयस्तु—"सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा" इति लक्षणमाहुः। स्वमते तु सत्यपि हेतौ कार्य्याभाववर्णनस्थले कार्य्यकारणपौर्वापर्य्यविपर्य्ययवदति-शयोक्तिरेव इति बोध्यम्) ॥ ३२३ ॥

तत्र गुणवैकल्ये विशेषोक्तिमुदाहरति, नेति।—पुष्पधन्वनः आयुधम् अस्त्रं, न कठोरं न वा तीक्ष्णं, पुष्पमयत्वादिति भावः, तथाऽपि अमुना भुवनत्रयं जितमेव आसीत्। (अत्र कामस्य आयुधगतकठोरत्वतीक्ष्णत्वाभावेऽपि भुवनत्रयजयवर्णनेन तस्य वीर्य्योत्कर्षरूपविशेषप्रदर्शनात् आयुधस्य कठोरत्वतीक्ष्णत्व-रूपयोः गुणयोर्वैकल्यप्रतिपादनाच्च गुणवैकल्यरूपा विशेषोक्तिः। नन्वत्र भुवनजये कठोरतीक्ष्णास्त्रस्यैव प्रसिद्धहेतुत्वस्वीकारे तदभावेऽपि कामकर्त्तृकतज्जये कारणान्तरं स्वाभाविकत्वं वा कल्पनीयं, ततश्च विभावनाऽपि स्यादिति न वाच्यं, विभाव-नायां गूढ़कारणस्य स्वाभाविकत्वस्य वा विभावने तात्पर्य्य-मस्ति, अत्र तु उपकरणमन्तरेण कार्य्यनिष्पादकतया वर्णनीयस्य उत्कर्षप्रतिपादने तात्पर्य्यमित्यनयोर्भेदः) ॥ ३२४ ॥

जातिविशेषोक्तिः ।—

न देवकन्यका नापि गन्धर्वकुलसम्भवा ।
तथाऽप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥३२५॥

क्रियाविशेषोक्तिः ।—

न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः ।
न च रक्ताऽभवद्दृष्टिर्जितञ्च द्विषतां बलम् ॥३२६॥

द्रव्यविशेषोक्तिः ।—

न रथा न च मातङ्गा न हया न च पत्तयः ।
स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥३२७॥

जातिवैकल्ये विशेषोक्तिं दर्शयति, नेति ।—एषा देवकन्यका न, गन्धर्वकुलसम्भवाऽपि न, तथाऽपि वेधसः ब्रह्मणोऽपि, तपोभङ्गं विधातुम् अलं शक्ता । ( अत्र देवत्वगन्धर्वत्वरूपजातिवैरपेक्ष्येण तपोभङ्गसामर्थ्यवर्णनात् नायिकायाः मनोमोहित्वातिशयरूपविशेषः प्रतिपादित इति जातिवैकल्ये विशेषोक्तिः ) ॥ ३२५ ॥

क्रियावैकल्ये विशेषोक्तिं दर्शयति, नेति ।—भ्रुकुटिः न बद्धा, दशनच्छदः अधरोऽपि, न स्फुरितः न कम्पितः, दृष्टिश्च न रक्ता अभवत्, तथाऽपि द्विषता शत्रूणां, बलं जितञ्च । ( अत्र बन्धनं स्फुरणञ्च क्रिया, रक्तत्वं गुणः, तेषाञ्च वैकल्यप्रतिपादनं वर्णनीयस्य वीरस्य उत्कर्षद्योतनाय, अतोऽत्र क्रियागुणवैकल्ये विशेषोक्त्योः सङ्करः ) ॥ ३२६ ॥

द्रव्यवैकल्ये विशेषोक्तिं दर्शयति, नेति ।—स्त्रीणां रथा न, मातङ्गाश्च न, हया न, पत्तयश्च न, जगत्त्रयजयाय सन्ति इति शेषः, तथाऽपि अपाङ्गदृष्ट्या एव केवलं कटाक्षेणैव, जगतां त्रयं

हेतुविशेषोक्तिः।—

एकचक्रो रथो यन्ता विकलो विषमा हयाः।
आक्रामत्येव तेजस्वी तथाऽप्यर्को नभस्तलम्॥३२८॥
सैषा हेतुविशेषोक्तिस्तेजस्वीति विशेषणात्।
अयमेव क्रमोऽन्येषां भेदानामपि कल्पने॥३२९॥

इति विशेषोक्तिचक्रम्। *

---

जीयते। (अत्र रथादीनां द्रव्याणां वैकल्यप्रतिपादनरूपा विशेषोक्तिः)॥ ३२७॥

गुणादिवैकल्येन विशेषोक्तिभेदान् लक्षयित्वा आदिपद-सूचितानां प्रकारान्तरेणापि सम्भाव्यमानानां भेदानां दिग्-दर्शनार्थं हेतुविशेषोक्तिं दर्शयति, एकचक्र इति।—रथः एकचक्रः, यन्ता सारथिः, विकलः अङ्गहीनः, अनूरुत्वादिति भावः, हयाः अश्वाः, विषमाः अयुग्माः, सप्तसङ्ख्याकत्वादिति भावः, तथाऽपि अर्कः सूर्यः, नभस्तलम् अतिविस्तीर्णमाकाश-मार्गम्, आक्रामति एव, यतः सः तेजस्वीत्यन्वयः। (अन्येषा-मपि सुदूरप्रयाणे बहुचक्ररथस्य अविकलाङ्गसारथेः युग्महया-नाञ्च आवश्यकत्वं दृश्यते, सूर्यस्य तदभावेऽपि विजयोपपत्ति-सिद्धिः इति सूर्यस्योत्कर्षातिशयः, तत्र हेतुः तेजस्वीति, तेजस्विनः हि स्वार्थसिद्धौ सहायं नापेक्षन्ते। ततश्च अत्र तेजस्वीति विशेषणेन वर्णनीयस्य सूर्यस्य विशेषप्रतिपादनात् रथादिगतबहुचक्रत्वादिधर्माणां वैकल्यस्य गम्यमानत्वाच्च हेतु-विशेषोक्तिरियम्। "नभस्तलम्" इत्यत्र "जगत्त्रयम्" इति पाठो न सम्यक्, पातालादौ सूर्यगतेः प्रसिद्ध्यभावात्)॥ ३२८॥

सैषेति।—तेजस्वीति विशेषणात्, हेतुगर्भादिति भावः, सा

---

इति विभावनाविशेषोक्त्यलङ्कारद्वयस्य अवयवादिकं समाप्तम्।

तुल्ययोगिता ।—

**विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित् ।**
**कीर्त्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥२३०॥**

एषा विशेषोक्तिः, हेतुविशेषोक्तिः सहेतुका इत्यर्थः, अन्येषामपि भेदानां विशेषाणां, कल्पने अयमेव क्रमः नियमः, यथा हेत्वलङ्कारसङ्कावेनास्या भेदः तथाऽन्येषामपि अलङ्काराणां सङ्कावेनेति भावः ॥ २२९ ॥

तुल्ययोगितां निरूपयति, विवक्षितेति ।—विवक्षिताः प्रस्तुतगतत्वेन वक्तुम् इष्टाः, ये गुणाः तैरुत्कृष्टैः विख्यातैः, अप्रस्तुतैरिति शेषः, समीकृत्य तुल्यपक्षीकृत्य, कस्यचित् प्रस्तुतस्य, स्तुतिनिन्दार्थं स्तुत्यर्थं निन्दार्थं वा, यत् कीर्त्तनं सा तुल्ययोगिता तुल्यानां प्राकरणिकाप्राकरणिकनिबन्धनसादृश्यवतां, योगिता स्तुतिनिन्दार्थम् एकधर्मान्वयित्व यत्र सा तुल्ययोगितानाम अलङ्कारः, मता कथिता इत्यन्वयः। ( विवक्षितगुणोत्कृष्टैरिति बहुत्वमविवक्षितं, द्वाभ्यामेकेन वा समीकरणेऽपि अस्याः सद्भावादिति बोध्यम् । दीपके वाक्यान्तरीयपदस्य अनुषङ्गादिना वाक्यान्तरार्थोद्दीपकत्वम्, इह तु स्तुतिनिन्दार्थसमीकरणमित्यनयोर्भेदः। उपमायां प्रस्तुतस्य गुणोत्कृष्टेन साम्यं, तच्च वाच्यं व्यङ्ग्यं वा इति नियमादिह स्तुतिनिन्दार्थं समीकरणे व्यङ्ग्यसाम्ये कथं नोपमा इत्यपि न वाच्यम्, आलङ्कारिकैः व्यञ्जनाया वृत्तित्वस्वीकारात् उपमायां व्यङ्ग्यस्यापि साम्यस्य प्रतीतिः शाब्दोति ज्ञेया, व्यञ्जनया उपस्थितस्यापि सादृश्यस्य वृत्तिवेद्यत्वेन शाब्दबोधाभ्युपगमात् ; इह तु सर्वेषां समकक्षतया शाब्दबोधविषयत्वात् पर्य्यवसाने सादृश्यप्रतीतिरित्यनयोर्भेदः। तथा च विवक्षितगुणशालित्वेन अप्रस्तुतैः सह प्रस्तुतस्य

यमः कुबेरो वरुणः सहस्राक्षो भवानपि ।
बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥३३१॥
सङ्गतानि मृगाक्षीणां तड़िद्विलसितानि च ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥३३२॥

इति तुल्ययोगिता ।

समकक्षतया ताद्दग्गुणवस्तुकीर्त्तनेन स्तुतिर्निन्दा वा तुल्ययोगितेति निष्कर्षः । विवक्षितगुणोत्कृष्टैरप्रस्तुतैरेव तुल्ययोगिता इति तु न नियमः, प्रस्तुतेन प्रस्तुतसमीकरणेऽप्यस्याः सद्भावदर्शनात् ; यथा—"कटाक्षा मधुरालापा विलासास्ते च ते शुभे ! । जगत्त्रय प्रवृत्तस्य कन्दर्पस्य महद्बलम् ।" इत्यत्र कटाक्षादयः सर्वेऽपि प्रस्तुताः । नव्यास्तु—प्राकरणिकानामप्राकरणिकानां वा एकधर्मान्वयित्वं तुल्ययोगितेत्याहुः, तथा चोक्तं—"प्रकृतानां तादृक्त्वे भिन्नानां वाऽपि तुल्ययोगित्वे" इति । न च प्रस्तुताप्रस्तुतयोरेकधर्मसम्बन्धेन तुल्ययोगितास्वीकारे दीपकस्य विषयपरिहारः स्यादिति वाच्यम् ; स्वमते वाक्यान्तरीयपदस्यानुषङ्गादिना वाक्यान्तरार्थोद्दीपकत्वस्यैव दीपकालङ्कारत्वादिति बोध्यम् ) ॥ ३३० ॥

तत्र स्तुतावुदाहरति, यम इति ।—यमः कुबेरः वरुणः सहस्राक्षः इन्द्रः, तथा भवानपि अनन्यविषयाम् अनन्यगतां, लोकपाल इति श्रुतिम् आख्यां, बिभ्रति । (अत्र लोकपालत्वरूपो गुणः प्रस्तुते राज्ञि विवक्षितः, तेन च गुणेन उत्कृष्टैः यमादिभिः सह समकक्षतया कीर्त्तनेन स्तुतिरूपा तुल्ययोगिता ) ॥ ३३१ ॥

निन्दायामुदाहरति, सङ्गतानीति ।—मृगाक्षीणां सङ्गतानि

विरोधः ।—

विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।
विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥३३३॥

सङ्गमाः, तडिद्विलसितानि च स्वयं स्वष्यानुरागेणैव, न तु अन्यप्रेरणया इति भावः, घनारब्धानि घनं निविड़ं, गाढं यथा तथा इत्यर्थः, अन्यत्र—घनैर्मेघैः, आरब्धानि अपि, क्षणद्वयं द्वित्रणमपि, न तिष्ठन्ति, क्षणमात्रस्थायित्वात्तेषामिति भावः। (अत्र क्षणस्थायित्वरूपो गुणो वर्णनीये स्त्रगाद्योसङ्गमे विवक्षितः, तेन च अप्रस्तुततडिद्विलसितस्य समकक्षतया वर्णनेन निन्दाप्रतीयमाना तुल्ययोगिता, सा च घनारब्धानीति श्लेषानुप्राणिततया समधिकां चारुतां पुष्णातीति बोध्यम्) ॥ ३३२ ॥

विरोधं लक्षयति, विरुद्धानामिति ।—विशेषस्य प्रस्तुतगतोत्कर्षस्य, दर्शनाय प्रतिपादनाय एव, विरुद्धानां परस्परविरोधिनां, विरुद्धानां पदार्थानां सम्बन्धस्य तत्त्वतोऽसम्भवात् विरुद्धानामित्यस्य वास्तवविरोधाभावेऽपि प्रमुखे एव विरुद्धत्वेन आभासमानानामित्यर्थः, सामानाधिकरण्यशून्यानामिति यावत्; (अत एवोक्तं यथा—"अविरोधेऽपि विरोधो यवोक्तः स्याद्विरोधः सः" इति) पदार्थानां जातिगुणकर्मद्रव्याणाम् इत्यर्थः, यत्र वैचित्र्ये, संसर्गदर्शनं सम्बन्धप्रतिपादनं, सामानाधिकरण्यकीर्तनमित्यर्थः, स विरोधः स्मृतः । यथेति उदाहरणार्थम् । (तथा च प्रस्तुतोत्कर्षप्रतिपत्तये आपाततः विरुद्धत्वेन प्रतीयमानानां पदार्थानां सामानाधिकरण्यप्रतिपादनरूपं वैचित्र्यं विरोध इति निष्कर्षः । स च जात्यादिभिर्जातेरिति चतुर्विधः, गुणादिभिर्गुणस्येति त्रिविधः, क्रियाद्रव्याभ्यां क्रियाया इति द्विविधः, द्रव्यस्य द्रव्येणेति एकविध

कूजितं राजहंसानां वर्द्धते मदमञ्जुलम् ।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥३३४॥

इति मिलित्वा दशविधः अन्यैरुक्तो बोद्धव्यः। विरोधार्थकस्य अपिशब्दादेः सत्त्वे विरोधः शाब्दः, अन्यथा त्वार्थः इति केचिद्वदन्ति। तेषामयमभिप्रायः,—"सुप्तोऽपि प्रबुद्धः" इत्यत्र यथा सुप्तत्वशब्दाभिन्नस्य प्रबुद्धत्ववान् इति बोधः व्युत्पत्तिवैचित्र्याच्च सुप्तत्वादेः प्रतियोगितया विरोधे आश्रयत्वादिना च पदार्थान्तरे अन्वयो न विरुद्धः, इहापि तथैव। "कुसुमानि शरास्तस्मो वाडवो दुःखिते हृदि" इत्यादौ कथं विरोधस्यालङ्कारत्वम्, आरोपसत्त्वेन रूपकस्यैव सम्भवात्, अन्यथा रूपकस्थलेऽपि विरोधस्यैवालङ्कारत्वप्रसङ्गात् इत्यपि न वाच्यं, रूपकस्थले उपमाननिष्ठासाधारणगुणानामुपमेयगतत्वेन तत्प्रतिपत्त्यर्थं तन्निर्वाहकारोपस्यैव चमत्कारकत्वं, न तु विरोधस्य, तेन विवक्षितार्थानुपादानात्। कुसुमानि इत्यादौ तु कुसुमानामपि दुःखजनकत्वप्रयुक्त एव चमत्कारो विवक्षितः, विरहिणश्चन्द्रादीनामत्यद्भुतस्यैव विवक्षितत्वात्, तस्य च विरोधिनैवोपपादनात्। अतः सत्त्वामात्रेण नारोपस्यालङ्कारतेति विश्वेश्वरपण्डितपादानां समाधानादिति दिक्) ॥ ३३३ ॥

कूजितमिति।—राजहंसानां मदमञ्जुलं मदमनोहरं, कूजितं वर्द्धते वृद्धिं गच्छति, मयूराणाञ्च रुतं केकाध्वनिः, उत्क्रान्तं सौष्ठवं मनोहारित्वं यस्मात् तादृशं सत्, क्षीयते। (अत्र एकस्मिन्नेव कूजिते रुते च शब्दरूपे कर्त्तरि विरुद्धयोरपि वृद्धिक्षयक्रिययोः संसर्गः विरोधः, सम्बन्धिभेदेन च तत्समाधानम्। [illegible]

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते।
रागेण पुनराक्रान्तं जायते जगतां मनः॥३३५॥
तनुमध्यं पृथुश्रोणि रक्तौष्ठमसितेक्षणम्।
नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम्?॥३३६॥
मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम्।
अपि ते रूपमस्माकं तन्वि! तापाय कल्पते॥३३७॥

---

बलाबलकारित्वेन वैशिष्ट्यं प्रतीयते इति विरोधालङ्कारत्व-मस्य)॥ ३३४ ॥

प्रावृषेण्यैरिति।—प्रावृषेण्यैः वार्षिकैः, वर्षाकालिकैरिति यावत्, जलधरैः अम्बरम् आकाशं, दुर्दिनायते आच्छन्नं भवति, श्यामलं भवतीत्यर्थः, जगतां मनः पुनः रागेण अनुरागेण लौहित्येन च, आक्रान्तं जायते। (अत्र अनुरागस्य लौहित्ये-नाभेदारोपात् श्यामलत्वलौहित्ययोरेकजलधरसम्भवत्वरूपसंसर्ग-कीर्त्तनं विरोधः, तस्य श्लेषेण प्रशमनम्। अनेन च प्रस्तुतस्य वर्षासमयस्य वैशिष्ट्यं प्रतीयते)॥ ३३५ ॥

तनुमध्यमिति।—स्त्रीणां तनुमध्यं, पृथुश्रोणि विशाल-नितम्बं, रक्तौष्ठम्, असितेक्षणं कृष्णनयनं, नतनाभि गभीर-नाभि, तथा उन्नतस्तनं वपुः कं जनं, न हन्ति? न तापयति? अपि तु सर्वमेवेत्यर्थः। (अत्र तनुत्वपृथुत्वयोः रक्तत्वासितत्वयोः नतत्वोन्नतत्वयोर्गुणयोर्विरोधेन प्रस्तुतानां स्त्रीणां वैशिष्ट्यं प्रतीयते, आश्रयभेदाच्च तेषां विरोधपरिहारः)॥ ३३६ ॥

मृणालेति।—हे तन्वि! मृणालवत् शीतलौ बाहू यत्र तत्, रम्भे इव ऊरू यत्र तत्, पद्ममिव उत्पले इव च मुखम् ईक्षणे च ... ते रूपम् अस्माकं तापाय कल्पते। (अत्र

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः।
उदश्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने ॥३३८॥
कृष्णार्जुनानुरक्ताऽपि दृष्टिः कर्णावलम्बिनी।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि!?॥३३९॥

पूर्वोक्ते उपमितिगर्भबहुव्रीहौ शीतलत्वादिकं गुणः, तस्य च तापक्रियया विरोधः। मृणाले एव बाहू यत्र इत्यादिरूपकसमासे तु मृणालत्वरम्भात्वादिभिर्जातिभिस्तापक्रियायाः विरोधः, वक्तुर्विरहित्वेन च तस्य परिहारः)॥ ३३७॥

क्रियायाः भावाभिमाने विरोधं दर्शयित्वा अभावाभिमाने विरोधं दर्शयति, उद्यानेति।—उद्यानमारुतेन उपवनवायुना, उद्धूताः चूतचम्पकानां रेणवः परागाः, पान्थानां पथिकानां, लोचने नेत्रे, अस्पृशन्तोऽपि उदश्रयन्ति उद्गतवाष्पे कुर्वन्ति, विरहित्वादिति भावः। (अत्र अस्पृशन्तोऽपि इति स्पर्शनाभावेन उदश्रयणक्रियायाः विरोधः, तत्परिहारश्च परागाणामुद्दीपकत्वादिति अभावाभिमाने क्रियागतोऽयं विरोधः)॥३३८॥

कृष्णेति।—कलभाषिणि! हे मधुरवादिनि! ते दृष्टिः कृष्णार्जुनानुरक्ता अपि अर्जुने पार्थे अनुरक्ता कृष्णा द्रौपद्यपि, तद्रूपाऽपीत्यर्थः, यद्वा—कृष्णे कृष्णवर्णे अर्जुने अनुरक्ता, कृष्णे अर्जुने च अनुरक्ता इति वा, कर्णावलम्बिनी राधेयपक्षपातिनी, पक्षे—कृष्णा असिता, कनीनिकायाः समन्तात् अवस्थितमण्डलस्य कृष्णत्वादिति भावः, तथा अर्जुना धवला, कृष्णमण्डलं परितः अवस्थितभागस्य शुक्लत्वादिति भावः, तथा अनु पश्चात्, प्रान्तभागे इत्यर्थः, रक्ता रक्तवर्णा, पक्षेऽस्मिन् अपि-शब्दः चार्थे, तथा कर्णावलम्बिनी अपि आकर्णविश्रान्तेति च, कस्य

इत्यनेकप्रकारोऽयमलङ्कारः प्रतीयते।

इति विरोधचक्रम्।

विश्वसनीयत्वं याति ? न कस्यापि, न कोऽपि ते दृष्टिं विश्वसितीत्यर्थः। (अत्र कृष्णारूपद्रव्यस्य राधेयावलम्बनमिति क्रियाया आपाततः प्रतीयमानोऽपि विरोधः श्लेषेण शाम्यति इति विरोधालङ्कारः, किञ्च विरोधोत्पत्तौ श्लेषस्य हेतुत्वमपि एतेन दर्शितं, तेन विना तस्यानुत्थानात्; ततश्च नानयोः सङ्करः, सङ्करश्च स्वहेतुबलाल्लब्धसत्ताकयोरलङ्कारयोर्भवति; तेन यो यस्य हेतुत्वं भजते तेन सह तस्य सङ्करो न युक्तः; उक्तञ्च —"न च विरोधोत्पत्तिहेतौ श्लेषस्य विरोधेन सह अङ्गाङ्गिसङ्करः" इति। अत एव श्लेषमिश्रत्वेनास्य वैचित्र्यमित्युक्तं. यथा—"सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च" इत्यादौ विरोधिनोर्द्वयोरपि श्लिष्टत्वम्। "कुपतिमपि कलत्रवल्लभम्" इत्यादौ एकस्य श्लिष्टत्वम्। विविक्तविषयत्वञ्च दर्शितमेव इत्यवगन्तव्यम्)॥ २२८॥

इतीति।—इति एवम्प्रकारेण, अयम् अलङ्कारः विरोधः इत्यर्थः, अनेकप्रकारः बहुविधः, प्रतीयते। (बहुविधत्वञ्चास्य दर्शितमेव (२११) सङ्करकश्लोकस्य टीकायाम्। तत्र जातेः जात्या विरोधो यथा—"यस्याकर्णनमात्रतोऽपि भवतोऽवस्थेयमीदृग्विधा येनाङ्गे मलयानिलोऽपि भवति प्रायः करीषानलः। हंहो! मानस! वाक्षिप्त! प्रतिपथं प्रत्याशमुद्ग्रीविकां कुर्वंस्तं नयनातिथिं पुनरहो! कर्त्तुं किमाकाङ्क्षसि?"॥ इति। अत्र द्वितीयपादे वायुत्वश्रक्षित्वजात्योर्विरोधः। एवमन्यदपि ज्ञेयम्। "प्रतीयते" इत्यत्र "अतिशोभते" इत्यपि पाठः)॥—

* इति विरोधचक्रं विरोधालङ्काराधिकारः समाप्त इत्यर्थः।

अप्रस्तुतप्रशंसा।—

अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः ॥३४०॥

इदानीम् अप्रस्तुतप्रशंसां लक्षयति, अप्रस्तुतेति।—अप्रक्रान्तेषु अप्रस्तुतेषु, (अप्रक्रान्तेषु इति षष्ठ्यर्थे सप्तमी बोध्या, बहुवचनमविवक्षितं, द्वयोरेकस्य वा अप्रस्तुतत्वेऽपि अस्याः सम्भवात्) या स्तुतिः, प्रस्तुतस्य निन्दार्थमित्यध्याहार्य्यम्; सा अप्रस्तुतप्रशंसा स्यात्। (तथा च—अप्रस्तुतस्तवेन प्रस्तुतस्य निन्दासूचनमप्रस्तुतप्रशंसा इति लक्षणम्। "अप्रक्रान्तेप्सितस्तुतिः" इति पाठान्तरं, तत्र अप्रक्रान्तस्य अप्रस्तुतस्य, ईप्सिता अभिमता, स्तुतिरिति स एवार्थः। अत्र केचिदाहुः,—अप्रक्रान्तेन अप्रस्तुतवर्णनेन, ईप्सितस्य प्रस्तुतस्य, स्तुतिर्वर्णनम्, अप्रस्तुतप्रशंसा इत्येवमर्थे कृते अप्रस्तुतार्थप्रोक्त्या प्रस्तुतार्थप्रतीतौ अप्रस्तुतप्रशंसेति नवीनोक्ताप्रस्तुतप्रशंसालक्षणेनास्य सङ्गतिः स्यादिति। तदसङ्गतमेव प्रतिभाति, अन्यकृता तु तादृशस्थले समासोक्तिरेवाङ्गीक्रियते; यथा—"वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः। उक्तिः सङ्क्षेपरूपत्वात् सा समासोक्तिरिष्यते॥" इति। इत्यञ्च अप्रस्तुतवर्णनेन प्रस्तुतप्रतीतौ समासोक्तिः, प्रस्तुतनिन्देच्छया अप्रस्तुतप्रशंसनमेवाप्रस्तुतप्रशंसेति निष्कर्षः, तेन च संज्ञाया अन्वर्थताऽपि सिद्धा। अत एवोक्तं भोजराजेनापि —"अप्रस्तुतप्रशंसा स्यादस्तोतव्यस्य या स्तुतिः। कुतोऽपि हेतोर्वाच्या च प्रत्येतव्या च सोच्यते॥" इति। नव्यास्तु अप्रस्तुतवाच्यात् प्रस्तुतप्रतीतौ अप्रस्तुतप्रशंसा, प्रस्तुतार्थप्रोक्त्या अप्रस्तुतार्थप्रतीतौ समासोक्तिरिति विषयविभागेन अलङ्कारद्वयमाहुः। तत्र अप्रस्तुतप्रशंसायाः पञ्च भेदाश्च दृश्यन्ते; यदुक्तं विश्वनाथेन—"क्वचिद्विशेषः सामान्यात् सामान्यं वा

विशेषत:। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्॥
अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा तत:। अप्रस्तुतप्रशंसा
स्यात्—॥" इति। यच्च केनचिदुक्तं—"प्रस्तुतेन प्रस्तुतस्य
द्योतने प्रस्तुताङ्कुर:। किं भृङ्ग! सत्यां मालत्यां केतकी-
कण्टकेच्छया?"॥ इति। अत्र वाच्यव्यङ्ग्यवृत्तान्तयोर्द्वयोरपि
प्रकृतत्वेन समासोक्त्यप्रस्तुतप्रशंसाभ्यामतिरिक्तत्वस्य स्फुटत्वात्
प्रस्तुताङ्कुरालङ्कार इति, तत्तु न सम्यक्; यतो हि प्रियेण
सह विहरन्त्या उक्तौ भृङ्गोऽपि प्रकृत एव, न च भृङ्ग-
सम्बोधनानुपपत्त्या प्रियमात्राभिप्रायेणैवेयमुक्तिरिति वाच्यम्,
अचेतनेऽप्यामन्त्रणदर्शनेन तदविरोधात्। एवञ्च प्रकृतेन
वाच्येन भृङ्गोपालम्भेन पत्न्या: कुलवध्वा: सौन्दर्य्यादिगुण-
शालिन्या: सत्त्वे क्रूरजनपरिवृतायां सर्वस्वापहरणसङ्कल्प-
दुरासदायां कण्टकाकुलकेतकीकल्पायां वेश्यायां समागमेन
किम्? इत्युपालम्भो द्योत्यते इति नालङ्कारत्वमस्य; अप्रस्तुत-
प्रशंसायाम् अप्रस्तुतत्वेन वाच्यार्थस्यावर्णनीयतया तत्राभिधायां
विरतायां वाच्यार्थेनाक्षेपात् प्रस्तुतार्थव्यक्ति:; इह तु वाच्यार्थ-
स्यापि प्रस्तुतत्वेन तत्रैव पर्य्यवसानसम्भवेऽपि वस्तुसौन्दर्य्यबले-
नाभिमतार्थव्यक्तिरिति ध्वनिरेव। रसगङ्गाधरकृतस्तु अत्राप्य-
प्रस्तुतप्रशंसैव भवति न पुनरलङ्कारान्तरकल्पनं, किञ्चिदुक्ति-
वैचित्र्येण तत्कल्पने अलङ्कारानन्त्यप्रसङ्गात्। न च तल्लक्षणा-
नाक्रान्तत्वात् कथमेतदिति वाच्यम्; न ह्यप्रस्तुतत्वं सर्वथा
प्रस्तावराहित्यं विवक्षितं, किन्तु मुख्यतात्पर्य्यविषयीभूतार्थाति-
रिक्तत्वम्। इदञ्च सर्वथैवाप्रस्तुते प्रस्तुतेऽपि मुख्यतात्पर्य्याविषयी-
भूते च समानमेव, अतो भृङ्गादेस्तत्र सत्तामात्रेण प्रकृतत्वेऽपि
मुख्यतात्पर्य्यस्य नायिकाद्युपालम्भ एव सत्त्वादप्रस्तुतेन प्रस्तुत-
प्रतीतिरिति तल्लक्षणाक्रान्तत्वं स्पष्टमेव इत्याहु:)॥१४०॥

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥३४१॥
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ।
राजानुवर्त्तनक्लेश-निर्विण्णेन मनस्विना ॥३४२॥

इति अप्रस्तुतप्रशंसा । *

---

अप्रस्तुतप्रशंसां दर्शयति, सुखमित्यादि ।—अपरसेविनः न परान् सेवन्ते इति तादृशाः, परसेवानभिज्ञा इत्यर्थः, स्वाधीना इति यावत्, हरिणाः वनेषु अयत्नसुलभैः अनायासलभ्यैरित्यर्थः, तृणदर्भाङ्कुरादिभिः अन्नैः सुखं जीवन्ति । (परसेविनो वयं सदैव प्रभुपरितोषव्याकुलमानसा दुःखेनैव जीवाम इति ध्वनिः । "अन्नैः" इत्यत्र "अर्थैः" "तृण" इत्यत्र "जल" इति च पाठान्तरम् । प्रभुसेवाविरक्तस्य भृत्यस्योक्तिरियम् ) अत्र राजानुवर्त्तने राजसेवायां, यः क्लेशः तेन निर्विण्णेन प्राप्तनिर्वेदेन, मनस्विना केनचित् प्रशस्तमनसा, इयम अप्रस्तुता एव सा मृगवृत्तिः प्रशस्यते । (इति अप्रस्तुतप्रशंसा अप्रस्तुतस्य मृगस्य स्तुत्या स्वस्य निन्दासूचनात् । एवकारेण अप्रस्तुतप्रस्तुतयोरुभयोः प्रशंसायां नायमलङ्कार इति सूचितम् ; तेन—"याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां गन्ता कं प्रति पान्थसन्ततिरसौ सन्तापमालाकुला । इत्थं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥" इत्यत्र अप्रस्तुतस्य मार्गसरसः प्रस्तुतस्य च दातुः प्रशंसेति नाप्रस्तुतप्रशंसा किन्तु समासोक्तिरेव ॥ ३४१ ॥ ॥ ३४२॥

* इति अप्रस्तुतप्रशंसा अप्रस्तुतप्रशंसाख्यालङ्कारनिरूपणं समाप्तमित्यर्थः ।

व्याजस्तुतिः ।—

यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता ।
दोषाभासा गुणा एव लभन्ते ह्यत्र सन्निधिम् ॥३४३॥

सम्प्रति व्याजस्तुतिं निर्दिशति, यदीति ।—यदीति यदि-त्यर्थे, निन्दन् इव यत् स्तौति असौ व्याजस्तुतिः स्मृता, अत्र दोषा इव आभासन्ते आपाततः प्रतीयन्ते इति दोषाभासाः, गुणा एव वस्तुतः गुणत्वेनैवेत्यर्थः, सन्निधिं लभन्ते गुणस्वरूपेणैव परिणमन्तीत्यर्थः । ( निन्दन्निव स्तौतीत्यत्र स्तुवन्निव निन्दति इत्यपि प्रत्ययविपरिणामेनान्वेतव्यं, वैचित्र्यसाम्यात् वैचित्र्य-स्यैवालङ्कारत्वादिति नवीनानां मतमत्रानुसरणीयमिति केचित् । ते च निन्दायाः स्तुतौ पर्य्यवसाने स्तुतेर्वा निन्दायां तात्पर्य्ये व्याजस्तुतिमङ्गीकुर्वन्ति । स्वमतेऽपि तदेवादरणीयं, व्याजस्तुतिपदस्य व्याजेन स्तुतिर्व्याजरूपा वा स्तुतिरिति व्युत्पत्तेः । उक्तञ्चालङ्कारकौस्तुभे—"व्याजस्तुतिर्विपर्य्ययपर्य्यव-साने अस्तुतिस्तुत्योः" इति । इत्थञ्च निन्द्यत्ववद्विषयकत्वं स्तुत्य-त्ववद्विषयकत्वञ्च स्तुतिनिन्दयोर्व्याजत्वमिति प्राचामाशयः, तदेव चोक्तालङ्कारप्रवृत्तिनिमित्तम् ; तथा च, व्याजेन निन्दाव्याजेन स्तुतिः स्तुतिव्याजेन च निन्दा व्याजस्तुतिरिति निष्कर्षः । उक्तञ्च प्रकाशकारेण—"व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा" इति । उदाहृतञ्च तेनैव स्तुत्या निन्दायां यथा—"हे हेलाजितबोधिसत्त्व ! वचसां किं विस्तरैस्तोयधे ! नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः । तृष्यत्पान्थजनोपकार-घटनावैमुख्यलब्धायशो भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥" इति । अत्र समुद्रस्य स्तुतिव्याजेन निन्दाप्रति-पादनं चारुताऽतिशयं पुष्णाति । केचित्तु अन्यनिन्दास्तुतिभ्या-

तापसेनापि रामेण जितेयं भूतधारिणी ।
त्वया राज्ञाऽपि सैवेयं जिता मा भून्मदस्तव ॥३४४॥

---

मन्यस्तुतिनिन्दावगतावपि अयं दृश्यते इत्याहुः, तत्रोदाहरणं यथा—"यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा नैषां गर्ववचः शृणोषि न च तान् प्रत्याशया धावसि । काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरङ्ग! कुत्र भवता किं नाम तप्तं तपः ?" ॥ इति । अत्र हरिणस्तुत्या राजसेवानिर्विसस्यात्मनो निन्दा व्यज्यते । स्वमते तु यस्यैव निन्दा तस्यैव स्तुतिप्रतीतौ सम्भवति न त्वन्यथा । यत्तु केचिदाहुः,—"अप्रस्तुतप्रशंसायामप्रस्तुतेन प्रस्तुतार्थप्रतीतिमात्रं न तु प्रकृताप्रकृतयोः निन्दास्तुतिस्वरूपनियमः, अत्र स्तुत्या निन्दाभिव्यक्तिनियमात्, किञ्चैवं सम्मतस्थलेऽप्यप्रस्तुताभ्यां स्तुतिनिन्दाभ्यां प्रस्तुतनिन्दास्तुतिप्रतीतिरित्यप्रस्तुतप्रशंसैव स्यात् इति व्याजस्तुतेरुच्छेदापत्तिः । स्तुतिनिन्दाप्रतीति-नियमरूपविशेषादतिरेकस्तूभयत्रापि समानः । अतः अत्रै-रयत्नसुलभैरित्यादौ व्याजस्तुतिरेव युक्ता" इति तच्चिन्त्यम् । अप्रस्तुतेन प्रस्तुतप्रतिपत्तिमात्रमप्रस्तुतप्रशंसास्वरूपं, तच्चोक्त-स्थलेऽप्यबाधितमेवेति पर्यालोचनीयम् ) ॥ ३४३ ॥

व्याजस्तुतिमुदाहरति, तापसेनेति ।—रामेण परशुरामेण, तापसेनापि जयसाधनसामग्रीरहितेनापीति भावः, इयं भूत-धारिणी पृथ्वी, जिता, त्वया राज्ञाऽपि प्रभूतजयसाधनसामग्री-मताऽपि, सैव इयं पृथ्वी, न त्वतिरिक्ता इति भावः, जिता, अतः तव मदः गर्वः, मा भूत् । ( अत्र प्रस्तुतस्य राज्ञः आपाततः निन्दा प्रतीयते एव, परं साक्षात् भगवदंशावतारेण परशुरामेण महादेवप्रसादलब्धपरशुना या पृथ्वी जिता, त्वया मानवेनापि

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते।
राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते? ॥३४५॥
भुजङ्गभोगसंसक्ता कलत्रं तव मेदिनी।
अहङ्कारः परां कोटिमारोहति कुतस्तव? ॥३४६॥

सा जितेति पर्य्यवसानात् महती स्तुतिर्गम्यते इति व्याजस्तुतिर्नामालङ्कारः। नन्वत्र तापसरामादिवस्तुनः अप्रस्तुततया तत्स्तुत्या प्रस्तुतस्य राज्ञः निन्दाप्रतीतेरत्र कथं नाप्रस्तुतप्रशंसेति न वाच्यं, तत्राप्रस्तुतस्य प्रशंसनं प्रस्तुतस्य च निन्दनं पर्य्यवसानस्थायि पृथग्रूपेणावस्थितञ्च, इह तु प्रस्तुतस्यापाततो निन्दा प्रतीयते पर्य्यवसाने तु स्तुतिरिति स्तुतिनिन्दयोरेकधर्मत्वमित्यनयोर्भेदत्वस्याङ्गीकारात्। किञ्च तत्र प्रस्तुतस्य गम्यत्वमिह तु वाच्यत्वमिति दिक्) ॥ ३४४ ॥

अलङ्कारान्तरमिश्रणेनास्या वैचित्र्याधिक्यमिति श्लेषमिश्रिता व्याजस्तुतिं दर्शयन् शब्दार्थगतत्वेन श्लेषस्य द्वैविध्यात् प्रथमम् अर्थश्लेषमूलां व्याजस्तुतिं दर्शयति, पुंस इति।—(इक्ष्वाकुवंशधरं कमपि नृपतिं प्रति कस्यचित् चाटुकारस्योक्तिरियम्) हे राजन्! त्वया पुराणात् आद्यात् वृद्धाच्च, पुंसः आच्छिद्य आकृष्य, श्रीर्लक्ष्मीः सम्पत्तिश्च, परिभुज्यते, इक्ष्वाकुवंशस्य इक्ष्वाकुवंशीयस्य, तव इदं किं युज्यते? (आदिपुरुषादाच्छिन्नायाः लक्ष्म्याः सम्भोगः इक्ष्वाकुवंशीयस्य तव न योग्य इति निन्दया अतिप्रभूतास्ते सम्पद इति स्तुतिर्गम्यते। अत्र पुराणपदे श्रीपदे च अर्थगतश्लेषवशात् समधिकचारुता स्फुटं प्रतीयते इति बोध्यम्) ॥ ३४५ ॥

शब्दश्लेषमूलामुदाहरति, भुजङ्गेति।—भुजङ्गानां भोगाः

इति श्लेषानुविद्धानामन्येषाञ्चोपलक्ष्यताम्।
व्याजस्तुतिप्रकाराणामपर्य्यन्तस्तु विस्तरः ॥३४७॥

इति व्याजस्तुतिः। *

---

शरीराणि, तैः संसक्ता, अन्यत्र—भुजङ्गानां जाराणां, भोगे संसक्ता, मेदिनी तव कलत्रं पाल्या भार्य्या च, तथाऽपि कुतः तव अहङ्कारः परां कोटिम् आरोहति? (अत्र भुजङ्गादिशब्दानामनेकार्थत्वात् शब्दश्लेषमूला व्याजस्तुतिरियम्)॥ ३४६॥

व्याजस्तुतिमुपसंहरति, इतीति।—इति उक्तरूपाणां, श्लेषानुविद्धानां तथा अन्येषाञ्च अन्यालङ्कारमूलानाञ्च, व्याजस्तुतिप्रकाराणाम् अपर्य्यन्तस्तु अशेषः पुनः, विस्तरः उपलक्ष्यतां ज्ञायताम्। (एतेनालङ्कारान्तरसङ्कीर्णत्वेन बहवो भेदाः सम्भवन्तीति प्रतीयते। तत्र समासोक्तिसङ्कीर्णा यथा—"उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने व्योम्नि भ्राम्यति दुर्गमं क्षितिभृतां मूर्द्धानमारोहति। व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी कीर्त्तिस्ते मदनाभिराम! कतकं मन्ये भयं योषिताम्॥" अत्र कीर्त्तौ स्वैरिणीव्यवहारारोपप्रतीत्युल्लासितनिन्दायाः स्तुतिपर्य्यवसायितया समासोक्तिसङ्कीर्णा। अन्यनिन्दास्तुतिभ्यामन्यस्तुतिनिन्दावगतावपि अयं दृश्यते, यथा—"कस्त्वं वानर! रामराजभवने? लेखार्थसंवाहको यातः कुत्र? पुरा गतः स हनुमान् निर्दग्धलङ्कापुरः। बद्धो राक्षससूनुनेति बहुशः सन्ताड़ितस्तर्जितः स व्रीड़ात्तपराभवो वनमृगः कुत्रेति न ज्ञायते॥" इति। अत्र हनुमन्निन्दया वानरान्तरस्तुत्यभिव्यक्तिः)॥ ३४७॥

---

* इति व्याजस्तुतिः-व्याजस्तुत्यलङ्कारनिरूपणं समाप्तम्।

निदर्शनम्।—

**अर्थान्तरप्रवृत्तेन किञ्चित् तत्सदृशं फलम्।**
**सदसद्वा निदर्श्येत यदि तत् स्यान्निदर्शनम्॥३४८॥**

सम्प्रति निदर्शनं लक्षयति, अर्थान्तरेति—अर्थान्तरे निदर्शनीयादन्यस्मिन् कार्य्यान्तरे, प्रवृत्तेन उद्युक्तेन केनचित्, यदि तत्सदृशं तस्य अर्थान्तरस्य सदृशं, सत् उत्कृष्टम्, असत् अपकृष्टं वा, किञ्चित् फलं निदर्श्येत प्रदर्श्येत, तन्निदर्शनं निदर्शनालङ्कारः, स्यात्। ("यदि" इत्यत्र "यत्तु" इति "निदर्शनम्" इत्यत्र "निदर्शना" इत्यपि पाठः। तस्यास्तु यत्र पदार्थयो-र्वाक्यार्थयोर्वा अन्योऽन्यमेकवाक्यतया अन्वयबोधाजनकयोरुपमानोपमेयभावं कल्पयित्वैव अन्वयबोधपर्य्यवसानं भवति सा निदर्शना इत्येका, तथा यत्र च कार्य्यकारणयोः क्रियया हेतु-हेतुमद्भावे प्रतिपादिते उत्तरवाक्यार्थः पूर्ववाक्यार्थप्रतिपाद्य-सामान्यकार्य्यकारणभावे दृष्टान्ततया पर्य्यवस्यति सा द्वितीया निदर्शनेत्याहुः। साऽपि पदार्थवाक्यार्थवृत्तिभेदात् द्विविधा, तत्र पदार्थवृत्तिनिदर्शना यथा—"अव्यात् स वो यस्य निसर्गवक्रः स्पृशत्यधिज्यस्मरचापलीलाम्। जटापिनद्धोरगराजरत्नमरीचि-लीढोभयकोटिरिन्दुः॥" अत्र स्मरचापसम्बन्धिन्या लीलाया वस्त्वन्तरभूतेनेन्दुना स्पर्शनमसम्भवल्लीलासदृशीं लीलामव-गमयतीत्यदूरविप्रकर्षात् प्रतिबिम्बकल्पनम्। वाक्यार्थवृत्तिर्यथा—"त्वत्पादनखरत्नानां यदलक्तकमार्जनम्। इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥" इति। तत्रापि क्वचित् सम्भवन्नेव वस्तुसम्बन्धः सामर्थ्यात् बिम्बप्रतिबिम्बभावं कल्पयति सा सम्भवद्वस्तुसम्बन्धा। क्वचित् पुनरन्वयबाधादसम्भवता वस्तु-सम्बन्धेन प्रतिबिम्बनमाक्षिप्यते सा असम्भवद्वस्तुसम्बन्धा

उदयन्नेष सविता पद्मेष्वर्पयति श्रियम् ।
विभावयितुमृद्धीनां फलं सुहृदनुग्रहम् ॥३४९॥

इति द्विविधा; यथोक्तं दर्पणकृता—"सम्भवन् वस्तुसम्बन्धो ऽसम्भवन् वाऽपि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥" इति । तत्र द्वितीया प्रागुक्तोदाहरणरूपा आद्या पुनः,—"कोऽत्र भूमिवलये" इत्यादि विश्वनाथदर्शित रूपा । अन्ये तु नवीनोक्तः द्वितीयो निदर्शनाप्रकार उपमायामन्तर्भवतीति ग्रन्थकृता नोक्तः, प्रथमस्तु प्रकार ग्रन्थकृता अङ्गीकृत एवेत्याहुः । अत्र केचित् ललित मप्यलङ्कारान्तरमिच्छन्ति, यथा—"प्रस्तुते वर्ण्यवाक्यार्थे प्रति बिम्बस्य वर्णनम् । ललितं निर्गते नीरे सेतुमेषा चिकीर्षति" इति । अत्र ललितमिति लक्ष्यांशः, पूर्वार्द्धं लक्षणं, निर इत्याद्युदाहरणम् । इयं हि दाक्षिण्यादुपागते नायके प्रतिनिवृ नायिकान्तरासक्ते सति तदानयनाय प्रेषयितुकामां नायिक प्रति सख्या उक्तिः । तत्र च प्रस्तुतवाक्यार्थमपहाय तत्सदृशनी निर्गमनोत्तरकालिकसेतुबन्धकारणद्वारा तत्प्रतिबिम्बरूपा उक्तः । न ह्ययमप्रस्तुतप्रशंसा, प्रस्तुतधर्मिकत्वात्; ना समासोक्तिः, प्रस्तुतवृत्तान्तेनाप्रस्तुतवृत्तान्तप्रतीतेरेव तद्विषय त्वात्, अत्र च अप्रकृतेन प्रकृतवृत्तान्तप्रतीतेः; नापि निदर्श प्रस्तुताप्रस्तुतवृत्तान्तयोः शब्दोपात्तयोरैक्यसमारोपे तदभ्युपगमात्; अतः सर्वालङ्कारविलक्षणमिदं ललितमित्या इति ) ॥ ३४८ ॥

सत्फलनिदर्शनं दर्शयति, उदयन्निति ।—एषः सवि सूर्यः, उदयन् उद्गच्छन् उन्नतिं प्राप्नुवंश्च, ऋद्धीनां फलं सुहृ

याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम्।
सद्यो राजविरुद्धानां सूचयन्ती दुरन्तताम्॥२५०॥

इति निदर्शनम्।

सहोक्तिः।—

सहोक्तिः सहभावेन कथनं गुणकर्मणाम्।

ज्ञापयितुं, पद्मेषु श्रियम् अर्पयति। (अत्र पद्मेषु श्रीदानप्रवृत्तेन उदयशालिना सूर्य्येण सुहृदुपकाररूपमुदयफलं किञ्चित् निदर्श्यते इति फलस्यात्र उत्कृष्टमेव)॥ २४९॥

असत्फलनिदर्शनं दर्शयति, यातीति।—चन्द्रस्य अंशुभिः स्पृष्टा ध्वान्तराजी राजविरुद्धानां नृपतिप्रतिकूलानां चन्द्रप्रतिकूलानाञ्च, सद्यः दुरन्ततां दुःखजनकमवसानं, सूचयन्ती प्रकटयन्ती सती, पराभवं नाशं, याति। (अत्र राज्ञः विरुद्धाचरणशीलः कश्चित् यथा राजपुरुषैः दुःखप्रददण्डविधानपूर्वकं पराभूयते तथा आलोकापसारणेन राज्ञः चन्द्रस्य प्रतिपक्षभूता ध्वान्तराजी अपि चन्द्रांशुनेति गम्यसादृश्यप्रतीत्यनन्तरं चन्द्रांशुपरिभूयमाणा तमस्ततिः राजविरोधिनां परिणामदुःखं लभमाना पराभवरूपमपकृष्टं फलं प्राप्नोतीति असत्फलस्य निदर्शनादयम् असत्फलरूपः निदर्शनभेदः। "सूचयन्ती" इत्यत्र "दर्शयन्ती" इति पाठान्तरम्। भोजराजस्त्विह वर्त्तमानकाललक्षण-शतृप्रत्ययेन सद्य इति तद्धितेन च समकालमेव दृष्टान्तदार्ष्टान्तिकयोः शब्दतः ऋजूक्तयैव उक्तत्वादिदमृजुसमं निदर्शनमित्याह)॥ २५०॥

सहोक्त्यलङ्कारं लक्षयति, सहोक्तिरिति।—गुणकर्मणां गुणानां क्रियाणाञ्च इत्यर्थः, (कर्मशब्देनात्र क्रियेति बोध्यं,

* इति निदर्शने निदर्शनालङ्कारनिरूपणं समाप्तम्।

बहुवचनेन द्रव्यादीनां परिग्रहः) सहभावेन कथनं सहादि-पदसन्निधानात् धर्मवाचकपदस्य विशेष्यविशेषणोभयान्वितार्थ-कत्वेनोक्तिरित्यर्थः, सहोक्तिः, उभयनिष्ठधर्मस्य सहैवोक्तिर्यत्र इति व्युत्पत्तेरिति भावः। (ततश्च सम्बन्धिभेदेन भिन्नयोरपि गुणयोः क्रिययोः द्रव्ययोरन्ययोर्वा सहार्थशक्त्या एकेन वाचकेन यदेककालीनतया प्रतिपादनं सा सहोक्तिरिति लक्षणम्। एतदेवोक्तं दर्पणकारेण यथा—"सहार्थस्य बलादेकं यत्र स्यात् वाचकं द्वयोः। सा सहोक्तिः मूलभूताऽतिशयोक्तिर्यदा भवेत्॥" इति। सा च वैचित्र्यावहा अतिशयोक्तिमूला च चेत् तदैवाल-ङ्कारतां भजते नान्यथा। तथा हि—"लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यत्र ययाविति एकेन पदेन सहार्थ-बलात् उभयोर्गमनक्रिययोः प्रतिपादनेऽपि अतिशयोक्त्यभावात् वैचित्र्याभावाच्च नायमलङ्कारः। केचित्तु सहोक्तेरतिशयोक्ति-मूलकत्वं नाङ्गीकुर्वन्ति, उपमानेनोपमेयनिगरणमेवाति-शयोक्तिः, निगरणमात्रन्तु न तथा, अतोऽत्रातिशयोक्तिविषया-भावात् सहोक्तिरेव इत्याहुः। अन्ये तु धर्मयोर्भेदाध्यवसान-मूलत्वस्थले एव सहोक्तिर्भवितुमर्हति, कार्य्यकारणयोः पौर्वा-पर्य्यविपर्य्ययात्मकातिशयोक्तिमूलभेदस्तु प्राचीनोक्तो न युक्तः, तत्रातिशयोक्तेरेवालङ्कारत्वसम्भवात् इत्याहुः। तथा हि—"तव कोपोऽरिनाशश्च जायते युगपन्नृप!" इत्यतिशयोक्त्यपेक्षया "तव कोपोऽरिनाशश्च सहैव नृप! जायते" इति सहोक्तौ विच्छित्ति-विशेषाननुभवात्, तस्यैव चालङ्कारपार्थक्यव्यवस्थापकत्वात्। न चैवं धर्मयोर्भेदाध्यवसानस्थलेऽप्यतिशयोक्तिसत्त्वात् कथं पार्थक्यमिति सहोक्त्युच्छेद इति वाच्यं, तत्राभेदाध्यवसायस्य सहोक्त्युपस्कारकत्वेन गुणतया सहोक्तितिरस्काराभावात्। पौर्वापर्य्यविपर्य्ययस्थले च सहोक्तेरेवातिशयोक्त्युपस्थापकत्वेन

परिवृत्तिः।—

**अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता ॥३५१॥**

सहोक्तेरुदाहरणम्।—

**सह दीर्घा मम श्वासैरिमाः सम्प्रति रात्रयः।**
**पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥३५२॥**

वैषम्यात्। तुल्ययोगितायां सर्वत्र धर्मान्वय एकरूपेण भवति, इह तु गुणप्रधानभावेन; किञ्चात्र धर्मिणां गुणादिभिरन्वयो युगपत् भवति तत्र न तथेत्यनयोर्भेद इति )॥—

पद्यार्द्धेन सहोक्तिलक्षणं समाप्य तदुदाहरणदर्शनात् प्रागेव पद्यार्द्धपूरणार्थं परिवृत्तिलक्षणमाह, अर्थानामिति।—अर्थानां वस्तूनां, यः विनिमयः किञ्चित् त्यक्त्वा कस्यचिदादानं, सा तु परिवृत्तिः स्मृता। ( सा त्रिधा, क्वचित् समेन समस्य, क्वचित् अधिकेन न्यूनस्य, क्वचित् न्यूनेन अधिकस्य इति; उक्तञ्च— "समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः" इति। अत्रापि वैचित्रस्य आवश्यकत्वं बोध्यम्। भोजदेवस्तु व्यत्ययमपि परिवृत्तिमाह; यथा—"व्यत्ययो वस्तुनोर्यस्तु यो वा विनिमयो मिथः" इति। व्यत्ययस्तु एकस्थानात् कस्यचित् वस्तुनः अन्यत्र स्थापनम्; यथा—"कुमुदवनमपश्रि श्रीमदम्भोजषण्डम्" इत्यादि )॥ ३५१॥

तत्र प्रथमोक्तां सहोक्तिं लक्षयन् गुणसहोक्तिं दर्शयति, सहेति।—सम्प्रति बन्धुविरहसमये इत्यर्थः, इमा रात्रयः मम श्वासैः सह दीर्घाः, विरहकालिकनिशायाः दुःखबहुलत्वेन क्लेशक्षेपणीयत्वात् तथा प्रतीतिः, न तु वास्तवदीर्घा इति भावः, चन्द्रभूषणाः ताश्च रात्रयः, ममैव अङ्गैः सह पाण्डुराः। ( पाण्डुरत्वे हेतुः ज्योत्स्ना, चन्द्रभूषणा इत्यनेन च तत्प्रतीते-

वर्द्धते सह पान्थानां मूर्च्छया चूतमञ्जरी ।
पतन्ति च समं तेषामसुभिर्मलयानिलाः ॥२५३॥
कोकिलालापसुभगाः सुगन्धिवनवायवः ।
यान्ति सार्द्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥२५४॥

रित्यभिप्रायः। विरहिण्या उक्तिरियम्। अत्र दीर्घत्वं पाण्डुरत्वं गुणपदार्थौ वस्तुतो भिन्नावपि सहार्थबलात् एककालीनतया उक्तौ इति गुणगतेयं सहोक्तिः। न च "आविर्भवति नारीणां वयः पर्य्यस्तशैशवम्। सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः॥" इति पूर्वोक्तकार्य्यसहजचित्रहेतूदाहरणेऽपि क्रिययोः सहभावोऽस्ति तदनयोरभेद एव इति वाच्यं, सहभावसाधारण्येऽपि कार्य्यकारणभावस्यैव चित्रनियामकत्वात्, अत्र तु दीर्घश्वासदीर्घरात्रयोर्न कार्य्यकारणभावः, द्वयोरपि प्रियवियोगजन्यत्वात् इति बोध्यम्) ॥ २५२ ॥

क्रियासहोक्तिं दर्शयति, वर्द्धते इति।—पान्थानां विरहिणामित्यर्थः, मूर्च्छया सह चूतमञ्जरी वर्द्धते, मलयानिलाश्च तेषाम् असुभिः प्राणैः, समं पतन्ति गच्छन्ति। ("असुभिः" इत्यत्र "अश्रुभिः" इति "पतन्ति" इत्यत्र "वहन्ति" इति च पाठः। अत्र वर्द्धनं पतनञ्च क्रिये सहभावेनोक्ते वैचित्र्यविशेषमावहत इति क्रियासहोक्तिः। यद्यपि इह चूतमञ्जरीविकाशमलयपवनपतनाभ्यामेव पान्थानां मूर्च्छाप्राणनाशौ ध्वन्येते तथाऽपि मूर्च्छावृद्धि-चूतमञ्जरीवृद्ध्योः असुपतन-मलयानिलपतनयोश्च वसन्तजन्यत्वान्न मिथः कार्य्यकारणभावो विवक्षित इति चित्रहेतुत्वशङ्काया अनवकाशः) ॥ २५३ ॥

कोकिलेति।—कोकिलानाम् आलापेन रवेण, सुभगाः

इत्युदाहृतयो दत्ताः सहोक्तेरत्र काश्चन।

इति सहोक्तिः। *

सुरम्याः, तथा सुगन्धिनः वनवायवः येषु तादृशाः, सुरभिवासराः वसन्तदिवसाः, जनानामानन्दैः सार्द्धं वृद्धिं यान्ति। (सहशब्द-प्रयोगे एवायमलङ्कार इति भ्रमनिरासार्थं सार्द्ध-पदघटितमिद-मुदाहरणम्। एतेन सहार्थकशब्दान्तरोपादाने तदनुपादाने च सहार्थविहितायां तृतीयायां सहोक्तिरिति बोध्यम्। केचित्तु यान्तीति यानक्रियायाः सहभाववत् गुणात्मिकाया वृद्धेरपि सहभावप्रतीतेः गुणक्रिययोः एकत्र समावेशरूपम् इदमुदा-हरणमित्याहुः। अत्र पक्षे वृद्धेर्गुणत्वाङ्गीकारे आनन्दस्यापि तथात्वे गुणस्य गुणवृत्तित्वापातदोषः, अतः अत्र यानम् आनन्दनञ्च क्रिये सहभावेन उक्ते वैचित्र्यातिशयम उत्पादयत इति क्रियागतेयं सहोक्तिः। अन्ये तु सुरभिवासरा इति कर्त्तृपदार्थः केवल एव जनानन्दैः सह वृद्धिप्राप्तिक्रियायां समाविष्ट इति विविक्तकर्त्तृक्रियासमावेशाख्यसहोक्तिरियम् इत्याहुः) ॥ २५४ ॥

इतीति।—इति उक्तरूपाः, सहोक्तेः काश्चन उदाहृतयः उदाहरणानि, अत्र दत्ताः दर्शिताः,अनयैव रीत्या अन्यविधाऽपि सहोक्तिरनुसन्धेया इति भावः। (भोजस्तु विविक्तादिभेदेन अन्यानपि भेदान् दर्शितवान्; यथा—कर्त्रादीनां समावेशः सहान्येः क्रियादिषु। विविक्ताविविक्ताच सहोक्तिः सा निगद्यते॥ वैसादृश्यवती चेयमुच्यमाना मनीषिभिः। सहैवादि-प्रयोगेषु ससादृश्या च दृश्यते॥" इति। एतेषामुदाहरणानि तत्रैव द्रष्टव्यानि) ॥—

---

इति सहोक्तिः सहोक्तेर्लक्षणमुदाहरणञ्च समाप्तम्।

परिवृत्तेरुदाहरणम् ।—

क्रियते परिवृत्तेश्च किञ्चिद्रूपनिदर्शनम् ॥ ३५५ ॥

शस्त्रप्रहारं ददता भुजेन तव भूभुजाम् ।
चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम् ॥३५६॥

इति परिवृत्तिः । *

प्राक् परिवृत्तिलक्षणमभिहितम्, इदानीं लक्ष्यं दर्शयितुमाह, क्रियते इति ।—परिवृत्तेश्च किञ्चित् अल्पमात्रं, रूपनिदर्शनं स्वरूपप्रकाशनं, क्रियते । ( एतेन ग्रन्थबाहुल्यभिया अन्ये भेदा नात्र दर्शिता इति सूचितम् । दृश्यन्ते च व्यत्ययवती विनिमयात्मिका उभयवती च इति त्रिविधाः भेदाः कण्ठाभरणे ; यथा—"सा त्रिधा व्यत्ययवती तथा विनिमयात्मिका । तृतीया चोभयवती निर्दिष्टा काव्यसूरिभिः ॥" इति । त्रिधाऽपि मुख्यामुख्यभेदेन पुनः द्विधाभूय षड्विधा इत्यपि तत्रैव दृश्यते । किञ्च समन्यूनाधिकगतत्वेनापि तस्याः भेदः सम्भवति, "परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्" इति विश्वनाथोक्तेः । अत्र न्यूनेनाधिकस्योदाहरणमात्रं प्रदर्श्यते इति किञ्चित् इत्युक्तम् ) ॥ ३५५ ॥

शस्त्रप्रहारमिति ।—शस्त्रप्रहारं ददता तव भुजेन तेषां भूभुजां चिरार्जितं कुमुदपाण्डुरं यशः हृतम् । ( अत्र न्यूनेन अधिकस्य ग्रहणरूपविनिमयः कृत इति परिवृत्तिरलङ्कारः । समेन समस्य अधिकेन न्यूनस्य च उदाहरणं यथा—"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥" अत्र प्रथमार्द्धे समेन समस्य द्वितीयार्द्धे अधिकेन न्यूनस्य विनिमयरूपपरिवृत्तिरिति दिक् ) ॥ ३५६॥

* इति परिवृत्तिः परिवृत्यलङ्कारस्य लक्षणोदाहरणे प्रदर्शिते इत्यर्थः ।

आशीः ।—

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।
पातु वः परमं ज्योतिरवाङ्मनसगोचरम् ॥३५७॥

इति आशीः । *

मतान्तरोक्तानां स्वोक्तेष्वन्तर्भावः ।—

अनन्वयससन्देहावुपमास्वेव दर्शितौ ।
उपमारूपकञ्चापि रूपकेष्वेव दर्शितम् ॥ ३५८ ॥

---

आशीरलङ्कारं निर्दिशति, आशीरिति ।—अभिलषिते वस्तुनि आशंसनं प्राप्तीच्छाप्रकटनम् अथवा शुभप्रार्थनम्, आशीर्नाम अलङ्कारः । (अयमलङ्कारो वैचित्र्यविशेषावहत्वाभावान्न बहुभिरादृतः, अपरे तु शुभाशंसनेन वैचित्र्यम् अस्तीत्याहुः ; उक्तञ्च —"आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृशः ॥" इति । केचित्तु नाट्ये एवास्याश्चमत्कारित्वात् नाट्यालङ्कारतयाऽसौ मन्यते ; यथा— "आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रया" इत्युपक्रम्य "इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः" इति । लक्षणञ्चास्याः तत्रैक्तम् "आशीरिष्टजनाशंसा" इति । उदाहृतञ्च यथा— "ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव । पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥" इति । अन्ये तु प्रेयोऽलङ्कारस्य भेद एवायमित्याहुः ) यथेति उदाहरणार्थम् । अवाङ्मनसगोचरं परमं ज्योतिः परमात्मा इत्यर्थः, ("यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः ) वः युष्मान्, पातु रक्षतु ॥ ३५७ ॥

सम्प्रति उद्देशक्रमप्राप्तानलङ्कारान् निरूप्य प्राप्तावसरतया मतान्तरोक्तानां केषाञ्चित् अलङ्काराणां स्वोक्तेष्वन्तर्भावं दर्श-

* इति आशीः आशीरलङ्कारनिर्देशः समाप्तः ।

यति, अनन्वयेति।—अनन्वयः,—"उपमानोपमेयत्वमेकस्यैव त्वनन्वयः" इत्युक्तलक्षणः, तथा ससन्देहः,—प्रकृते तदन्यविषया साहृश्यज्ञानजन्या या। बुद्धिर्निश्चयभिन्ना तामाचख्युः स-सन्देहम्॥" इत्युक्तप्रकारः, उपमेये उपमानविषयकः संशयः ससन्देहः इति निष्कृष्टार्थः, (सन्देह इत्यप्यस्य संज्ञान्तरम्; "स्यात् स्मृतिभ्रान्तिसन्देहैस्तदेवालङ्कृतित्रयम्" इति चन्द्रा-लोकादिदर्शनात्)। उपमासु उपमाभेदेषु एव, दर्शितौ। (तथा च—"चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव। आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा॥" इत्युक्तरूपायामसाधारणोपमायामनन्वयस्यान्तर्भावः। ननु चन्द्र इव मुख-मित्यादौ मुखे चन्द्रगतधर्मप्रतीतिः, चन्द्र इव चन्द्र इत्यत्र तु स्वस्मिन् स्वसाहृश्यस्यासम्भवात् कथमुपमा इत्यपि न वाच्यं, देशकालादिभेदेन स्वस्मिन्नपि स्वभेदसत्त्वात्; अत एव वाच-स्पतिमिश्रैर्भामत्यामुक्तम् "अथ यदिदमस्मिन् ब्रह्मपुरे" इत्यादि-श्रुतिव्याख्यानावसरे—"तेन तस्योपमेयत्वं रामरावणयुद्धवत्। अगत्यां भेदमारोप्य गतौ सत्यां न युज्यते॥" इति। तदपि तत्कल्पतरौ व्याख्यातं, ह्यस्तनाद्यतनत्वादिना युद्धे भेदारोपः क्रियते। "गगनं गगनाकारं सागरः सागरोपमः। राम-रावणयोर्युद्धं रामरावणयोरिव॥" इत्यत्र इति। एतावता हि एवंविधस्थले भेदारोपेण उपमैव इत्यभिप्रायो लभ्यते। तथा —"किं पद्ममन्तर्भ्रान्तालि? किं ते लोलेक्षणं मुखम्?। मम दोलायते चित्तमितीयं संशयोपमा॥" इत्युक्तायां संशयोपमायां ससन्देहस्य चान्तर्भावः) उपमारूपकञ्चापि रूपकेषु रूपक-भेदेषु एव, दर्शितम्। [यथा—"इष्टं साधर्म्यवैधर्म्य-दर्शनात् गौणमुख्ययोः। उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा॥" इति। तस्मादेतेषां न पृथगुक्तिरिति भावः। वामनेनापि उक्तं

**उत्प्रेक्षाभेद एवासावुत्प्रेक्षाऽवयवोऽपि च।**

सङ्कीर्णम्।—

**नानाऽलङ्कारसंसृष्टिः सङ्कीर्णन्तु निगद्यते ॥२५९॥**

यथा—"उपमाजन्यं रूपकमुपमारूपकम्" ( का० सू० वृ० ४ अधि० ३ अ० ३२ सू० ) इति। उदाहृतञ्च तेनैव यथा—"जयति चतुर्दशलोकवल्लिकन्दः" इति। केचिदिदं परम्परितरूपकमाहुः। अपरे तु उपमासहितं रूपकम् उपमारूपकं, यदुक्तम्—"उपमानेन तद्भावमुपमेयस्य रूपयन्। यत् वदत्युपमाभेदमुपमारूपकं यथा॥" इति। अस्योदाहरणं यथा—"दिवाकरकरस्पर्शादुदयाद्रेः पयोधरात्। नीलांशुकमिव प्राच्यास्तमो गलति सम्प्रति॥" अत्र नीलांशुकमिवेत्युपमया सहितमुदयाद्रेः पयोधरादिति रूपकमाचक्षते ]॥ २५८॥

उत्प्रेक्षेति।—असौ अन्योक्त इत्यर्थः, उत्प्रेक्षाऽवयवः तन्नामालङ्कारभेदः अपि, उत्प्रेक्षाया भेदः विशेष एव। ( तल्लक्षणं यथा—"श्लिष्टेनार्थेन संसृष्टः किञ्चिच्चोपमयाऽन्वितः। रूपकार्थेन वा युक्त उत्प्रेक्षाऽवयवो यथा॥" इति। तत्र श्लिष्टार्थसंसृष्टो यथा—"मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः। जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासात् गुणवत्त्वमाप॥" इति। अत्र गुणवत्त्वे श्लेषः। अयञ्च श्लेषादिसङ्कीर्णोत्प्रेक्षामात्रमतो नात्र प्रयास इति भावः। एवञ्च दृष्टान्तस्योपमायां, परिणामोल्लेखयोः रूपके, कारणमालायाः हेतौ, तथा नव्यैः परिगृहीतानामन्येषाञ्च अलङ्काराणामनयैव रीत्या उक्तालङ्कारभेदेष्वन्तर्भावो वेदितव्य इति )॥—

अथ सङ्कीर्णं निरूपयति, नानेति।—नानाऽलङ्काराणां बहूनामलङ्काराणां, संसृष्टिः एकत्र समावेशः, सङ्कीर्णं निगद्यते

सङ्कीर्णभेदौ।—

अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता।
इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः॥ ३६०॥

वैचित्र्यविशेषवत्तया प्राचीनैः पृथक् निरूच्यते,(यथा लौकिकानां हारकुण्डलादीनां प्रत्येकस्य यादृशी शोभा तदपेक्षया मिथः तेषां सम्बन्धेन पृथक् शोभातिशयजनकतया चतुर्यष्टिकस्य हारस्य गोस्तन इति, चतुर्विंशतियष्टिकस्य गुच्छार्द्ध इति, द्वात्रिंशद्यष्टिकस्य च गुच्छ इत्यादिसंज्ञया पृथगलङ्कारत्वेन व्यपदेशः, तथा काव्यालङ्काराणामपि प्रत्येकस्य यादृशं वैचित्र्यं सङ्कीर्णस्य तदपेक्षया समधिकमिति पृथग्व्यपदेश इति भावः)॥ ३५९॥

सङ्कीर्णस्य भेदावाह, अङ्गेति।—क्वचित् अङ्गाङ्गिभावेन प्रधानगुणभावेन, अवस्थानं, क्वचित् सर्वेषां समकक्षता तुल्यबलत्वम्, इति अलङ्कारसंसृष्टेः सङ्कीर्णालङ्कारस्य, द्वयी गतिः द्वौ भेदौ, लक्षणीया ज्ञातव्या इत्यर्थः। (अपरे तु अङ्गाङ्गिभावे सङ्करसंज्ञा समकक्षतायान्तु संसृष्टिसंज्ञेत्याहुः; तथा चोक्तं विश्वेश्वरपण्डितेन—"संसृष्टिस्तु परस्परमनपेक्ष्य स्थितिरनेकस्य। एकमपेक्ष्यान्यस्य प्रादुर्भावे तु सङ्करः प्रोक्तः॥" इति। तत्र अङ्गाङ्गिभावसङ्करो बहूनां यथा—"जाने युष्मत्प्रयाणे क्षितितिलक! रजोयोगदोषादशेषा दिग्योषाः स्नान्ति सद्यस्तदरिनृपवधूनेत्रनीरापगासु। सङ्गस्य त्वत्प्रतापैः समसुषसि दधौ दोहदं देवता सा प्राची प्रातः प्रसूते यदियमुरुमहत्खण्डमार्त्तण्डबिम्बम्॥" अत्र रजोयोगेति श्लेषः, दिग्योषा इति रूपकं, जाने इत्युत्प्रेक्षा, दिशां नेत्राम्बुसंयोगात्तेव [illegible]

आक्षिपन्त्यरविन्दानि मुग्धे! तव मुखश्रियम्।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्?॥३६१॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥ ३६२॥

इति सङ्कीर्णम्। *

नायकव्यवहारारोपात् समासोक्तिः, दोहदवत्त्वहेतुकतया प्रात-रित्यादिना वाक्यार्थहेतुकं काव्यलिङ्गं, तत्र रूपकं श्लेषाङ्गं, दिशां स्त्रीत्वारोपं विना रजोयोगित्वरूपार्त्तवरूपद्वितीयार्थप्रति-पत्तिविरहात्; श्लेषेण च स्नानोत्प्रेक्षा निर्वहति, आर्त्तवबोधा-भावे वारिसम्बन्धे स्नानत्वप्रकारिकायाः सम्भावनाया अनुपपत्तेः। एवं दिशां स्त्रीत्वारोपः प्रतापस्य नायकव्यवहारविषयप्रतीति-रूपसमासोक्तिमुत्थापकः, काव्यलिङ्गमपि तदुत्थाप्यमेव, दिशां स्त्रीत्वं विना गर्भजनकतायाः प्रतिपादयितुमशक्यत्वात्। एवमन्येषामन्योऽन्यमापेक्षत्वादङ्गाङ्गिभावरूपः सङ्करः इति दिक्)॥ ३६०॥

अङ्गाङ्गिभावसङ्कीर्णमुदाहरति, आक्षिपन्तीति।—हे मुग्धे! अरविन्दानि तव मुखश्रियम् आक्षिपन्ति तिरस्कुर्वन्ति, जिगी-षन्तीत्यर्थः, तथा हि, कोषदण्डसमग्राणां कोषो धनसमूहः कुड्मलश्च, दण्डः चतुर्थोपायः नालश्च, ताभ्यां समग्राणां पूर्णाना-मित्यर्थः, एषां दुष्करं किम् अस्ति? (अत्र श्लेषः अर्थान्तरन्यास-स्याङ्गम्, अर्थान्तरन्यासश्च पूर्वार्द्धस्थिताया उपमाया इत्यङ्गाङ्गि-भावो बोध्यः)॥ ३६१॥

समकक्षतायां सङ्कीर्णं निदर्शयति, लिम्पतीति।—तमः अङ्गानि लिम्पतीव, नभः अञ्जनं वर्षतीव, दृष्टिः असत्पुरुषस्य

* इति सङ्कीर्णं सङ्कीर्णालङ्कारनिरूपणं समाप्तम्।

नीचस्य, सेवेव विफलतां गता। (अत्र पूर्वार्द्धे उत्प्रेक्षायाः उत्तरार्द्धे उपमायाश्च निरपेक्षतया परस्परं प्राधान्येनावस्थानात् समकक्षतेति बोध्यम्। यथा वा बहूनां—"एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरैर्गर्जद्भिः सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः। तत् किं प्रोषितभर्तृवध्यपटहो हा हा हताशो बकः प्रावृड् प्रावृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन्॥" अत्र गजेन्द्रमलिनेत्युपमा, वध्यपटह इति रूपकं, क्षारं क्षते प्रक्षिपन् इति निदर्शना, एतेषाञ्च निरपेक्षाणामेव सत्त्वात् समकक्षता-सङ्कीर्णभेदः, मतान्तरोक्तः संसृष्टिभेदो वा बोध्यः। नव्यास्तु यत्र कस्यचिदलङ्कारस्य साधकम् अन्यस्य च बाधकं नास्ति तत्रान्यतमनिर्णयाभावात् सन्देहसङ्कराख्यमपरमपि सङ्कीर्णभेदमङ्गीकुर्वन्ति; तदुक्तं विश्वेश्वरपण्डितेन—"साधक-बाधकमानाभावाच्चैकस्य निर्णयाभावे" इति। यथा—"नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति। अधुनाऽपि निरुद्धाशमपि जीर्णमिदं तमः॥" अत्र हि कामोद्दीपककालस्य सद्भावान्तरेण प्रतिपादनात् किं पर्य्यायोक्तम्? किं वा इन्दुबिम्बेन मुखस्य निगीर्णत्वादतिशयोक्तिः? आहोस्वित् एतदिति मुखं निर्दिश्य तस्येन्दुबिम्बेन सहाभेदवर्णनाद्रूपकम्? यद्वा प्रदोषवर्णने चन्द्र-बिम्बस्य प्रकृतत्वेन साम्यविशेषणसाम्यान्मुखप्रतीत्या समासोक्तिः? उत मुखवर्णने प्रकृते अप्रस्तुतस्य चन्द्रस्यैव वर्णनादप्रस्तुतप्रशंसेति सन्देहः। तथा नवीनोक्तः अपरश्च सङ्करभेदः "एकपदाश्रयत्वावलङ्कृत्योरवगतावन्य." इत्युक्तलक्षणः एकाश्रय-प्रवेशरूपोऽवगन्तव्यः। यथा—"स्पष्टोल्लसत्किरणकेसरसूर्य-बिम्ब-विस्तीर्णकर्णिकमथो दिवसारविन्दम्। श्लिष्टाष्टदिग्दल-कपालमुखावतार-बद्धान्धकारमधुपावलि सञ्चुकोच॥" अत्रैक-पदानुप्रविष्टौ रूपकानुप्रासौ। ततश्च सङ्करस्य त्रिविधत्व-

श्लेषस्य बहुषु सद्भावीर्णनम्।—

श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।
भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्॥२६३॥

भाविकम्।—

तत् भाविकमिति प्राहुः प्रबन्धविषयं गुणम्।
भावः कवेरभिप्रायः काव्येष्वासिद्धि संस्थितः॥२६४॥

मिति समाधानं नवीनानाम्; उक्तञ्च विश्वनाथेन—"अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ। सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥" इति। स्वमते तु द्विविधभेदेष्वेव सन्देहैकाश्रयानुप्रवेशयोः प्रवेशात् पृथग्भेदो न दर्शित इति)॥ २६२॥

श्लेषस्य बहुषु सद्भावं दर्शयति, श्लेष इति।—श्लेषः प्रायः बाहुल्येन, सर्वासु वक्रोक्तिषु वचनभङ्गिरूपासु अलङ्कृतिषु, श्रियं शोभां, पुष्णाति। वक्रोक्तिषु इत्यनेन तद्भिन्नमपि काव्यमस्तीति प्रतीयते, अन्यथा सर्वपदेनैव सिद्धेरित्यलङ्कारगतं काव्यस्य भेदद्वयं दर्शयितुमाह, भिन्नमिति।—वाङ्मयं काव्यं, स्वभावोक्तिः जात्यादीनां यथावत् स्वभाववर्णनरूपा, स्वभावाख्यानाद्यलङ्कारवदित्यर्थः, तथा वक्रोक्तिश्च भणितिभङ्ग्यात्मकोपमाद्यलङ्कारवच्च, इति भेदद्वयात्, द्विधा भिन्नं द्विविधं, स्वभावोक्तिमत् वक्रोक्तिमच्चेति भावः॥ २६३॥

इदानीं सर्वालङ्कारसङ्ग्राहकं भाविकं निरूपयति, तदिति।—प्रबन्धा महाकाव्यनाटकाख्यायिकादयः, तद्विषयं तद्गतं, गुणं चमत्कारजनकधर्मविशेषं, तत् अलङ्कारेषु प्रसिद्धं, भाविकं तदाख्यमलङ्कारम्, इति प्राहुः। (चमत्कारकधर्मविशेषाणां केषाञ्चित् स्वभावाख्यानाद्यलङ्कारत्वाम्ना अभिहितं, तथाविधान्यनन्तानि च सन्ति, तत्तन्नाम्ना वक्तुमशक्यान्येव,

परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम्।
विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥३६५
उक्तिक्रमबलाद्व्यक्तिर्गम्भीरस्यापि वस्तुनः।
भावायत्तमिदं सर्वमिति तद्भाविकं विदुः ॥३६६

ततश्च प्रबन्धगतमेकमेव वैचित्र्यं भाविकमिति नाम्ना अभिहि मिति भावः) भाविकनामव्युत्पत्तिं दर्शयितुमाह, भाव इ —कवेरभिप्रायः भावः, तत्सम्बन्धितया भाविकमित्यन्वर्थसं बोद्धव्या, स च भावः काव्येषु आसिद्धि समाप्तिपर्य्यन्तं, संस्थि (एतेनास्य अन्यालङ्कारवत् न केवलं पदवाक्यगतत्वं, कि महावाक्यघटितप्रबन्धगतत्वमपीति बोध्यम्) ॥ ३६४ ॥

कवेरभिप्रेतान् कतिचित् प्रबन्धगतगुणान् दर्शयति, प स्परेत्यादि।—सर्वेषां वस्तूनाम् आधिकारिकेतिवृत्तानां, पर्वं तदुपयोगिनां प्रासङ्गिकेतिवृत्तानाञ्च, परस्परोपकारित्व, कवेरभि प्रेतमिति शेषः। (उक्तञ्च नखकुट्टेन—"इदं पुनर्वस्तु बुधैर्द्वि परिकल्प्यते। आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् ॥ इति। यथा रामायणे रामचरितम् आधिकारिकं, सुग्रीवादि चरितं प्रासङ्गिकं, तयोश्च अङ्गाङ्गिभावेन परस्परोपकारित्वम् महाकाव्यादावपि नगरार्णवशैलगजतुरगादिवर्णनस्य साक्षा परम्परया वा प्रधानोपकारित्वं दृश्यते। एवमन्यत्रापि साक्षा परम्परया वा वेदितव्यम्) तथा व्यर्थानां प्रकृतानुपयोगिनां विशेषणानाम् अक्रिया अननुष्ठानम्, अप्रयोग इत्यर्थः, साभि प्रायविशेषणोपन्यास इति भावः, (अयञ्च परिकरालङ्कार इति प्रकाशकारः, यथा—"विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः" इति) तथा स्थानानां प्रकृतोपयोगिविषयाणां, वर्णना

**यच्च सन्ध्यङ्गवृत्त्यङ्ग-लक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदञ्चेष्टमलङ्कारतयैव नः॥ २६७॥**

इति भाविकम्। *

किञ्च, उक्तिक्रमः वचनपरिपाटी, तद्बलात् तद्वशात्, तदीयप्रतिपादकतासामर्थ्यादित्यर्थः, गम्भीरस्यापि वस्तुनः निगूढस्यापि अर्थस्य, व्यक्तिः प्रस्फुटत्वं, या हि तव्यैरलङ्कारभेदरूपेण निर्दिष्टेति भावः, तत् इदं सर्वं भावायत्तम् अभिप्रायाधीनम्, इति भावायत्तत्वाद्धेतोः, भाविकं विदुः, आलङ्कारिका इति शेषः। ( भावः कवेरभिप्रायः अस्त्यस्य इति विषयत्वाख्यसम्बन्धपरषष्ठीसमर्थात् ठन्-प्रत्ययसिद्धत्वेन तादृशार्थलाभादिति भावः। यद्वा—कविगतो भावः आशयः श्रोतरि प्रतिबिम्बत्वेन अस्तीति भाविकम्। यद्वा—भावः भावना वा, पुनः पुनश्चेतसि निवेशनं, सोऽत्रास्ति इति च व्युत्पत्त्यर्थो दृश्यते। भूतानां भाविनाञ्च पदार्थानां यल्लौकिकप्रत्यक्षविषयत्वं तद्भाविकमिति केचित्। भूतस्य भविष्यतो वा अद्भुतपदार्थस्य प्रत्यक्षायमाणत्वं भाविकमिति विश्वनाथः। अन्ये तु—“प्रत्यक्षा इव यत्रार्थाः दृश्यन्ते भूतभाविनः। अत्यद्भुताः स्यात्तद्वाचामनाकुल्येन भाविकम्॥” इत्याहुः। तत्रोदाहरणं यथा—“मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः। येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥” अत्र वर्णनीयस्य वर्णनावशादेव प्रत्यक्षायमाणत्वम्। क्वचित् प्रत्यक्षायमाणस्यैव वर्णनं यथा—“अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः। अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम्॥” इति )॥ २६५॥ २६६॥

यच्चेति।—किञ्चेति चार्थः। सन्धयः मुखादयः पञ्च, तद-

* इति भाविकं भाविकालङ्कारलक्षणं समाप्तम्।

पन्था: स एष विवृत: परिमाणवृत्त्या
संहृत्य विस्तरमनन्तमलङ्क्रियाणाम्।
वाचामतीत्य विषयं परिवर्त्तमानान्
अभ्यास एव विवरीतुमलं विशेषान्॥ ३६८॥

इति आचार्य्यदण्डिन: कृतौ काव्यादर्शे
अर्थालङ्कारविभागो नाम
द्वितीय: परिच्छेद:।

ङ्गानि उपक्षेपादीनि चतु:षष्टिप्रकाराणि, वृत्तय: कौशिकीत्यादयश्चतस्र:, तदङ्गानि नर्मादीनि षोडश, लक्षणानि भूषणादीनि षट्त्रिंशत्प्रकाराणि, (आदिपदेन नाट्यालङ्कारादीनां ग्रहणं, ते च आशीरादयस्त्रयस्त्रिंशत्, वीथ्यङ्गानि उद्घात्यकादीनि त्रयोदश, लास्याङ्गानि गेयादीनि दश) एतत् सर्वं यत् आगमान्तरे ग्रन्थान्तरे, व्यावर्णितं नाट्यशोभाकरत्वेन विशेषेण व्याख्यातम्, इदञ्च तदिदं सर्वं, न: अस्माकम्, अलङ्कारतयैव इष्टम् अभिलषितम्, अलङ्कारनाम्नैव कथितमित्यर्थ:, तेषाञ्च यथायथमुक्तेष्वलङ्कारेष्वन्तर्भाव इति भाव:॥ ३६७॥

परिच्छेदमिमम् उपसंहरति, पन्था इति।—अलङ्क्रियाणां स्वभावोक्त्याद्यलङ्काराणाम्, अनन्तम् अशेषं, विस्तरं प्रपञ्चं, संहृत्य सङ्गृह्य, परिमाणवृत्त्या परिमितत्वेन, अनन्तत्वात् साकल्येन वक्तुमशक्यतया शेषग्रहणन्यायेनेति भाव:, एष: स: प्रसिद्ध:, पन्था मार्ग:, विवृत:। अनेनैव पथा अनुसरणे अपरेऽपि ज्ञातव्या इत्याह, वाचामिति।—वाचां विषयम् अतीत्य परिवर्त्तमानान् अतिप्रभूततया वक्तुमशक्यानित्यर्थ:, विशेषान् तान् भेदान्, विवरीतुं प्रकाशयितुम्, अभ्यास एव अस्यैव मार्गस्य

## तृतीयः परिच्छेदः।

यमकम्।—

अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः।
यमकं तच्च पादानामादिमध्यान्तगोचरम्॥ १॥

पुनः पुनरालोचनमेव, अलं शक्ताः, सङ्क्षिप्तस्यापि अस्य मार्गस्य पुनः पुनरभ्यासेनैव अपरेऽपि वेदितव्या इति भावः। ("एषः" इत्यत्र "एव" इति पुस्तकान्तरे पाठः, तत्र पन्था एव इत्यर्थः)॥ ३६८॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितायां
काव्यादर्शटीकायां द्वितीयः परिच्छेदः।

---

द्वितीयपरिच्छेदे "काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते" इत्यनेन शब्दार्थालङ्कारसामान्यलक्षणमभिधाय शब्दस्य प्रथमबुद्धिविषयत्वेन प्रथमं लक्षयितुमुचितानपि शब्दालङ्कारान् अतिवैचित्र्याधायकत्वाभावात् अनिरूप्य वैचित्र्यातिशयाधायकाः अर्थालङ्कारा एव दर्शिताः। सम्प्रति प्रथमपरिच्छेदे सामान्यतो निरूपितेष्वपि शब्दालङ्कारेषु तृतीयपरिच्छेदे प्राप्तावसरतया अनुप्रासभिन्नान् तद्विशेषान् निरूपयिष्यन् दोषलक्षणञ्चाभिधास्यन् उक्तलक्षणमपि यमकमनूद्य तद्भेदमनुवदति, अव्यपेतेति।—अव्यपेतः अव्यवहितः, व्यपेतः व्यवहितश्च, आत्मा स्वरूपं यस्यास्तथाभूता, वर्णसंहतेः स्वरव्यञ्जनसङ्घातस्य, व्यावृत्तिः विशेषेण पुनरावृत्तिः, यमकम्। (अस्य विशेषलक्षणं पूर्वमेवोक्तमिति नात्रोक्तम्। यमकघटकपदानामव्यवहितव्यवहितत्वेन भेदप्रदर्शनाय उक्तमव्यपेतेत्यादि, पूर्वोच्चारितवर्णसङ्घस्य क्वचिदव्यवधानेन क्वचित् व्यवधानेन च

यमकभेदाः ।—

एकद्वित्रिचतुष्पाद-यमकानां विकल्पनाः ।
आदिमध्यान्तमध्यान्त-मध्याद्याद्यन्तसर्वतः ॥ २ ॥

---

पुनरावृत्तिरिति प्रथमं भेदद्वयम् अभिहितम् ; उक्तञ्च सरस्वती-कण्ठाभरणे—"विभिन्नार्थैकरूपाया याऽऽवृत्तिर्वर्णसंहतेः । अव्यपेतव्यपेतात्मा यमकं तन्निगद्यते ॥" इति ) यमकस्य तस्य स्थाननिरूपणार्थमाह, तस्येति ।—तच्च पादानाम् एक-द्वि-त्रि-चतुरात्मकानां श्लोकचरणानाम्, आदिश्च मध्यश्च अन्तश्च गोचरः विषयः यस्य तत् । [ ततश्च प्रथमपादस्यादिभागगतं मध्यभाग-गतम् अन्तभागगतञ्चेति विभागप्रकारः, एवं द्वितीयादि-पादानामपि आदिगतं मध्यगतम् अन्तगतञ्च ; ततश्च पादानां खण्डत्रयगतत्वमेव यमकस्येति स्थाननियमस्तु नाशङ्क्यः, मध्य-पदेन सम्भवत्खण्डमात्रस्य प्राप्तेः चतुरादिखण्डेष्वपि अस्य नियमः ज्ञातव्यः, यदुक्तं प्रकाशकारेण—"त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत्" इति । एतदुपलक्षणं, तेन पादगतमपि बोध्यम्, उक्तञ्च वामनेन—"पादः पादस्यैकस्यानेकस्य चादि-मध्यान्तभागाः स्थानानि" ( का० सू० वृ० ४ अधि० १ अ० २ सू० ) इति । अत्रापि पाद इत्युपलक्षणं, तेन पादः पाद-खण्डाः पद्यार्द्धं समस्तपद्यञ्च यमकस्य स्थानानीति बोध्यम् । कण्ठाभरणेऽपि—"तदव्यपेतयमकं व्यपेतयमकन्तथा । स्थाना-स्थानविभागाभ्यां पादभेदाच्च भिद्यते । तत्र पादादिमध्यान्ताः स्थानं तेषूपकल्प्यते ॥" इति ] ॥ १ ॥

स्थानभेदेन यमकभेदमभिधाय पादगतं भेदं दर्शयन् क्रमेण तत्तद्भेदान् निर्दिशति, एकेत्यादि ।—एकद्वित्रिचतुष्पाद-यम-कानाम् अविमिश्राणामिति भावः, विकल्पनाः "पादाना-

अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः ।
सुकरा दुष्कराश्चैव दृश्यन्ते तेऽत्र केचन ॥ ३ ॥

---

मादिमध्यान्तगोचरम्" इत्यनेन अनन्तरमेव सामान्यत उक्ताः प्रभेदाः, ज्ञातव्या इति शेषः, पादचतुष्टयात्मकस्य पद्यस्य प्रतिपादम् आदिमध्यान्तगतत्वेन त्रिधा भिन्नस्य तस्य पुनः द्वादशविधत्वं ज्ञातव्यम् इत्यर्थः । (ते च अमिश्रयमके एव वेदितव्याः; तथा हि, अमिश्रितं प्रथमपादादिगतं द्वितीयपादादिगतं तृतीयपादादिगतं चतुर्थपादादिगतञ्चेति चतुर्विधमादिभागयमकम्, एवं प्रथमादिपादमध्यान्तभागगतयमकमपि, ततश्च मिलित्वा द्वादशविधत्वमविमिश्रितयमकस्य इति सङ्क्षेपः । अयञ्च भेदः अव्यपेत-व्यपेतसाधारणः । केचित्तु एकद्वीत्यादि श्लोकार्द्धमेवं व्याख्यानयन्ति, तद्यथा—"पद्यस्य चतुष्पादात्मकत्वात् प्रतिखण्डं चत्वारश्चत्वारो भेदा ज्ञातव्या इत्यर्थः, यथा अविमिश्रितमादिभागयमकं प्रथमपाद एव द्वितीयपाद एव तृतीयपाद एव चतुर्थपाद एवेति चतुर्विधं, तथा मध्यादिभागयमकमपि प्रत्येकं चतुर्विधमिति" इति )। अमिश्रभेदं दर्शयित्वा मिश्रयमकभेदं दर्शयति,अत्येति।—सम्भेदः सजातीययमकानामन्योऽन्यसम्मिश्रणं योनिर्येषां तादृशाः विमिश्रा इत्यर्थः, तेषां यमकानां, भेदाः आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः स्थितत्वेन अत्यन्तबहवः अतिविस्तराः, ज्ञेया इति शेषः । ( पदच्छेदस्तु आदिमध्यान्त मध्यान्त मध्याद्य आद्यन्त सर्वतः इत्येवंरूपेणेति। सर्वत्र मध्यशब्दः द्वितीयतृतीयपादबोधकः, शेषमादिपदञ्च प्रथमद्वितीयतृतीयपादबोधकं, त्रयाणामपि प्रथमादिपादानां चतुर्थपादस्य पूर्वस्थितत्वेनादित्वात्; ततश्च आदिमध्यान्तेत्यत्र मध्यपदस्य द्वितीयतृतीयपादद्वयात्मकत्वात् आदि:

प्रथमपादगताव्यपेताविमिश्रादिभागयमकम् ।—

मानेन मानेन सखि ! प्रणयो भूत् प्रिये जने ।
खण्डिता कण्ठमाश्लिष्य तमेव कुरु सव्रपम् ॥ ४ ॥

---

मध्यगतत्वेन द्वौ आद्यन्तगतत्वेनैकः इति मिलित्वा त्रयो भेदाः ज्ञेयाः ; ते च त्रयः प्रथमद्वितीय ( आदिमध्य ) पादगतत्वेन, प्रथमतृतीय ( आदिमध्य ) पादगतत्वेन, प्रथमचतुर्थ (आद्यन्त)-पादगतत्वेन चेति बोद्धव्यम् । मध्यान्तेत्यत्रापि मध्यपदस्य द्वितीयतृतीयपादद्वयबोधकत्वात् भेदत्रयमेव बोध्यम ; तद्यथा, द्वितीयतृतीयपादयोः ( मध्यमध्ययोः ) एकः, द्वितीयचतुर्थ-पादयोः तृतीयचतुर्थपादयोश्च मध्यान्तत्वेन द्वौ इति मिलित्वा त्रयः प्रकाराः । मध्याद्येत्यत्र द्वितीयतृतीयपादयोर्मध्यत्वात् प्रथमद्वितीयतृतीयपादगतत्वेनैक एव भेदः । अत्र आद्यश्च मध्यौ चेति विग्रहे धर्मार्थादिपाठात् आद्यशब्दस्य परनिपातः । आद्यन्तेत्यत्र आदिपदस्य प्रथमद्वितीयतृतीयपादपरत्वात् त्रय एव भेदाः सम्भवन्ति, यथा, प्रथमद्वितीयचतुर्थपादगतः प्रथम-तृतीयचतुर्थपादगतः, द्वितीयतृतीयचतुर्थपादगतश्चेति तत्-प्रकाराः। सर्वत इत्यत्र च प्रथमद्वितीयतृतीयचतुर्थपादगतत्वेनैक एव भेदः । एवं मिलित्वा व्यामिश्रयमकस्य एकादशभेदाः बोद्धव्याः, अन्ये च अस्थानस्थूलसूक्ष्मादियमकभेदाः भोजादौ द्रष्टव्याः । सर्वत इति सप्तमीबहुवचनान्तपदं, सर्वेषु पादेषु इत्यर्थः ) । ते च सुकराः सुसाध्याः सुबोधाश्च, दुष्कराश्चैव दुःसाध्याः दुर्बोधाश्चैव, कवीनां बोद्धृणाञ्चेति शेषः, अतः अत्र केचन दर्श्यन्ते उदाह्रियन्ते इत्यर्थः, न तु सर्वे इति भावः । ( "तेऽत्र" इत्यत्र "तत्र" इति भोजोक्तपाठः ) ॥ २ ॥ ३ ॥

तत्र प्रथमपादस्यमव्यवहितममिश्रम् आदिभागयमकं

तत्र द्वितीयपादगतम्।—

मेघनादेन हंसानां मदनो मदनोदिना।
नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥ ५ ॥

निर्दिशति, मानेनेति।—हे सखि! प्रिये जने प्रणयिनि, अनेन ईदृशेन, अतिप्रबलत्वादस्माकमपि पीड़ाजनकेनेति भावः, मानेन ईर्ष्याकोपेन सह, ("मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः" इति लक्षणात्) प्रणयः परिचयः, तवेति शेषः, मा भूत्, प्रियजनं प्रति एतादृशं मानं मा कुरु इत्यर्थः, खण्डिता—"पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥" इत्युक्तलक्षणा, अपि त्वमिति शेषः, कण्ठमाश्लिष्य आलिङ्ग्य, तं प्रियमेव, सव्रणं सलज्जं, कुरु, अपकारिणि प्रणयप्रदर्शनमेव तस्य लज्जाकरत्वात् गुरु शासनमिति भावः। (अतिमानिनीं खण्डितां प्रति तत्सख्या उक्तिरियम्। अत्र "मानेन मानेन" इति अव्यवहितमादिपादगतमादिभागयमकं, तच्च पादान्तरासङ्कीर्णत्वादमिश्रम्। यत्र तु पादान्तरमिश्रितत्वं तत्र मिश्रत्वमन्यत्र शुद्धत्वमिति भेदोऽपि व्यपेताव्यपेतवत् स्वयमूहनीयः इति) ॥ ४ ॥

द्वितीयपादगतं तदेव निर्दिशति, मेघनादेनेति।—मदनः कामः, रत्या स्वपत्न्या अनुरागेण च, सह हंसानां मदनोदिना गर्वमपनयता, मेघनादेन मेघगर्जितेन, वर्षासु हंसानां निर्मदत्वप्रसिद्धेरिति भावः, नुन्नः अपनीतः, मानो यस्मात् तथोक्तं, स्त्रीणां मनः चित्तं, विगाहते आलोड़यति, व्याकुलयतीत्यर्थः, मेघगर्जनस्य उद्दीपकत्वात् वर्षासु प्रमदानां मनः सानुरागं सकामञ्च भवतीति भावः। (अत्र "मदनो मदनो" इति द्वितीयपादगतमविमिश्रमव्यवहितमादिभागयमकम्) ॥ ५ ॥

तदेव तृतीयपादगतम्।—

राजन्वत्यः प्रजा जाता भवन्तं प्राप्य सत्पतिम्।
चतुरं चतुरम्भोधि-रसनोर्वीकरग्रहे ॥ ६ ॥

तदेव चतुर्थपादगतम्।—

अरण्यं कैश्चिदाक्रान्तं कैश्चित् सद्म दिवौकसाम्।
पदातिरथनागाश्व-रहितैरहितैस्तव ॥ ७ ॥

तृतीयपादगतं तदेवोदाहरति, राजन्वत्य इति।—चतुरम्भोधिरसनायाः चत्वारः अम्भोधयः सागरा एव, रसनाः काञ्चीदामानि, कटीभूषणविशेषा इत्यर्थः, यस्याः तस्याः, चतुःसागरपरिच्छिन्नाया इति यावत्, उर्व्याः पृथिव्याः, करग्रहे षष्ठांशरूपराजग्राह्यभागग्रहणे पाणिग्रहे च, चतुरं निपुणम्, आ-समुद्रकरग्राहिणमित्यर्थः, भवन्तं सत्पतिं सुरक्षकं सुभर्त्तारञ्च, प्राप्य प्रजाः राजन्वत्यः सुनृपतियुक्ताः, ("सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान्" इत्यमरः) जाताः। (अत्र "चतुरं चतुरम्" इति तृतीयपादगतमव्यवहितमादिभागयमकं बुद्धम्) ॥ ६ ॥

चतुर्थपादगतं तदेव निर्दिशति, अरण्यमिति।—तव कैश्चित् अहितैः शत्रुभिः, पलायित्वा जीवद्भिरिति भावः, पदातिरथनागाश्वरहितैः चतुरङ्गबलविहीनैः सद्भिरित्यर्थः, ("हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः) अरण्यं, पलायित्वा जीवतां लोकालये अवस्थानासम्भवादिति भावः, तथा कैश्चिच्च अहितैः, सम्मुखसङ्ग्रामेण मृतैरिति भावः, (अत्रापि पदात्यादिरहितैरिति योजनीयम्) दिवौकसां सद्म सुरलोकः, आक्रान्तम् आश्रितमित्यर्थः, युद्धे मरणस्य स्वर्गप्रापकत्वादिति भावः, ("हतो वा प्राप्स्यसि स्वर्गं जित्वा वा

प्रथमद्वितीयपादगताव्यपेतमिश्रादिभागयमकम्।—

**मधुरं मधुरम्भोजवदने! वद नेत्रयोः।**
**विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किं नु ते? ॥८॥**

भोक्ष्यसे महीम्" इति गीतायां भगवदुक्तेः। अत्र "रहितैरहितैः" इति चतुर्थपादगतमव्यवहितममिश्रमादिभागयमकम्)॥७॥

अथ सम्भेदयोनीनव्यपेतयमकभेदान् विवरीतुमादिमध्यान्तेत्यादिनोक्तं प्रथमद्वितीय-प्रथमतृतीय-प्रथमचतुर्थपादगतभेदत्रयेषु आदौ प्रथमद्वितीय (आदिमध्य) पादगतमादिभागयमकमुदाहरति, मधुरमिति।—अम्भोजवदने! हे पद्ममुखि! मधुः वसन्तः, ते तव, नेत्रयोः भ्रमरभ्रान्त्या भ्रमराविमौ इति भ्रमेण, मुखाम्भोजापरि नेत्रयोर्वर्त्तमानत्वात् अम्भोजे भ्रमरयुगलावस्थानस्य सम्भवाच्च भ्रमो युज्यते इति भावः, मधुरं विभ्रमं शोभां, विडम्बयति विशेषेण प्रेरयति, समर्पयतीत्यर्थः, ("डम्ब प्रेरणे" इत्यस्य चौरादिकस्य रूपम्) नु इति वितर्के, किम्? वद कथय; नेत्रयोस्ते ईदृशो विभ्रमः भ्रमरभ्रान्तिमता वसन्तेनैव किं समुत्पादितः? इति भावः। (वसन्तोदये समुत्पन्ने अम्भोजे भ्रमरविलाससम्भवात् नु इति वितर्कबोधकं पदमत्र युज्यते एव। केचित्तु अम्भोजवदने इति सप्तम्यन्तमुक्त्वा तव वर्त्तमानयोर्नेत्रयोरिति योजयन्ति। "नु" इत्यत्र "न" इति पाठे—न विडम्बयति किम्? अपि तु विडम्बयत्येवेत्यर्थः। अत्र "मधुरं मधुरम्" इति "वदने वदने" इति च यमकघटकपदानां प्रथमद्वितीय (आदिमध्य) पादयोरादिभागस्थिततया आदिभागलक्षणं, पादद्वयमिश्रणाच्च मिश्रसंज्ञकं, तथा पदानामव्यवधानतया अव्यपेतं, ततश्चेदं प्रथमद्वितीय (आदिमध्य)-पादगतमिश्राव्यपेतादिभागयमकम्)॥ ८॥

तत्र प्रथमतृतीयपादगतम् ।—

वारणो वा रणोद्दामो हयो वा स्मर ! दुर्द्धरः ।
न यतो नयतोऽन्तं नस्तदहो ! विक्रमस्तव ॥ ९ ॥

तत्र प्रथमचतुर्थपादगतम् ।—

राजितैराजितैक्ष्ण्येन जीयते त्वादृशैर्नृपैः ।
नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥

तदेव प्रथमतृतीय ( आदिमध्य ) पादगतमुदाहरति, वारण इति ।—हे स्मर ! यतः यस्मात्, तव रणोद्दामो युद्धदुर्मदः, वारणः हस्ती वा, दुर्द्धरः दुर्धर्षः, हयः अश्वो वा, न, अस्तीति शेषः, तत् तस्मात्, युद्धोपकरणाभावादपीत्यर्थः, नः अस्मान्, विरहिणः इत्यर्थः, अन्तं नाशं, नयतः प्रापयतः, तव विक्रमः अहो ! आश्चर्यभूत इत्यर्थः । (अत्र "वारणो वारणो" "नयतो नयतो" इति यमकघटकपदानां प्रथमतृतीय ( आदिमध्य) पादयोरादिगतत्वात् प्रथमतृतीय ( आदिमध्य ) पादगतं मिश्रमव्यवहितमादिभागयमकमिति बोध्यम् ) ॥ ९ ॥

तदेव प्रथमचतुर्थ ( आद्यन्त ) पादगतमुदाहरति, राजितैरिति ।—आजिः युद्धं, तत्र तैक्ष्ण्येन तीक्ष्णतया, युद्धदुर्मदत्वेन इत्यर्थः, राजितैः शोभितैः, त्वादृशैः भवादृशैः, नृपैः वसुधा पृथिवी, तत्रत्यो जन इति भावः, जीयते जयेन आदौ वशीक्रियते, युद्धव्यापारेण पीड्यते इति भावः, पुनः जयानन्तरमित्यर्थः, वसुधारया वसूनां धनानां, धारया धारावर्षणेन, अविरतदानेनेत्यर्थः, तृप्तिं सन्तोषं, नीयते च । ( अत्र "राजितै-राजितै" "वसुधा वसुधा" इति च यमकघटकपदानां प्रथमचतुर्थ ( आद्यन्त ) पादयोरादिगतत्वात् पादद्वयमिश्रणात् अव्यवधाननिवेशाच्च प्रथमचतुर्थ ( आद्यन्त ) पादगतं मिश्र-

द्वितीयतृतीयपादगताव्यपेतमिश्रादिभागयमकम्।—

करोति सहकारस्य कलिकोत्कलिकोत्तरम्।
मन्मनो मन्मनोऽप्येष मत्तकोकिलनिस्वनः॥११॥

मव्यवहितमादिभागयमकमिति मन्ना ज्ञातव्या। मधुरमित्यादिना क्रमेण आदिमध्यान्तेत्यनेन निरूपितास्त्रयो भेदा उदाहृताः )॥ १० ॥

इत्थमादिमध्यान्तभेदं दर्शयित्वा मध्यान्तेत्यनेन प्रतिपादितं मध्यमध्यं मध्यान्तं मध्यान्तञ्चेति तस्य प्रकारत्रयं क्रमेण दर्शयन् प्रथमं द्वितीयतृतीय ( मध्यमध्य ) पादगतमव्यपेतादिभागयमकमुदाहरति, करोतीति।—सहकारस्य आम्रस्य, कलिका मुकुलं, तथा मन्मनः,—"सुरते कर्णमूले तु निजदेशीयभाषया। दम्पत्योः कथनं यत्तु मन्मनं तं प्रचक्षते॥" इत्युक्तलक्षणः कर्णमूले रहस्यालापः, इवेति अध्याहार्य्यम्; एष मत्तानां वसन्तागमनेन उन्मदानां, कोकिलानां निस्वनोऽपि मन्मनः मम मानसम, उत्कलिकोत्तरम उत्कण्ठाकुलमित्यर्थः, करोति, आम्रकलिकायाः कोकिलालापस्य च अतीवोद्दीपकत्वादिति भावः। ( विरहिण उक्तिरियम्। अत्र "कलिको कलिको" "मन्मनो मन्मनो" इति यमकघटकपदानां द्वितीयतृतीयपादादिगतत्वेन द्वितीयतृतीयपादयोश्च मध्यत्वेनाभिधानात् द्वितीयतृतीय ( मध्यमध्य ) पादगतमव्यपेतादिभागयमकं, पादद्वयमिश्रणाच्च मिश्रमित्यवधेयम्। किञ्च "कलिकोत्कलिको" इत्यत्र तकारस्य मध्यपातित्वेऽपि स्वरशून्यत्वात् श्लोकीयाक्षरसङ्ख्याऽपूरकतया व्यवधानमध्ये अगणनात् यमकस्य न अव्यपेतत्वहानिः, सस्वरस्यैव व्यञ्जनस्य व्यवधायकत्वाभ्युपगमात् इति बोध्यम् )॥ ११ ॥

तदेव द्वितीयचतुर्थपादगतम्।—

कथं त्वदुपलम्भाशा-विहताविह तादृशी।
अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ? ॥१२॥

तदेव तृतीयचतुर्थपादगतम्।—

निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना।
तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥१३॥

तदेव द्वितीयचतुर्थं (मध्यान्त) पादगतमुदाहरति, कथमिति।—इह अस्मिन् प्रदेशे, तव उपलम्भः प्राप्तिः, तस्य आशा प्रत्याशा, तस्याः विहतौ विनाशे, अङ्गनाशिनी शरीरनिकृन्तनी, तादृशी अनुभूयमाना, अवस्था स्मरदशाविशेषः, अङ्गनाम् अबलां, मामिति शेषः, आरोढुम् आक्रमितुं, कथं न अलं न समर्था ? अपि तु समर्था एव, त्वद्विरहे अहं मृतप्राया जाताऽस्मीति तात्पर्य्यार्थः। (अत्र "विहताविहता" "मङ्गनामङ्गना" इति यमकघटकपदानां द्वितीयचतुर्थपादादिगतत्वेन द्वितीयपादस्य मध्यत्वाच्चतुर्थपादस्य अन्तत्वाच्च द्वितीयचतुर्थ (मध्यान्त) पादगतं मिश्रमव्यवहितमादिभागयमकम्। केचिदिमं युक्पादयमकमाहुः ; तल्लक्षणं यथा—"द्वितीये च चतुर्थे च यमकं यत्र दृश्यते। युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैः॥" इति। उदाहरणान्तरं यथा भट्टिकाव्ये—"रणपण्डितोऽग्रविबुधारिपुरे कलहं स राममहितः कृतवान्। ज्वलदग्नि रावणगृहञ्च बलात् कलहंसरामममहितः कृतवान्॥" इति)॥ १२॥

तदेव तृतीयचतुर्थं (मध्यान्त) पादगतमुदाहरति, निगृह्येति।—नलिनेषु पद्मेषु, उन्मुखाः पतनाभिमुखाः,

तत्रैव प्रथमद्वितीयतृतीयपादगतम्।—

विशदा विशदामत्त-सारसे सारसे जले।
कुरुते कुरुतेनेयं हंसी मामन्तकामिषम्॥ १४॥

अलिनः भ्रमराः, बालपल्लवैः नवपल्लवैः, शोभते इति तथोक्तेन, तरुणा वृक्षेण, आकृष्टान् आकृष्टान्, तद्दर्शनोत्सुकान् इत्यर्थः, तरुणान् यूनः, नेत्रे निगृह्य बलेन गृहीत्वा, कर्षन्निव, निजदर्शनोत्सुकनयनान् कुर्वन्तीत्यर्थः। (अत्र "तरुणा तरुणा" "नलिनी नलिनी" इति पदानां तृतीयचतुर्थपादादिगततया तृतीयपादस्य मध्यत्वेन चतुर्थपादस्य अन्तत्वेन च तथा पादद्वयमिश्रणादिलक्षणतया च तृतीयचतुर्थ (मध्यान्त) पादगतमव्यवहितमिश्रादिभागयमकम्। ततश्च मध्यान्तत्वेन निरूपितं प्रकारत्रयमेवोदाहृतं भवति इति दिक्)॥ १३॥

मध्याद्येत्यनेन प्रतिपादितं प्रथमद्वितीयतृतीयपादगतमेकप्रकारमाह, विशदेति।—विशन्तः प्रवेशं कुर्वन्तः, आमत्ताः उन्मदाः, सारसाः जलपक्षिविशेषा यस्मिन् तादृशे, सारसे जले सरोवरजले, विशदा शुभ्रवर्णा, इयं हंसी राजहंसीत्यर्थः, कुरुतेन कुत्सितरवेण, रवस्य कुत्सितत्वमुद्दीपकत्वेन विरहिणामसह्यत्वात् इति भावः, मां विरहिणमिति यावत्, अन्तकस्य यमस्य, आमिषं भोग्यवस्तु, ("आमिषं पुंनपुंसकम्। भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च" इति मेदिनी) कुरुते मां हन्तुं यतते इत्यर्थः। (अत्र "विशदा विशदा" "सारसे सारसे" "कुरुते कुरुते" इति पदानां प्रथमद्वितीयतृतीयपादादिगतत्वेन द्वितीयतृतीयपादयोर्मध्यत्वेन च प्रथमद्वितीयतृतीय (मध्याद्य) पादगतं मिश्रमव्यवहितमादिभागयमकम्; तच्चैकविधमेवेति बोध्यम्)॥ १४॥

तदेव प्रथमद्वितीयचतुर्थपादगतम् ।—

विषमं विषमन्वेति मदनं मदनन्दनः ।
सहेन्दुकलयाऽपोढ़-मलया मलयानिलः ॥१५॥

तदेव प्रथमतृतीयचतुर्थपादगतम् ।—

मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग ! मे ।
हारिणी हारिणी शर्म तनुतां तनुतां यतः ॥१६॥

---

आद्यन्तेत्यनेन निरूपितं भेदत्रयं क्रमेण दर्शयन् प्रथमं प्रथमद्वितीयचतुर्थ ( आद्यन्त ) पादगतमुदाहरणेन स्फुटयति, विषममिति ।—अपोढ़मलया परित्यक्तमालिन्यया, हिमात्यया-दिति भावः, इन्दुकलया चन्द्रखण्डेन सह, मलयानिलः मद-नन्दनः मां विरहिणं न नन्दयतीति तथोक्तः मदप्रीतिजननः मन् इत्यर्थः, विषमम् असह्यं, विषं विषरूपं, मदनं कामम्, अन्वेति अनुगच्छति, उद्दीपयतीत्यर्थः, इन्दुकलामलयानिलयोः कामोद्दीपकत्वेन विरहिपीड़कत्वादिति भावः । ( अत्र "विषम विषम" "मदन मदन" "मलया मलया" इति पदानां प्रथम-द्वितीयचतुर्थपादादिगततया प्रथमद्वितीययोराद्यत्वेन चतुर्थस्य पादस्यान्तत्वेन च प्रथमद्वितीयचतुर्थ ( आद्यन्त ) पादगतं मिश्रमव्यवहितमादिभागयमकम् । "विषमं विषमन्वेति" इत्यत्र यम्यमानपदयोरेकस्य सानुस्वारत्वेन असन्तोषश्चेत् "विषमं विषमं क्षौति" इति प्रथमपादः पठनीयः । द्वितीय-विषममित्यस्य विषेण मा उपमा यस्य इति व्युत्पत्त्या विषसदृश-मित्यर्थः, क्षौति तीक्ष्णं करोति इति केचित् पठन्ति ) ॥ १५ ॥

प्रथमतृतीयचतुर्थ ( आद्यन्त ) पादगतं तदेव उदाहरति, मानिनीति ।—हे अनङ्ग ! मा मां, ते तव, निषङ्गत्वं तूणत्वम्,

तदेव द्वितीयतृतीयचतुर्थपादगतम्।—

जयता त्वन्मुखेनास्मानकथं न कथं जितम्?।
कमलं कमलंकुर्वद्दलिमद्दलि मत्प्रिये!॥ १७॥

---

मनवरतशरसम्पातेन तदाधारत्वमिति भावः. निनीषुः प्रापयितुमिच्छुः, तथा हारिणी हारालङ्कारभूषिता, अत एव हारिणी मनोहारिणी, मानिनी मानवती इयं नारी, तनुतां क्षीणतां, यतः गच्छतः, प्राप्नुतः इत्यर्थः, एतत्कृतप्रत्याख्यानजनितचिन्तया इति भावः, मे मम, शर्म सुखं, तनुतां विदधातु इत्यर्थः, यथेयं मानिनी मानं विहाय मामाश्रयति तथा अनुग्रहः कार्य्य इति भावः। (अत्र "मानिनी मानिनी" "हारिणी हारिणी" "तनुतां तनुतां" इति पदानां प्रथमतृतीयचतुर्थपादादिगततया तृतीयपादस्यापि आदित्वेन चतुर्थपादस्यान्तत्वेन च प्रथमतृतीयचतुर्थ (आद्यन्त) पादगतं मिश्रमव्यवहितमादिभागयमकम्)॥ १६॥

द्वितीयतृतीयचतुर्थ (आद्यन्त) पादगतं तदेवोदाहरति, जयतेति।—मत्प्रिये! हे मम प्रेयसि! अस्मान् जयता वशीकुर्वता, तव मुखेन कं जलम्, अलंकुर्वत् शोभयत्, तथा अलिमद्दलि अलिमन्ति भ्रमरयुक्तानि, दलानि पत्राणि अस्य सन्तीति तथाभूतं, कमलं पद्मम्, अकथं कथारहितं, निर्विवादं यथा तथा इत्यर्थः, यद्वा—अकथमिति कमलविशेषणत्वेन योजनीयं, कथारहितमित्यर्थः, कथनाक्षमत्वादचेतनमिति भावः, कथं किं, न जितम्? अपि तु जितमेवेत्यर्थः, अस्माकं चेतनानामपि जयिना ते मुखेन अचेतनानि तादृशानि कमलानि जितानीति का कथेति भावः। (अत्र "नकथं नकथं" "कमलं कमलं" "दलिमत् दलिमत्" इति यमकघटकपदानां द्वितीयतृतीय-

तदेव पादचतुष्टयगतम्।—

रमणी रमणीया मे पाटलापाटलांशुका।
वारुणीवारुणीभूत-सौरभा सौरभास्पदम्॥१८॥

इति पादादियमकमव्यपेतं विकल्पितम्।
व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन॥१९॥

चतुर्थ (आद्यन्त) पादादिगतत्वात् द्वितीयतृतीयपादयोरादित्वेनाभिधानाच्च द्वितीयतृतीयचतुर्थ (आद्यन्त) पादगतं मिश्रमव्यवहितमादिभागयमकम्। एवञ्च आद्यन्तेत्यनेनाभिहितास्त्रयः भेदाः उदाहरणेन दर्शिताः)॥१७॥

तदेव सर्वतः इत्यनेन प्रतिपादितं चतुष्पादगतमुदाहरति, रमणीति।—पाटलावत् तदाख्यतरुकुसुमवत्, पाटलं श्वेतरक्तम्, अंशुकं वसनं यस्याः तादृशी, तथा सौरभास्पदं सौरभस्य सौगन्ध्यस्य, आस्पदं स्थानं,शोभनगन्धि इत्यर्थः, पद्मिनीजातीयेति भावः, रमणी काचित् कान्ता, अरुणीभूता आरक्तीभूता, सौरी सूर्य्यसम्बन्धिनी, भा दीप्तिर्यस्याः तथाभूता, वारुणीव सुरेव, मे मम, रमणीया रतिप्रिया, भवत्विति शेषः। (अत्र "रमणी रमणी" "पाटला पाटला" "वारुणी वारुणी" "सौरभा सौरभा" इति यम्यमानपदानां सर्वपादगतत्वात् प्रथमद्वितीयतृतीयचतुर्थ (सर्व) पादगतं मिश्रमव्यवहितमादिभागयमकम्। इत्यमादिमध्यान्तेत्यादिना निरूपितस्याव्यपेतादिभागयमकस्यैकादशप्रकाराः उदाहरणैर्दर्शिताः)॥१८॥

इतीति।—इति उक्तरूपेण, अव्यपेतम् अव्यवहितं,पादादियमकं पादादिगतं यमकं, विकल्पितं सप्रभेदम्, उदाहृतम्, इदानीं व्यपेतस्य अपि व्यवहितस्यापि, तस्य यमकस्य, केचन, न तु सर्वे इति भावः, विकल्पा भेदाः, वर्ण्यन्ते॥१९॥

प्रथमद्वितीयपादगतमिश्रव्यपेतादिभागयमकम्।—

मधुरेणदृशां मानं मधुरेण सुगन्धिना।
सहकारोद्गमेनैव शब्दशेषं करिष्यति॥२०॥

तदेव प्रथमतृतीयपादगतम्।—

करोऽतिताम्रो रामाणां तन्त्रीताड़नविभ्रमम्।
करोति सेर्ष्यं कान्ते च श्रवणोत्पलताड़नम्॥२१॥

अव्यपेतपादादिभागयमकं दर्शयित्वा व्यपेतादिभागयमकस्य एकस्मिन् पादे असम्भवत्वात् आदौ प्रथमद्वितीयपादगतं तत् उदाहरति, मधुरिति।—मधुर्वसन्तः, मधुरेण मनोहरेण, सुगन्धिना सहकारोद्गमेनैव आम्रमुकुलोदयेनैव, उद्गताम्रमुकुलेनैवेत्यर्थः, एणदृशां हरिणाक्षीणां, मानम् ईर्ष्याकोपं प्रणयकोपं वा, शब्दशेषं मानेति शब्दमात्रावशिष्टं, करिष्यति, न तु अर्थतो रक्षिष्यतीति भावः। (अत्र "मधुरेण मधुरेण" इति प्रथमद्वितीयपादादिगतयमकघटकपदयोः "दृशां मानम्" इति पदद्वयेन व्यवहितत्वात् प्रथमद्वितीयपादगतं व्यवहितं मिश्रमादिभागयमकम्)॥ २०॥

तदेव प्रथमतृतीयपादगतमुदाहरति, कर इति।—रामाणां रमणीनाम्, अतिताम्रः अतिरक्तः, करः पाणिः, तन्त्रीताड़नविभ्रमं वीणावादनरूपं सविलासं कर्म, तथा कान्ते प्रणयिनि, सापराधे इति भावः, सेर्ष्यम् ईर्ष्याकोपसहितं यथा तथा, श्रवणोत्पलताड़नञ्च कर्णोत्पलाभ्यां प्रहारमपि, करोति। (अत्र "करोति करोति" इति प्रथमतृतीयपादादिगतत्वात् व्यवहितमिति व्यपेतयमकलक्षणसमन्वयः, ततश्च पूर्ववत् प्रथमतृतीयपादगतं व्यवहितं मिश्रम् आदिभागयमकमिति ज्ञेयम्)॥ २१॥

तदेव प्रथमचतुर्थपादगतम् ।—

सकलापोल्लसनया कलापिन्याऽनु नृत्यते ।
मेघाली नर्त्तिता वातैः सकलापो विमुञ्चति ॥२२॥

तदेव द्वितीयतृतीयपादगतम् ।—

स्वयमेव गलन्मान-कलि कामिनि! ते मनः ।
कलिकामिह नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम् ?॥२३॥

तदेव प्रथमचतुर्थपादगतमुदाहरति, सकलापेति ।—वातैः नर्त्तिता चालिता इत्यर्थः, सकला मेघाली घनश्रेणी, अपः जलानि, विमुञ्चति वर्षति, अनु पश्चात्, अनन्तरमेव इत्यर्थः, सकलापोल्लसनया कलापस्य पिच्छस्य, उल्लसनेन विस्तारीकरणेन सह वर्त्तमानया, कलापिन्या मयूर्या, नृत्यते । ( वर्षावर्णनमिदम् । अत्र "सकलापो सकलापो" इति यमकपदयोः प्रथमचतुर्थपादादिगतत्वेन व्यवहिततया प्रथमचतुर्थपादगतं मिश्रं व्यवहितमादिभागयमकम् ) ॥ २२ ॥

तदेव द्वितीयतृतीयपादगतमुदाहरति, स्वयमिति ।—हे कामिनि ! स्वयमेव कान्तानुनयं विनैव, गलन् अपगच्छन्, मानरूपः कलिः कलहः यस्मात् तादृशं, ते तव, मनः इह वर्षासु इत्यर्थः, नीपस्य कदम्बस्य, कलिकां कोरकं, दृष्ट्वा कां दशाम् अवस्थां, न स्पृशेत् ? अपि तु सर्वामेव स्मरदशां गमिष्यतीत्यर्थः, वर्षासु अतिकोमलत्वात् धैर्य्यविरहितं ते मनः विरहे कथं सान्त्वयिष्यसीति भावः । ( अत्र "कलिकामि कलिकामि" इति यमकपदयोः द्वितीयतृतीयपादादिगतत्वेन व्यवधानात् द्वितीयतृतीयपादगतं मिश्रं व्यवहितम् आदिभागयमकमिति बोध्यम् ) ॥ २३ ॥

तदेव द्वितीयचतुर्थपादगतम्।—

आरुह्याक्रीड़शैलस्य चन्द्रकान्तस्थलीमिमाम्।
नृत्यत्येष चलच्चारु-चन्द्रकान्तः शिखावलः ॥२४॥

तदेव तृतीयचतुर्थपादगतम्।—

उद्धृत्य राजकादुर्वी ध्रियतेऽद्य भुजेन ते।
वराहेणोद्धृता याऽसौ वराहेरुपरि स्थिता ॥२५॥

तदेव द्वितीयचतुर्थपादगतमुदाहरति, आरुह्येति।—आक्रीड़े उद्याने, यः शैलः क्रीड़ापर्वतः तस्य, इमां चन्द्रकान्त-मणिविशेषनिर्मितां स्थलीं स्थानम्, आरुह्य एष शिखावलः मयूरः, चलन् इतस्ततो गच्छन्, ("लसत्" इति पाठान्तरम्) चारुः मनोज्ञः, यः चन्द्रकः मेचकः, तेन कान्तः रमणीयः, मनोहरः सन् इत्यर्थः, यद्वा—चारुचन्द्रकस्य अन्तः प्रान्तदेशो यस्य तादृशः सन, नृत्यति। (अत्र "चन्द्रकान्त चन्द्रकान्त" इति यमकपदयोः द्वितीयचतुर्थपादादिगतत्वेन व्यवधानमिति द्वितीयचतुर्थपादगतं मिश्रं व्यवहितम् आदिभागयमकं ज्ञेयम्) ॥ २४ ॥

तृतीयचतुर्थपादगतं तदुदाहरति, उद्धृत्येति।—हे राजन्! या असौ उर्वी पृथिवी, वराहेण शूकरमूर्त्तिना भगवता विष्णुना, उद्धृता एकार्णवादुत्थापिता सती, वराहेः श्रेष्ठनागस्य वासुकेः, उपरि स्थिता, पुरा इति शेषः, अद्य सम्प्रति, ते तव, भुजेन सा उर्वी राजकात् राजसमूहात्, उद्धृत्य ध्रियते। (अत्र "वराहे वराहे" इति यमकपदयोः तृतीयचतुर्थपादादिगतत्वेन व्यवधानतया तृतीयचतुर्थपादगतं मिश्रं व्यवहितमादिभाग-यमकम्) ॥ २५ ॥

तदेव प्रथमद्वितीयतृतीयपादगतम् ।—

करेण ते रणेष्वन्त-करेण द्विषतां हताः ।
करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव ॥२६॥

तदेव प्रथमतृतीयचतुर्थपादगतम् ।—

परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।
परागतमिव क्वापि परागततमम्बरम् ॥ २७ ॥

---

प्रथमद्वितीयतृतीयपादगतं तदेवोदाहरति, करेणेति ।— हे राजन्! रणेषु द्विषतां शत्रूणाम्, अन्तकरेण विनाशकेन, ते तव, करेण हस्तेन, हताः ताड़िताः, अत एव क्षरद्रक्ताः रक्तस्राविणः, करेणवः गजेन्द्राः, ("करेणुरिभ्यां स्त्री नेभे" इत्यमरः) सन्ध्याघना इव सायन्तनमेघा इव, भान्ति शोभन्ते। (अत्र "करेण करेण करेण" इति यमकपदानां प्रथमद्वितीयतृतीयपादादिगतत्वेन व्यपेततया प्रथमद्वितीयतृतीयपादगतं मिश्रं व्यवहितमादिभागयमकम्) ॥ २६ ॥

तदेव प्रथमतृतीयचतुर्थपादगतमुदाहरति, परागेति ।— हे राजन्! वातैः ध्वस्ता निक्षिप्ता, उत्पाटिता इत्यर्थः, अगस्य पर्वतस्य, तरुराजीव वृक्षश्रेणीव, भटैः सैनिकैः, तव इति शेषः, परा शत्रुपक्षीया, चमूः सेना, ध्वस्ता नाशिता, (अकर्मकस्यापि ध्वंसधातोरन्तर्भूतण्यर्थत्वात् सकर्मकत्वमत्र विवक्षणीयम्) अतश्च परागैः रजोभिः, ध्वंसावशिष्टानां पलायनपराणां शत्रुसैनिकानां पदोत्थापितरेणुभिरित्यर्थः, ततं व्याप्तम्, अम्बरमाकाशं, क्वापि कुत्रापि देशान्तरे, परागतमिव पलायितमिव, धूलिभिरम्बरतलस्यादृश्यत्वादिति भावः। (अत्र "परागत परागत परागत" इति यमकपदानां प्रथमतृतीयचतुर्थपादादि-

तदेव द्वितीयतृतीयचतुर्थपादगतम्।—

पातु वो भगवान् विष्णुः सदा नवघनद्युतिः।
स दानवकुलध्वंसी सदानवरदन्तिहा॥ २८॥

तदेव सर्वपादगतम्।—

कमलेः समक्लेशं ते कमलेर्ष्याकरं मुखम्।
कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ?॥२९॥

---

गतत्वेन व्यवहिततया प्रथमतृतीयचतुर्थपादगतं मिश्रं व्यवहितमादिभागयमकम्)॥ २७॥

तदेव द्वितीयतृतीयचतुर्थपादगतमुदाहरति, पात्विति।—नवघनद्युतिः नवीनमेघश्यामः, दानवकुलध्वंसी दैत्यवंशघाती, सदानः समदः, यः वरदन्ती श्रेष्ठहस्ती, कुवलयापीड़ाख्यः इति भावः, तं हतवान् इति तथोक्तः सदानवरदन्तिहा, सः प्रसिद्धः, भगवान् विष्णुः वः युष्मान्, सदा पातु। (अत्र "सदानव सदानव सदानव" इति यमकपदानां द्वितीयतृतीयचतुर्थपादादिगतत्वेन व्यपेततया द्वितीयतृतीयचतुर्थपादगतं मिश्रं व्यवहितमादिभागयमकम्)॥ २८॥

तदेव सर्वपादगतमुदाहरति, कमिति।—हे प्रिये! ते तव, कं शिरः, ("कं वारिशिरसोः" इति शाश्वतः) अलेः भ्रमरस्य, समाः सदृशाः, निविड़कृष्णा इति भावः, केशा यत्र तादृशं, तथा मुखं कमलेर्ष्याकरं कमलस्य द्वेषकरं, पद्मविजयीत्यर्थः, अतस्त्वं कमलेव लक्ष्मीरिव, कं जनम्, उन्मदिष्णुषु उन्मत्तेषु मध्ये, अलेख्यम् अगण्यं, करोषि ? अपि तु सर्वानेव उन्मादयसीति भावः। (अत्र "कमले" इति यमकघटकपदस्य सर्वपादादिस्थत्वात् व्यवहितत्वाच्च सर्वपादगतं मिश्रं व्यवहितमादिभागयमकम्)॥ २९॥

प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च तद्वेव विजातीयम ।—

मुदा रमणमन्वीतमुदारमणिभूषणाः ।
मदभ्रमदृशः कर्त्तुमदभ्रजघनाः चमाः ॥ ३० ॥

प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च तद्वेव विजातीयम ।—

उदितैरन्यपुष्टानामारुतैर्मे हृतं मनः ।
उदितैरपि ते दूति ! मारुतैरपि दक्षिणैः ॥३१॥

एवमव्यपेतव्यपेतयोर्भेदमुदाहृत्य सम्प्रति व्यपेतस्यैव सजातीयविजातीयत्वेन प्रकारभेदं दर्शयितुं प्रथमं प्रथमद्वितीययोरेकविधं तृतीयचतुर्थयोश्चान्यविधं तदुदाहरति, मुदेति।—उदाराः उत्कृष्टाः, मणयः रत्नानि, भूषणम्, उदाराणि बहुमूल्यानि, मणिभूषणानि रत्नाभरणानि इति वा यासां ताः, मदेन मद्यपानजेन सौभाग्यादिजन्यविकारविशेषेण वा, भ्रमन्त्यः घूर्णन्त्यः, दृशौ नयनानि यासां तथोक्ताः, तथा अदभ्रं विशालं, जघनं यासां तथाभूताः, प्रमदाः इति शेषः, ("जघनाः" इत्यत्र "मन्मथाः" "मनसः" इति वा पाठकल्पना सङ्गता, प्रथमद्वितीयपादयोः चतुरक्षरघटितयमकवत्तया अत्रापि तदौचित्यात्) मुदा हर्षेण, रमणं प्रियम, अन्वीतम् अनुगतम्, अधीनमित्यर्थः, रमणं मुदा अन्वीतं हर्षयुक्तमिति वा, कर्त्तुं चमाः शक्ताः। (अत्र प्रथमद्वितीयपादादौ "मुदारम मुदारम" इति तृतीयचतुर्थपादादौ च "मदभ्र मदभ्र" इति यमकघटकपदानां विजातीयत्वेन व्यवहितत्वेन च निर्देशात् प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च विजातीयं मिश्रं व्यवहितमादिभागयमकम्) ॥ ३० ॥

प्रागुक्तप्रकारमेव प्रथमतृतीययोरेकविधं द्वितीयचतुर्थयोश्चान्यविधमुदाहरति, उदितैरिति।—हे दूति ! अन्यपुष्टानां

प्रथमचतुर्थयोः द्वितीयतृतीययोश्च तद्वेव विजातीयम्।—

सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः।
तनुमध्याः क्षरत्स्वेद-सुराजितमुखेन्दवः ॥३२॥
इति व्यपेतयमक-प्रभेदोऽप्येष दर्शितः।
अव्यपेत-व्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥३३॥

कोकिलानाम्, उदितैः उत्थितैः, आरुतैः आकूजितैः, समन्तात् उद्गतझङ्कारैरित्यर्थः, तथा ते तव, उदितैः कथितैरपि, प्रियागमसूचकैर्वचनैरपीत्यर्थः, तथा दक्षिणैः मारुतैः मलयानिलैरपि, मे मम, मनः हृतं व्यथितमित्यर्थः। (अत्र प्रथमतृतीयपादादौ "उदितैः उदितैः" इति द्वितीयचतुर्थपादादौ च "मारुतैः मारुतैः" इति यम्यमानपदानां विजातीयत्वात् पादादिभागस्थत्वात व्यवहितत्वाच्च प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च विजातीयं मिश्रं व्यवहितमादिभागयमकम्) ॥ ३१ ॥

प्रागुक्तमेव प्रथमचतुर्थपादयोरेकविधं द्वितीयतृतीययोश्चान्यविधमुदाहरति, सुरेति।—तनु क्षीणं, मध्यं कटिदेशः यासां ताः, क्षरद्भिः सात्त्विकभावादयेन गलद्भिः, स्वेदैः घर्मोदबिन्दुभिः, सुराजिताः सुशोभिताः, मुखेन्दवः मुखचन्द्रा यासां तादृश्यः, स्त्रियः कामिन्यः, सुरया मद्यपानेन, जिताः पराभूताः, अपगता इति यावत्, ह्रीर्लज्जा यासां तथाभूताः सत्यः, यूनां तरुणानां, तनुं शरीरम्, अध्यासते अधितिष्ठन्ति। (अत्र प्रथमचतुर्थपादादौ "सुराजित सुराजित" इति द्वितीयतृतीयपादादौ च "तनुमध्या तनुमध्या" इति यमकघटकपदानां विजातीयत्वात् व्यवहितत्वाच्च प्रथमचतुर्थयोर्द्वितीयतृतीययोश्च विजातीयं मिश्रं व्यवहितमादिभागयमकम्) ॥ ३२ ॥

प्राक् अव्यपेतं व्यपेतञ्च यमकं पृथक् उदाहृत्य सम्प्रति

द्विविपादगताव्यपेतव्यपेतमिश्रादिभागयमकम् ।—

सालं सालंबकलिका-सालं सालं न वीक्षितुम् ।
नालीनालीनवकुलानाली नालीकिनीरपि ॥३४॥

तयोरेकत्रमिश्रणात् अपरान् भेदान् दर्शयन्नाह, इतीति ।— इति उक्तप्रकारेण, एषः व्यपेतानां व्यवहितानां, यमकानां प्रभेदोऽपि ( अपि-कारेण प्राक् अव्यपेतयमकप्रभेदः दर्शित इति समुच्चीयते ) दर्शितः उदाहृतः ; अव्यपेतः अव्यवहितः, व्यपेतः व्यवहितश्च, आत्मा स्वरूपं यस्य तादृशः, उभयमिश्र इत्यर्थः, विकल्पः प्रभेदः अपि, अस्ति । तत् यथेति उदाहरणार्थम् ॥३३॥

तत्र प्रथमद्वितीयपादे एकविधं तृतीयचतुर्थपादे चान्यविधमव्यपेतव्यपेतात्मकमादिभागयमकमुदाहरति, सेति ।— सा आली मम सखी, सालम्बा आलम्बेन सम्यक् लम्बमानत्वेन सह वर्त्तमानाः, लम्बमाना इत्यर्थः, याः कलिकाः कोरकाः, ताः सलति चलति, आन्दोलते इत्यर्थः, यस्य तादृशं, यद्वा— ताभिः सलति शोभते इति तथोक्तं, सालं वृक्षमात्रं सर्जवृक्षं वा, ("सालः पादपमात्रेऽपि प्राकारे सर्जपादपे" इति मेदिनी ) वीक्षितुं द्रष्टुं, न अलं न शक्ता, कलिकायाः उद्दीपकत्वादिति भावः, तथा आलीनवकुलान् आलीनाः सम्यक्तया आश्रिता इत्यर्थः, वकुलाः वकुलवृक्षा यैस्तथाविधान् वकुलासक्तान् इत्यर्थः, ( आलीयन्ते अत्र इति अधिकरणे क्त-प्रत्ययः ) अलीन् भ्रमरान्, अपीति शेषः, न, वीक्षितुम् अलमिति पूर्वतो योजनीयम् ; तथा अलीकं मिथ्यावाक्यं विद्यते यासां तादृशीः अलीकिनीरपि मिथ्यावादिनीरपि प्रियस्ते आगमिष्यत्यचिरेणेत्यादिना मिथ्यावचनेन सान्त्वयन्तीरपि इति भावः, सखीरिति शेषः, न, वीक्षितुम् अलम् इति

द्वितीयतृतीयगताव्यपेतव्यपेतमिश्रादिभागयमकम्।—

**कालं कालमनालक्ष्य-तारतारकमीक्षितुम्?।**
**तारतारम्यरसितं कालं कालमहाघनम् ॥३५॥**

अत्रापि पूरणीयम्। (विदेशस्थं नायकं प्रति नायिकाप्रेरितायाः दूत्या उक्तिरियम्। अत्र प्रथमद्वितीयपादादौ "मालं मालं मालं मालं" तृतीयचतुर्थपादादौ च "नालौ नालौ नालौ नालौ" इति यम्यमानपदानाम् अव्यवधानत्वेनाव्यपेतत्वं, तथा मध्ये "वकलिका" "नवकुला" इत्यक्षराणां व्यवधानत्वेन व्यपेतत्वञ्चेति उभयात्मकं, पादानामादिगतत्वाच्चादिभागसंज्ञकं, पूर्वार्द्धापेक्षया परार्द्धस्य विभिन्नतया च विजातीयत्वमिति प्रथमद्वितीयपादगतं तृतीयचतुर्थपादगतञ्च उभयात्मकं विजातीयमिश्रादिभागयमकमिति बोध्यम्) ॥ ३४ ॥

तदेव प्रथमचतुर्थपादयोरेकविधं द्वितीयतृतीययोश्चान्यविधमुदाहरति, कालमिति।—का, विरहिणी रमणीति शेषः, अनालक्ष्याः मेघाच्छन्नत्वाददृश्याः, ताराः महत्यः, समुज्ज्वला इत्यर्थः, तारकाः नक्षत्राणि यत्र तथोक्तं, तथा तारतया अत्युच्चत्वेन, अरम्याणि श्रोत्रविरसानि, रसितानि मेघगर्जितानि यस्मिन् तादृशं, तथा कालाः कृष्णवर्णाः, महान्तः प्रगाढ़ाः, घना मेघा यस्मिन् तथाभूतं, कालं विरहिणां प्राणनाशकत्वात् यमस्वरूपं, कालं वर्षाकालम्, ईक्षितुं द्रष्टुम्, अलं समर्था? न काऽपीत्यर्थः। (अत्र प्रथमचतुर्थपादादौ "कालं कालं कालं कालम्" इति द्वितीयतृतीयपादादौ च "तारतार तारतार" इति यम्यमानपदानां पूर्ववदव्यवहितव्यवहितत्वेन उभयात्मकं विजातीयं मिश्रमादिभागयमकम्। "कालं कालमनालक्ष्य" इत्यत्र "कालं कालं दुरालक्ष्य" इति "कालं काल-

तदेव पादचतुष्टययमकम्।—

याम यामत्रयाधीनायामया मरणं निशा।
यामयाम धियाऽस्वर्त्यायामया मथितैव सा॥२६॥

मण्डावनम्” इत्यत्र च “कालं कालंकृतं घनैः” इति पाठं केचित् सम्यङ्मन्यन्ते, कालं कालम् इति प्रथमपादे द्वयोरपि सानुस्वारत्वेन चतुर्थपादेऽपि तदौचित्यात्। घनैः कालंकृत कुत्सितालङ्कारवन्तं कृतमिति तत्रार्थः)॥ २५॥

तदेव पादचतुष्टययमकमुदाहरति, यामेति।—यामत्रयस्य प्रहरत्रितयस्य, अधीनः आयत्तः, आयामो दैर्घ्यं यस्याः तादृश्या सुदीर्घप्रहरत्रयव्यापिन्या, (“त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टयम्” इति वचनात् निशायाः त्रियामात्मकत्वं बोध्यम्) निशा रजन्या हेतुना, मरणं याम मृत्युं प्राप्नुम, वयमिति शेषः, (प्रार्थनायां लोट्) निशायाः सातिशयविरहोद्दीपकत्वादिति भावः। ननु किमित्येवममङ्गलमाशास्यते इत्याह, यामिति।—धिया मनसा, यां कान्ताम्, अयाम अगच्छाम, यस्याश्चिन्तया कालमयापयाम इत्यर्थः, यां जीवितसर्वस्वाभिमानगोचरतामकुर्म इत्यर्थो वा, सा आयामया अतिदीर्घया, कल्पकोटिशतवत् दीर्घतरया अनया रजन्या इत्यर्थः, असुवर्त्या असूनां प्राणानाम्, अर्त्तिः पीड़ा तया द्वारभूतया, मथितैव प्रायेण विनाशितैव, भविष्यतीति शेषः, यया निशया कठोरस्यापि मम प्राणा गतप्रायाः, तयैव निशया मद्वियोगेन सुकुमारतरायाः कान्तायाः प्राणा अवश्यमेव यास्यन्ति, अतो मम मरणमेव श्रेय इति भावः। यद्वा—मरणं याम इति (सम्भावनायां लोट्) वयं मरिष्याम इति सम्भावयाम इत्यर्थः; अस्तु अस्माकं मृत्युः, न तत्र किमपि दुःखं, किन्तु धिया याम् अयाम

इति पादादियमक-विकल्पस्येदृशी गतिः।
एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ ३७ ॥
न प्रपञ्चभयात् भेदाः कार्त्स्न्येनाख्यातुमीहिताः।
दुष्कराभिमता ये तु वर्ण्यन्ते तेऽत्र केचन ॥३८॥

---

या-धातोर्लङि उत्तमपुरुषबहुवचनस्य रूपमिदम्) अस्त्र्याया ...त्रिर्कां मद्विरहेण प्राणव्ययाम्, आयाति प्राप्नोति ताद्दशीं, आङ्पूर्वकात् या-धातोः क्विपि रूपम्) सा मयैव मथिता ...थिता, विदेशागतस्य ममैव प्रणयिनो विरहे दीना सा ...त्रयते इत्येव मे महद्दुःखमिति भावः। (निशायां प्रदोष-...ामाग्ने: विरहिणः स्वावस्थानुभवेन अनुमितकान्तावस्थस्य ...वलापोक्तिरियम्। अत्र "याम याम" इति यमकपदस्य ...ादचतुष्टयस्यादौ स्थितत्वेन अव्यवहितव्यवहितत्वेन च सर्व-...ादगतं मिश्रमुभयात्मकमादिभागयमकम्) ॥ २६ ॥

आदिभागयमकस्य भेदानभिधाय तत् उपसंहरति, ...तीति।—इति उक्तरूपस्य, पादादिस्थयमकानां विकल्पस्य ...ेदस्य, ईदृशी एवम्प्रकारा, गतिः नियमः; इतराणि पाद-...ध्यान्तभागगतानि अव्यपेत-व्यपेत-तन्मिश्रितानि च, यमकानि ...पि, एवमेव प्रागुक्तप्रकारेणैव, एकद्वित्र्यादिरूपेण तथा ...ादिमध्यान्तेत्यादिरूपेणैव च इत्यर्थः, विकल्प्यानि ...ेद्यानि ॥ ३७ ॥

निखिलयमकभेदा मयैव ग्रन्थकृता कथं न दर्शितास्तत्राह, ...ति।—प्रपञ्चभयात् विस्तारभयात्, कार्त्स्न्येन साकल्येन, ...ेदाः आख्यातुं न ईहिताः न चेष्टिताः, ये तु भेदाः, ...दुष्करत्वेन अभिमताः स्वीकृताः, अन्येषामिति शेषः, अत्र ते

पादचतुष्टयगतमिश्राव्यपेतव्यपेतमध्यभागयमकम्।—

स्थिरायते ! यतेन्द्रियो न हीयते यतेर्भवान्।
अमायतेयतेऽप्यभूत् सुखाय तेऽयते क्षयम्॥३९॥

प्रतिपादव्यपेतमध्यमध्यभागयमकम्।—

सभासु राजन्नसुराहतैर्मुखै:
महीसुराणां वसुराजितैः स्तुताः।

केचन, वर्ण्यन्ते उदाह्रियन्ते, केचन एव भेदा मया दर्शयिष्यन्ते, न तु कृत्स्नाः, अपरे तु प्रागुक्तादिभागयमकरीत्या स्वयमेव वेदितव्या इति भावः॥ ३८॥

तत्र सर्वपादगतमव्यपेतव्यपेतात्मकं मध्ययमकमुदाहरति, स्थिरायते इति।—स्थिरा चिरस्थायिनी, आयतिरुत्तरकालो यस्य तत्सम्बुद्धौ, ("उत्तरः काल आयतिः" इत्यमरः) स्थिरायते ! हे अक्षय्यसुखभाजन !, भवान् यतेन्द्रियः जितेन्द्रियः, अतः यतेः संयमात्, समाधेरित्यर्थः, न हीयते च्युतो न भवति, इन्द्रियसंयमाभावे हि समाधेः स्थिरत्वं न सम्भवतीति भावः, (यदुक्तं—"बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" इति) ते तव, अमायतोऽपि अमायित्वमपि, मायाराहित्यमपीत्यर्थः, इयते एतत्परिमाणाय, परिच्छेत्तुमशक्याय इत्यर्थः, तथा क्षयं नाशम्, अयते अगच्छते, अक्षयाय इत्यर्थः, सुखाय परानन्दाय, अभूत्। (अत्र सर्वेषु पादेषु "यते यते" इति पदं पादमध्ये आवृत्तं, तच्च एकस्मिन् पादे पुनरावर्त्तने अव्यपेतं पादान्तरापेक्षया च व्यपेतमिति अव्यपेतव्यपेतमिश्रसर्वपादगतमध्यभागयमकम्)॥ ३९॥

प्रतिपादं केवलव्यपेतमध्यमध्ययमकमुदाहरति, सभास्विति।—हे राजन्! महीसुराणां भूदेवानां, ब्राह्मणाना-

न भासुरा यान्ति सुरान् न ते गुणाः
प्रजासु रागात्मसु राशितां गताः ॥ ४० ॥

स०ं पादगतामथ्यव्यपेतान्तभागयमकम ।—

तव प्रियाऽसच्चरित ! प्रमत्त ! या
विभूषणं धार्य्यमिहांशुमत्तया ।
रतोत्सवानन्दविशेषमत्तया
प्रयोजनं नास्ति हि कान्तिमत्तया ॥ ४१ ॥

मित्यर्थः, असुराहतैः सुरापानेन अहतैः अनाश्रितैः, मदिरा-
पानपराङ्मुखतया पवित्रैरिति यावत्, वसुना तेजसा भवद्दत्त-
धनलाभेन वा, राजितैः शोभितैः प्रफुल्लैर्वा, सुधैः सभासु स्तुताः
कीर्त्तिताः, भासुराः समुज्ज्वलाः, तथा रागात्मसु अनुरागपरासु,
प्रजासु जनेषु, राशितां बहुलोभावं, गताः, प्रभूतसमादरं प्राप्ता
इत्यर्थः, ते तव, गुणाः सुरान् देवान्, न यान्ति न प्राप्नुवन्ति,
इति न, अपि तु यान्त्येवेत्यर्थः, सुरा एव एतादृग्गुणवन्तः
सन्तोति भावः। ( अत्र "सुरा" इति पदं प्रतिपादमेव व्यव-
हिततया पादमध्यस्थितत्वाच्च मिश्रं व्यपेतञ्च मध्यमध्यभाग-
यमकम् ) ॥ ४० ॥

प्रतिपादं व्यपेतमध्यमध्ययमकमुदाहृत्य सम्प्रति सर्वपाद-
गतं तादृशमेवान्तयमकमुदाहरति, तवेति।—असच्चरित ! हे
धूर्त्त !, प्रमत्त ! हे अनवहित !, इह अस्मिन् समये, सम्प्रतो-
त्यर्थः, या तव प्रिया प्रणयिनी, जनसमाजे अधुना या त्वया
समास्पदत्वेन कीर्त्त्यमाना इत्यर्थः, तया, एवेति शेषः, रतोत्सवेन
यः आनन्दविशेषः, तेन मत्तया आसक्तया सत्या इत्यर्थः, अंशुमत्
समुज्ज्वलं, विभूषणम् आभरणं, धार्य्यं, तथा च विभूषण-

पादचतुष्टयगताव्यपेतव्यपेतान्तभागयमकम्।—

भवादृशा नाथ! न जानते नते
रसं विरुद्धे खलु सन्नतेनते।
य एव दीनाः शिरसा नतेन ते
चरन्त्यलं दैन्यरसेन तेन ते॥ ४२॥

धारणस्य रतोत्सवानन्दविधायकताप्रयोजनं, न तु त्वयि अन्यासक्ते मम सख्याः तत् सम्भवति, अतः किमिति तया तत् धार्य्यम्? तवाधुनिकप्रिययैव तत् धर्त्तुं युज्यते इति भावः। ननु शोभार्थमपि सख्या ते विभूषणं ध्रियतां तत्र आह, प्रयोजनमिति।—हि तथा हि, कान्तिमत्तया स्वाभाविकसौन्दर्य्यवत्तया हेतुना, मत्सख्या इति शेषः, प्रयोजनम् आवश्यकं, विभूषणधारणस्येति शेषः, नास्ति न विद्यते एवेत्यर्थः, नैसर्गिकी विलक्षणा कान्तिरेवास्याः शोभां जनयति, किं पुनरलङ्कारान्तरधारणेनेति भावः। (अन्यासक्तं शठनायकमलङ्कारधारणे कथमस्या विराग इति पृच्छन्तं प्रति सख्या उक्तिरियम्। "असञ्चरित प्रमत्त" इत्यत्र "सञ्चरिताप्रमत्त" इति तथा "प्रयोजनं नास्ति हि" इत्यत्र "न मे फलं किञ्चन" इति क्वचित् पाठः। अत्र "मत्तया" इति पदस्य प्रतिपादान्तगतत्वात् व्यवहितत्वाच्च सर्वपादगतं मिश्रं व्यपेतमन्तभागयमकम्)॥ ४१॥

पादचतुष्टयगतमव्यपेतव्यपेतम् अन्तभागयमकमुदाहरति, भवादृशा इति।—नाथ! हे प्रभो!, भवादृशाः त्वादृशा जनाः, नतेः नतभावस्य, रसम् आस्वादं, न जानते न विदन्ति, यतः सन्नतं सम्यक् नतिभावस्य, इनता प्रभुता च ते सन्नतेनते नतिः प्रभुता चेत्यर्थः, विरुद्धे विपरीते, खलु निश्चये, नैकाधारे वर्त्तेते

प्रतिपादं मिश्रव्यपेतमध्यान्तयमकम् —

लीलास्मितेन शुचिना मृदुनोदितेन
व्यालोकितेन लघुना गुरुणा गतेन।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥४३॥

ति भावः, ये जनाः, दीनाः दरिद्राः, ते एव केवलं, तेन
मिडेन, दैन्यरसेन दैन्यरूपेण विषेण हेतुना, ( रसो गन्धरसे
ले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः॥ देहधातु-
भेदे च पारदास्वादयोः पुमान्॥" इति मेदिनी ) नतेन
रमा ते तव, ( तवेति कर्मणि षष्ठी ) अलम् अत्यर्थं, चरन्ति
तिशयेन त्वा सेवन्ते इत्यर्थः। ( अत्र सर्वेषु पादेषु अन्तगतं
नते नते" इति पदं पुनरावृत्तं, तच्च न प्रतिपादं व्यवहितं
न्तु पादान्तरे व्यवहितमिति मिश्रमुभयात्मकम् अन्तभाग-
त्मकम् )॥ ४२॥

प्रतिपादगतव्यपेतमध्यान्तयमकमुदाहरति, लीलेति।—
नायिका, शुचिना निर्मलेन, लीलास्मितेन सविलासेषद्धसि-
न, मृदुना कोमलेन, उदितेन वचनेन, लघुना इष्टेन,
र्थितेनेत्यर्थः, लघुना अल्पेन इति वा, असम्पूर्णेनेत्यर्थः,
'विष्विष्टेऽल्पे लघु." इत्यमरः ) व्यालोकितेन अपाङ्गदर्शने-
त्यर्थः, गुरुणा नितम्बादिभरमन्थरेण, गतेन गमनेन,
जृम्भितेन विशेषतो जृम्भया, ( जृम्भायाश्च अनुरागव्यञ्ज-
कमुक्तं यथा—जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति"
) तथा दर्शितेन जघनेन च केनचित् व्याजेन जघनप्रदर्शने-
त्यर्थः, कान्ता व्याख्याता [illegible]

प्रतिपादम् अव्यपेतव्यपेतमध्यान्तयमकम्।—

श्रीमानमानमरवर्त्मसमानमान-
मात्मानमानतजगत्प्रथमानमानम्।
भूमानमानमत यः स्थितिमानमान-
नामानमानमतमप्रतिमानमानम्॥ ४४॥

मम जीवितेन जीवनेन, गलितं गतं, विनष्टप्रायमिवेत्यर्थः। (भावे क्त प्रत्ययः। अत्र "तेन" इति पदं प्रतिपादं मध्येषु अन्तेषु च पुनः पुनरावृत्तं, तच्च व्यवहितमिति मिश्रं व्यवहितं मध्यान्तयमकम्)॥ ४३॥

प्रतिपादगतमव्यपेतव्यपेतमध्यान्तयमकमुदाहरति, श्रीमानिति।—(अत्रैवं पदविभागः,—श्रीमान्, अमान्, अमरवर्त्मसमानमानम्, आत्मानम्, आनतजगत्प्रथमानमानम्, भूमानम्, आनमत, यः, स्थितिमान्, अमाननामानम्, आनमतम्, अप्रतिमानमानम् इति) हे भक्ताः! अमरवर्त्म आकाशं, तस्य समानं मानं परिमाणं यस्य तथोक्तम् आकाशवत् सर्वव्यापिनमित्यर्थः, आनतेषु प्रह्वीभूतेषु, उपासनार्थं नम्रीभूतेषु वा, जगत्सु प्रथमानः विस्तारं गतः, मानः सम्मानः, पूजनमित्यर्थः यस्य तादृशं, सर्वजगत्पूज्यमानमित्यर्थः, भूमानं महात्मानम्, अमानम् अपरिमितम्, असङ्ख्यमित्यर्थः, नाम यस्य तथाभूतं, तथा आ ईषत्, अनन्ति प्राणन्ति, श्वसन्तीत्यर्थः, ये ते आनाः प्राणायामपरायणा योगिन इत्यर्थः, तैः मतं पूजितं, योगेन ज्ञातमित्यर्थो वा, आनमतं योगिपूजितं योगिगम्यं वा इत्यर्थः, तथा अप्रतिमानः असदृशः, मानो यस्य तादृशं, सर्वाभिमतमित्यर्थः, यद्वा—अप्रतिमानम् अनुपमं, [illegible]

प्रतिपादं नियमव्यपेतादिमध्ययमकम्।—

सारयन्तमुरसा रमयन्ती
सारभूतमुरुसारधरा तम्।
सारसानुकृतसारसकाञ्ची
सा रसायनमसारमवैति ॥ ४५ ॥

वलं मनःसंयमेन ज्ञायमानमित्यर्थः, एवम्भूतम् आत्मानं
मात्मानं, ब्रह्म इत्यर्थः, आनमत नमस्कुरुत, यूयमिति
षः। नन्वेवम्भूतस्य चार्वाकादिभिरनङ्गीकृतस्यात्मनोऽङ्गीकारे
ं प्रमाणमित्यत आह, य इति।—यः आत्मा, श्रीमान् स्वयं
ाशमानः, तथा अमान् अपरिमितः, विभुत्वात् क्वचिदपि
परिमातीति भावः, तथा स्थितिमान् सच्चिदानन्दरूपतया
ातस्थायी, जगतामुत्पत्तिस्थितिलयकारित्वेन नित्य इत्यर्थः।
ात्र सर्वेषामेव पादानां मध्येष्वन्तेषु च "मानमान" इति
स्य अव्यवधानेन पुनः पुनरावर्त्तनात् अव्यपेतं, तथा "मर-
ास" इत्यादिवर्णानां व्यवधानतया व्यपेतञ्च मध्यान्त-
कम्। एकवर्णात् परं मान इत्यस्यावृत्तेः कथं मध्ययम-
मित्यपि न शङ्कनीयम्, आद्यन्तवर्णयोरन्तरालस्यैव मध्यत्वे-
भिधानात्) ॥ ४४ ॥

प्रतिपादगतं व्यपेतादिमध्ययमकमुदाहरति, सारयन्त-
ते।—उरुसाराणि स्वर्णभूषणानि, धरतीति तथोक्ता, ("उरु-
सुवर्णं स्यात्" इति व्याडिः) तथा अनुकृतः सारसः पक्षि-
षः, सारसकूजितमिति भावः, यया सा, सारसकूजित-
दिनीत्यर्थः, ["जातिकालसुखादिभ्यः परा निष्ठा वाच्या"
०) इति निष्ठान्तस्य परनिपातः] सारसा सशब्दा, काञ्ची
ला यस्यास्तथाभूता, सा रमणी, सारयन्तम आश्लिष्यन्तं

अयुग्मपादयोः मिश्राव्यपेतव्यपेताद्यन्तयमकं युग्मयोस्तादृशादिमध्ययमकञ्च ।-

नयानयालोचनयानयानया-
नयानयांस्त्वान् विनयानयायते ! ।
न यानयासीर्जिनयानयानया-
नयानयांस्तान् जनयानयाश्रितान् ॥४६॥

("स्तृ आस्तरणे" इत्यस्य चौरादिकस्य रूपम्) सारयन्तम् आत्मानमभिसारयन्तमिति वा, सारभूतं जगत्सु उत्कर्षत्वेन गणितं, तं जीवितसर्वस्वतामापन्नं पतिमित्यर्थः, उरसा वक्षः-स्थलेन, रमयन्ती प्रीणयन्ती, प्रत्यालिङ्गनेन सुखयन्ती सतीति यावत्, रसायनं जराव्याधिहरं भेषजमपि, जराव्याध्याक्रान्ति-प्रतिरोधकत्वेन अमृतमपीति भावः, असारं तुच्छम्, अवैति जानाति, प्रियालिङ्गनसुखादमृतमपि तुच्छमवगच्छतीत्यर्थः। (अत्र प्रत्येकपादेषु आदिमध्ययोः "सारसार" इति यमक-घटकीभूतपदस्य व्यवधानेन पुनःपुनरावृत्तेः मिश्रं व्यवहित-मादिमध्ययमकम्) ॥ ४५ ॥

प्रथमतृतीयपादयोरव्यपेतव्यपेतमाद्यन्तयमकं द्वितीय-चतुर्थयोस्तादृशमादिमध्ययमकञ्च एकत्र दर्शयति, नयेति ।—(अत्र पदविच्छेदप्रकार एवं द्रष्टव्यः,—नयानयालोचनया, अनया, अनयान्, अयानयांस्त्वान्, विनय, अनयायते, न, यान्, अयासीः, जिनयानयान्, अयानयान्, अयान्, तान्, जनय, अनयाश्रितान् इति) हे अनयायते ! न अयते गच्छतीति अनया अपायरहिता, आयतिः उत्तरकालः यस्य तत्सम्बोधनं, हे अस्खलितशासन प्रभो !, अनया एवंविधया, परिदृश्यमान-येत्यर्थः, नयानयालोचनया नयः नीतिः, अनयः दुर्नीतिः तयो-

प्रतिपादं मिथव्यपेताद्यन्तयमकम्।—

रवेण भौमो ध्वजवर्त्तिवीरवे-
रवेजि संयत्यतुलास्त्रगौरवे।
रवेरिवोग्रस्य पुरो हरेरवे-
रवेत तुल्यं रिपुमस्य भैरवे॥ ४७॥

---

लोचना तया, अयं नयो ग्राह्यः अयमनयो हेय इत्यादिरूप-
दसद्विवेकेनेत्यर्थः, अनयान् नयरहितान्, अत एव अयस्य
ावहविधेः, ("अयः शुभावहो विधिः" इत्यमरः) आनये
ानयने, अनुष्ठाने इत्यर्थः, अन्धान् आत्महितमपश्यत इत्यर्थः,
तान् इति शेषः, विनय विनीतान् कुरु, यथा ते नीतिमार्गानु-
रिणः भवेयुः तथा विधेहि इत्यर्थः, किञ्च जिनयानं जैन-
र्गं, यान्तीति तथोक्तान् बौद्धमतावलम्बिनः, अत एव
ानम् अमार्गं, विरुद्धपन्थानमित्यर्थः, यान्तीति तादृशान्
थगामिनः, अत एव अनयाश्रितान् दुर्नयानुसारिणः,
स्याशुभमवलम्बमानानित्यर्थः, यान् जनान्, त्वं न अयासीः
गतवानसि, यैः सङ्गं त्वं न कृतवानसि इत्यर्थः, तान् बौद्ध-
ावलम्बिनो जनान्, अं विष्णुं, यान्तीति तथाभूतान्
वधर्मावलम्बिनः, जनय कुरु। (अत्र प्रथमद्वितीयपादयोः
यानया" इत्यस्य आदावन्ते चाव्यवधानेन पुनरावर्त्तनात्
ीयचतुर्थपादयोश्चादौ मध्ये चाव्यवधानेनावृत्तेः क्रमेण
व्यपेतम् आद्यन्तयमकम् आदिमध्ययमकञ्च एकत्रैव दर्शित-
ति दिक्)॥ ४६॥

व्यपेतं सर्वपादगतमाद्यन्तयमकमुदाहरति, रवेणेति।—
मः भूमिसुतः, नरकासुरः इति यावत्, ध्वजवर्त्तिनः श्रीकृष्ण-

प्रतिपादमव्यपेतव्यपेतमिश्राद्यन्तयमकम् ।—

मयामयालम्ब्यकलामयामया-
मयामयातव्यविरामयामया ।
मयामयार्त्तिं निशयामयामया-
मयामयामूं करुणामयामया ॥ ४८ ॥

रथध्वजस्थितस्य, वीरस्य वीर्य्यशालिनः, वेः पक्षिणः, गरुड़स्य इत्यर्थः, रवेण नादेन, अतुलम् अनुपमम, अस्त्राणां गौरवं गुरुत्वं बहुत्वं वा यस्मिन् तादृशे, भैरवे भयङ्करे, संयति सङ्ग्रामे, अवेजि उद्वेजितः, त्रासित इत्यर्थः, तथा हि, रवेः सूर्य्यस्येव, उग्रस्य तेजोराशेः इत्यर्थः, अस्य हरेः श्रीकृष्णस्य सिंहस्य च, पुरः अग्रे, रिपुं शत्रुं, नरकमिति यावत्, अवेर्मेषस्य, तुल्यं सदृशम्, अवेत जानीत, यूयमिति शेषः । (श्रीकृष्णस्य नरकासुरेण युद्धवर्णनमिदम् । अत्र चतुर्णामेव पादानामादावन्ते च "रवे" इति पदस्य व्यवधानतया पुनःपुनरावर्त्तनात् मिश्रं व्यवहितमाद्यन्तयमकम् ) ॥ ४७ ॥

अव्यपेतव्यपेतं चतुष्पादगतमाद्यन्तयमकमुदाहरति, मयेति ।—(अत्रायं पदविभागः,—मयामयालम्ब्यकलामया-मयाम, अयाम, अयातव्यविरामयामया, मया, अमयार्त्तिं, निशया, अमया, अमया, अमय, आमय, अमूं, करुणामय, आमया इति ) हे अमय ! मिनोति क्षिपति, त्यजति दूरमिति यावत् इति मयः स न भवतीत्यमयः सर्वास्ववस्थासु मामनुवर्त्तमानः, तत्सम्बोधनं, ("डु मिञ् क्षेपणे" इत्यस्य कर्त्तरि अच्-प्रत्ययः ) यद्वा—हे अमय ! नास्ति माया यस्य तत्सम्बुद्धौ, हे अकपट ! इत्यर्थः, ( [illegible]

त एव करुणामय! हे दयामय!, सखे! इति शेषः, एतेन सम्बोधनपदद्वयेन स्वप्रार्थनायाम् अवश्यमेवानुकूल्यं रिष्यतीति सूचितम्) आमं रोगं, कामपीड़ामिति यावत्, ति प्राप्नोतीति आमयाः तेन आमया कामार्त्तेन इत्यर्थः, "आतो धातोः" (६।४।१४० पा०) इति आकारलोपः] या सह, मयः अपचयः, कलाचय इति यावत्, ("मय तौ" इत्यस्य रूपम्) अमयः उपचयः, कलावृद्धिरिति वत्, ताभ्याम् अपचयोपचयाभ्यामित्यर्थः, चयवृद्धि-लत्वात् इति भावः, आलम्ब्यः आश्रयणीयः, यः कलामयः त्मकश्चन्द्रः, तस्मात् आमयः रोगः, कामपीड़ा इत्यर्थः, या: तादृशीं, चन्द्रस्य कामोद्दीपकत्वादिति भावः, अमं णीम, आमय सङ्गमय इत्यर्थः, ("अम गतौ" इत्यस्य णिचि म्) यतः अहम् अयातव्यः अप्रामव्यः, विरामः अवसानं ां तादृशाः, यामाः प्रहराः यस्यास्तादृश्या दीर्घयामया र्थः, अत एव नास्ति मा परिमाणं यस्यास्तथाभूतया अमया र्घया इत्यर्थः, अत एव अमया नास्ति मा शोभा यस्याः ोभया अतिकुत्सितया इत्यर्थः, विरहिणामिति भावः, या रजन्या हेतुना, मयः गमनं, प्राप्तिरित्यर्थः, ("सर्वे र्थाः प्राप्त्यर्थाः" इति नियमात्) तद्वैपरीत्यम् अमयः तेन येन अप्राप्त्या, तस्या इति भावः, अर्त्तिं पीड़ां, तदप्राप्त्या तमयां कामपीड़ामिति यावत्, अयां प्राप्नवम्। ("या ौ" इत्यस्य रूपम्। कस्यचित् विरहिणः सखायं प्रत्युक्ति-म्। अत्र प्रत्येकपादानामादावन्ते च "मया मया" इति स्य पुनःपुनः सान्निध्यप्रयुक्ततया अव्यवहितं तथा "लम्ब्य-ा" इत्यादिवर्णानां मध्यस्थतया व्यवहितञ्च मिश्रमाद्यन्त-वकम्) ॥ ७८ ॥

प्रतिपादं व्यपेतादिमध्यान्तयमकम् ।—

मताम्धुनानारमतामकामता-
मतापलब्धाग्रिमतानुलोमता ।
मतावयत्युत्तमताविलोमता-
मताम्यतस्ते समता न वामता ॥ ४९ ॥

व्यपेतादिमध्यान्तयमकमुदाहरति, मतामिति ।—( पद-विभागस्त्वेष:,—मतां, धुनाना, आरमताम्, अकामताम्, अतापलब्धा, अग्रिमतानुलोमता, मतौ, अयतौ, उत्तमता-विलोमताम्, अताम्यत:, ते, समता, न, वामता इति ) हे साधो ! इति सम्बोधनपदम् अत्र अध्याहर्त्तव्यम् ; अताम्यत: कदाऽपि अखिद्यत:, सदा प्रसन्नमनस इत्यर्थ:, ते तव, मतौ चित्ते, आरमताम् आत्मन्येव रममाणानां, विषयव्यावृत्तानां योगिनामित्यर्थ:, मतां सम्मतां, योगिभिरादृतामित्यर्थ:, अकामतां नि:स्पृहताम्, अपीति शेष:, धुनाना कम्पयन्ती, उत्कर्षवत्तया तामपि तिरस्कुर्वतीत्यर्थ:, तथा अतापेन अक्लेशेन, लब्धा प्राप्ता, स्वाभाविकीत्यर्थ:, तथा अग्रिमताया: श्रेष्ठताया:, अनुलोमता आनुकूल्यं यया तादृशी श्रेष्ठत्वसम्पादिनीत्यर्थ:, तथा उत्तमताया गुणवत्ताया:, विलोमतां प्रतिकूलताम्, अयती अगच्छन्ती, गुणवत्त्वसमानाधिकरणा इति भाव:, समता अपक्षपातित्वं, सर्वत्र समदर्शित्वमित्यर्थ:, विद्यते इति शेष:, वामता प्रतिकूलता तु, न, विद्यते इति शेष: । ( कस्यचित् साधोर्गुणकीर्त्तनमिदम् । अत्र प्रतिपादानामादौ मध्ये अन्ते च "मता" इति पदस्य पुन: पुनर्व्यवहितत्वेनावृत्ते: व्यवहितमादि-मध्यान्तयमकम् ) ॥ ४९ ॥

प्रतिपादमव्यपेतव्यपेतादिमध्यान्तयमकम्।—

ालकालगलकालकालमुखकालकाल !
ालकालघनकालकालपनकाल ! काल ! ।
ालकालसितकालका ललनिकालकाल-
ालकालगतु कालकाल ! कलिकालकाल ! ॥५०॥

---

सम्प्रति अव्यपेतव्यपेतात्मकमादिमध्यान्तयमकमुदाहरति,
लेति।—(पदच्छेदस्त्वयं—प्रथमपादे एकं पदं, काल-
लघनकालकालपनकाल, काल, कालकालसितकालका,
निका, अलकालकालका, आलगतु, कालकाल, कलिकाल-
ल इति) हे कालकालगलकालकालमुखकालकाल ! कालस्य
रकाय, शिवस्य इत्यर्थः, ("कलनात् सर्वभूतानां स कालः
कीर्त्तितः" इति वचनात्) यः कालगलः नीलवर्णः कण्ठः,
कालः यमः, तथा कालमुखः वानरविशेषः ते (एतेषां
) कालकालगलकालकालमुखाः, तेषां कालकं कृष्णत्वम्,
ाति आदत्ते इति तत्सम्बुद्धौ, हे शिवकण्ठादिवत् कृष्ण-
, तथा हे कालकालघनकालकालपनकाल ! कं जलम्,
ाति गृह्लाति, बिभर्त्तीत्यर्थः इति कालः सजलः, अत एव
कृष्णवर्णः, यो घनः मेघः, तस्य काले समये, वर्षास्वित्यर्थः,
न्ति शब्दायन्ते इति कालकालघनकालकाः मयूरा इत्यर्थः,
शब्दे" इत्यस्य क्विपि रूपम्) तेषाम् आलपनानि मुखानि,
कालघनकालकालपनानि, तद्वत् कालते शब्दायते इति
द्धौ, हे मयूर इव षड्जस्वरेण आलपनशील ! इत्यर्थः,
लकालपनकालकालघनकाल !" इति पाठे तु—काले

कालयति प्रेरयति, प्रकटयतीत्यर्थः, तादृशः, तथा कालः पूर्वोक्तव्युत्पत्त्या जलपूर्ण इत्यर्थः, यो घनः मेघः, तद्वत् काल ! श्यामल ! सजलजलदश्याम इत्यर्थः ) पुनश्च हे कालकाल ! कालस्य यमस्य, कालः संहारकः तत्सम्बुद्धौ, यमभयनिवर्त्तक ! इत्यर्थः, यद्वा—कालेन समयात्मकेन आत्मना, कालयति प्रेरयति, भूतानीति शेषः, यस्तत्सम्बुद्धौ, ( "कालस्वरूपं रूपन्तत् विष्णोर्मैत्रेय ! वर्त्तते" इति स्मृतेः विष्णोः कालस्वरूपत्वमवगन्तव्यम् ) किञ्च, हे कलिकालकाल ! कलिकालस्य कलियुगस्य, कालः मृत्युस्वरूपः, काल्किरूपेण दण्डयिता इत्यर्थः, तत्सम्बुद्धौ, हे काल ! हे कृष्ण !, कालकालसितकालका कालकेन कृष्णवर्णतया, आलसितं शोभितं, कं शिरः यैः, तादृशाः अलकाः चूर्णकुन्तलाः यस्यास्तादृशी, ( "कं जलम्, आलातीति कालं सरः, तत्र कायन्तीति कालकाः हंसाः, तेषामिव आलसितं लीलागमनं ययोः तादृशौ कालकौ पादौ यस्याः सा इति केचित् व्याख्यायन्ते ) अलकालकालका अलकान् चूर्णकुन्तलान्, अलते मुक्तादिभिर्भूषयतीति तादृशी अलकाली, ( "अलङ् भूषायाम्" इत्यस्य अणि रूपम् ) तथा कलमेव कालं मधुरमित्यर्थः, तत् यथा तथा कायति वदतीति तादृशी कालका मधुरभाषिणीत्यर्थः, ततश्च अलकाली चासौ कालका चेति (कर्मधारयः) लल्लनिका अनुकम्पनीया ललना, राधा इत्यर्थः, आलगतु त्वया सम्मिलिता भवतु इति निर्गलितोऽर्थः। (श्रीकृष्णं प्रति श्रीराधायाः सख्या उक्तिरियम्। अत्र सर्वेषामेव पादानामादिमध्यान्तेषु "कालकाल" इति पदमव्यवहिततया पुनःपुनरावृत्तमिति अव्यवहितं तथा "गल मुख" इत्यादीनां व्यवहिततया व्यवहितश्च आदिमध्यान्तयमकम् ) ॥ ५० ॥

सन्दष्टयमकलक्षणम्।—

सन्दष्ट-यमकस्थानमन्तादी पादयोर्द्वयोः।
उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्त्यते ॥५१॥

सन्दष्टयमकोदाहरणम्।—

उपोढरागाऽप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता।

सम्प्रति सन्दष्टयमकस्थानं निर्दिशति, सन्दष्टेति।—द्वयोः पादयोः ऊर्द्ध्वाधोभावेन स्थितयोः सन्निहितयोः चरणयोरित्यर्थः, अन्तादी प्रथमपादस्य अन्तः द्वितीयपादस्य आदिः, तथा द्वितीयपादस्यान्तः तृतीयपादस्यादिः, एवं तृतीयपादस्य अन्तः चतुर्थपादस्यादिश्च, एतौ पादांशौ इत्यर्थः, सन्दष्टयमकस्य सन्दंशाकृति-यमकस्य, स्थानं विषयः, सन्दंशः यथा उभयभागमाक्रम्य वर्त्तते तथा इदमपि पादयोरन्तादिभागमाक्रम्य वर्त्तते इति निष्कृष्टार्थः ; एतत् सन्दष्टयमकम्, उक्तेषु यमकेषु, अन्तर्गतमपि "रवेण भौमः" इत्यादौ पतितमपीत्यर्थः, अत्र स्वातन्त्र्येण पृथग्भावेन, कीर्त्त्यते वर्ण्यते, विशेषादिति भावः। (एतत् यमकमन्यैरुक्तत्वादत्रोल्लिख्यते, स्वमते तु प्रागुक्तभेदान्तर्गतमेवैतदिति बोध्यम्। केचिदिदं काञ्चीयमकमित्याहुः ; यथा—"एकस्यान्तेऽपरस्यादौ सदृशं दृश्यते यदि। तत् काञ्चीयमकं नाम व्याहृतं मुनिपुङ्गवैः॥" इति। उदाहरणान्तरं भट्टिकाव्ये यथा—"पिशिताशिनामनुदिशं स्फुटतां स्फुटतां जगाम परिविह्वलता। ह्वलता जनेन बहुधा चरितं चरितं महत्त्वरहितं महता॥" इति)॥ ५१॥

तत्र सन्दष्टयमकमुदाहरति, उपोढेति।—सा अबला मदेन यौवनजनितविकारेण, मद्यपानजेन वा, उपोढः उद्रिक्तः,

न योजितात्मानमनङ्गतापिता-
ङ्गतापि तापाय ममास नेयते ॥ ५२ ॥

समुद्गयमकलक्षणम्।—

अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः।

रागः अनुरागो यस्यास्तादृशी, मय्यनुरागिणी अपि इत्यर्थः, अत एव योजितः अभिनिवेशितः, आत्मा मनः यस्यां तथाभूताम्, अनङ्गतापिताम् अनङ्गं कामं, स्वकार्य्यकरणाक्षममिति भावः, तापयति पीड़यतीति तादृशी अनङ्गतापिनी तस्या भावः तां, गताऽपि मदनुरागिणी मत्कामा च सत्यपीत्यर्थः, मदेनसा ममापराधेन हेतुना, मन्युरसेन क्रोधावेगेन, योजिता संसृष्टा, क्रोधपरवशा सतीत्यर्थः, मम इयते एतत्परिमाणाय, तापाय पीड़ायै, न आस न जगाम, इति न, अपि तु जगाम एवेत्यर्थः, सा मम अतीव सन्तापकारणतां प्रापेति भावः। ("अस गत्यादानदीप्तिषु" इत्यस्य रूपम्। सखायं प्रति कस्यचित् मानिन्या प्रत्याख्यातस्य उक्तिरियम्। अत्र प्रथमपादान्ते द्वितीयपादादौ च "मदेन सा मदेनसा" तथा द्वितीयपादान्ते तृतीयपादादौ च "न योजिता न योजिता" तथा तृतीयपादान्ते चतुर्थपादादौ च "ङ्गतापिता ङ्गतापिता" इत्येतेषां सन्दंशाकारेणावस्थानात् सन्दष्ट-यमकम्) ॥ ५२ ॥

इत्थं पादभागयमकानि दर्शयित्वा सम्प्रति समस्तपादगत-यमकानि दर्शयन् आदौ समुद्गयमकमाह, अर्द्धाभ्यास इति।—अर्द्धस्य पादद्वयस्य, (अर्द्धशब्दोऽत्र न केवलं श्लोकीयपूर्वार्द्धपरार्द्ध-परः, किन्तु यत्किञ्चित्पादद्वयपरः इति बोध्यम्) अभ्यासः पुन-रावृत्तिः, समुद्गः तदाख्यः, स्यात्; (समुद्गशब्देन सम्पुटक उच्यते, स यथा भागद्वयात्मकः तथा अयमपि पादद्वयात्मक इति

पादाभ्यासयमकलक्षणम् ।—

**पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥५३॥**

प्रथमतृतीय-द्वितीयचतुर्थपादगतसमुद्गोदाहरणम् ।—

**नास्थेयःसत्वयावर्ज्यः परमायतमानया ।**
**नास्थेयः स त्वया वर्ज्यः परमायतमानया ॥५४॥**

तथा व्यपदेशः ; तदुक्तं रुद्रभट्टेन—"अर्ध पुनरावृत्तं जनयति यमकं समुद्गकं नाम" इति ) अस्य समुद्गस्य, त्रयो भेदाः मताः ख्याताः। ( तथा च, प्रथमतृतीयौ द्वितीयचतुर्थौ च पादौ तुल्यौ इत्येकः, प्रथमद्वितीयौ तृतीयचतुर्थौ च तथा इति द्वितीयः, तथा प्रथमचतुर्थौ द्वितीयतृतीयौ च इति तृतीयः ) ॥—

समस्तपादगतयमकेषु पादाभ्यासयमकमाह, पादाभ्यास इति।—पादाभ्यासः एकैकचरणस्य पुनरावृत्तिः अपि, अनेकात्मा अनेकविधः, पादस्य एकद्वित्रिरभ्यासत्वेन एकादश-विध इत्यर्थः, ( तथा च प्रथमो द्वितीये तृतीये चतुर्थे च इति त्रयः ; द्वितीयः तृतीये चतुर्थे चेति द्वौ ; तृतीयश्चतुर्थे इत्येकः ; पुनश्च प्रथमः द्वितीये तृतीये च, द्वितीये चतुर्थे च, तथा तृतीये चतुर्थे च, द्वितीयस्तृतीये चतुर्थे च इति चत्वारः ; तथा प्रथमो द्वितीये तृतीये चतुर्थे च इत्येकः इति मिलित्वा एकादशविधः ) सः अर्द्धाभ्यासः पादाभ्यासश्च, निदर्शनैः वक्ष्यमाणैः उदाहरणैः, व्यज्यते व्यक्तीक्रियते ॥ ५३ ॥

तत्र समुद्गस्य भेदत्रयं दर्शयिष्यन् प्रथमं पूर्वपादार्द्धस्योत्तर-पादार्द्धेन समताहेतुकं प्रथमतृतीययोः द्वितीयचतुर्थयोश्च पादयोः तुल्यतालक्षणं यमकं दर्शयति, नेति।—परमायतः अतिदीर्घः, मानो यस्याः तादृश्याऽपि, अस्थेयः न अतिस्थिरं,

प्रथमद्वितीय-तृतीयचतुर्थपादगतसमुद्गोदाहरणम्।—

नरा जिता माननया समेत्य
न राजिता माननयासमेत्य।
विनाशिता वै भवताऽयनेन
विनाऽशिता वैभवतायनेन॥ ५५॥

सत्त्वं स्वभावः व्यवसायो वा यस्याः तथाभूतया, त्वया भवत्या, स ना पुरुषः, प्रियतम इत्यर्थः, न वर्ज्यः न प्रत्याख्येयः; परं किन्तु, आयतमानया यत्नवत्या सत्या, आस्थेयः आदर्त्तव्यः, तथा आवर्ज्यः सप्रेमव्यवहारेण वशीभूतः कार्य्यश्च, तव स्वभावो व्यवसायो वा न स्थिरतरः, अतः प्रियपरित्यागे पश्चात्ताप एव फलं, तस्मात् यथाऽयं स्ववशे तिष्ठेत् तथा यत्नः क्रियतामिति भावः। (मानिनीं प्रति तत्सख्या उक्तिरियम्। अत्र प्रथम-तृतीयौ द्वितीयचतुर्थौ च तुल्याविति समुद्गभेदः। उदाहरणान्तरं यथा भट्टिकाव्ये—"समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा। समिद्धशरणादीप्ता देहेऽलङ्कामतेश्वरा॥" इति)॥५४॥

प्रथमद्वितीयपादयोस्तृतीयचतुर्थयोश्च पादयोः समतालक्षणं समुद्गस्य भेदान्तरमुदाहरणेन दर्शयति, नरा इति।—माननया सम्मानेन, समेत्य सङ्गत्य, स्थितेन इति अध्याहार्य्यं, मानवते-त्यर्थः, भवता अयनेन गमनेन, सङ्ग्रामयात्रयेत्यर्थः, जिताः पराभूताः, नराः रिपव इत्यर्थः, माननयोः सम्माननीत्योः आसं क्षेपम्, अभावमित्यर्थः, एत्य प्राप्य, न राजिताः न शोभिताः, भवत्सकाशात् पलाय्य कथञ्चित् रक्षितजीवनानां शत्रूणां सम्माननीतिशून्यतया अतीव दुर्दशा जातेत्यर्थः। पलायमानानामेषा गतिरुक्ता, ये तु साहसिका न तथा, तेषां

प्रथमचतुर्थ-द्वितीयतृतीयपादगतसमुद्गोदाहरणम्।—

कलापिनां चारुतयोपयान्ति
वृन्दानि लापोढ़घनागमानाम्।
वृन्दानिलापोढ़घनागमानां
कलापिनां चारुतयोऽपयान्ति॥ ५६॥

तिमाह, विनाश्रिता इति।—वैभवं विभुत्वं, तायति विस्ता-
यति इति तथोक्तेन, ("तायृञ् पालनविस्तारयोः" इत्यस्मात्
न्यादित्वात् ल्य-प्रत्ययः) भवता विनाश्रिता वै निहतास्तु,
पवः इति शेषः, विना पक्षिणा, गरुड़ेण इत्यर्थः, आश्रिताः
चिताः। (राज्ञः स्तुतिरियम्। अत्र प्रथमद्वितीयौ तथा
तीयचतुर्थौ च तुल्यौ इति समुद्गभेदः)॥ ५५॥

प्रथमचतुर्थपादयोर्द्वितीयतृतीयपादयोश्च तुल्यतालक्षणं
मुद्गभेदान्तरमाह, कलापिनामिति।—लापेन केकाध्वनिना,
ढ़ः प्राप्तः, घनकालः सम्प्राप्त इति प्रकटित इति भावः,
नागमः वर्षाकालः यैः तादृशानां, कलापिनां मयूराणां,
न्दानि समूहाः, चारुतया शोभया, वर्षाकालजनितया इति
वः, उपयान्ति सङ्गच्छन्ते, शोभां प्राप्नुवन्तीत्यर्थः; तथा
न्दानिलेन वार्षिकसङ्घातवायुना, अपोढ़ः निरस्तः, घनः नृत्य-
शेषः, ("घनं स्यात् कांस्यतालादि-वाद्यमध्यमनृत्ययोः" इति
दिनी) तद्विशिष्टः आगमः आगमनं, सविलासागमनमित्यर्थः,
षां तादृशानां, परित्यक्तसविलासगतिकानाम् इत्यर्थः, के जले,
पन्ति नदन्तीति तथोक्तानां, कलम् अव्यक्तमधुरध्वनिम्,
प्नुवन्ति इति तथोक्तानां वा कलापिनां हंसानां च, आरुतयः
धुरस्वराः, अपयान्ति अपगच्छन्ति, प्रतिरुद्धा भवन्तीत्यर्थः,
षांसु हंसानां मदराहित्यादिति भावः। (वर्षावर्णनमिदम्।

प्रथमद्वितीयपादगतपादाभ्यासोदाहरणम्।—

न मन्दयावर्जितमानसात्मया
नमन् दयावर्जितमानसात्मया।
उरस्युपास्तीर्णपयोधरद्वयं
मया समालिङ्ग्यत जीवितेश्वरः ॥५७॥

अत्र प्रथमचतुर्थौ तथा द्वितीयतृतीयौ तुल्यौ इति समुद्गभेदः) ॥ ५६ ॥

समुद्गयमकभेदमभिधाय सम्प्रति अनेकविधं पादाभ्यासयमकमुदाहरिष्यन् प्रथमं प्रथमद्वितीयपादगतं तदुदाहरति, नेति।—मन्दया मूढया, तत्कालोचितप्रतिपत्तिविधुरया इत्यर्थः, अवर्जिते अत्यक्ते, माने प्रणयजन्ये ईर्ष्याजन्ये वा कोपे, सात्मया सयत्नया, यत्नवत्या इत्यर्थः, यत्नेन मानं रचन्त्या इति यावत्, ("आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि" इति मेदिनी) यद्वा—आवर्जितः अनुकूलं मत्वा स्वीकृत इत्यर्थः, मानः ईर्ष्यारोषलक्षणो यया सा, तथा सात्मा आत्मवती तया, (अनयोः कर्मधारयः) तथा दयया वर्जितो प्रियस्य मलिनमुखं दृष्ट्वाऽपि कृपाविरहितौ, मानसम् आत्मा स्वभावश्च तौ यस्याः तथाभूतया, मया नमन् कृतापराधतया पादयोः पतन्, अपीति शेषः, जीवितेश्वरः प्राणनाथः, उरसि वक्षसि, प्रियस्येति भावः, उपास्तीर्णम् अर्पितं, पयोधरद्वयं स्तनयुगलं यस्मिन् तद्यथा तथा, न समालिङ्ग्यत नाश्लिष्यत। "सात्मया" इत्यत्र "सार्थया" इति पाठे—एकत्र—अपरित्यक्तमानसमूहया, अन्यत्र—दयावर्जितमानसप्रयोजनेत्यर्थः। नायकं निराकृत्य गलितमानाया मानिन्या अनुतापोक्तिरियम्। अत्र प्रथमद्वितीयौ पादावभ्यस्तौ इति पादाभ्यासयमकम्) ॥ ५७ ॥

प्रथमतृतीयपादगतपादाभ्यासोदाहरणम् ।—

सभा सुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्मलैः ।
स भासुराणामबला विभूषिता
विहारयन् निर्विश सम्पदः पुराम् ॥५८॥

प्रथमचतुर्थपादगतपादाभ्यासोदाहरणम् ।—

कलङ्कमुक्तं तनुमध्यनामिका
स्तनद्वयी च त्वदृते न हन्त्यतः ।

तदेव प्रथमतृतीयपादगतमुदाहरति, सभेति ।—हे
न् ! मृणालनिर्मलैः मृणालवत् परिशुद्धैः, तव गुणैः
र्यादिभिः, अबला बलासुररहिता, इन्द्रेण निहतत्वात्
सुरात्पातविहीना इत्यर्थः, तथा विभूषिता देवभाग्यद्रव्य-
ः विशेषेण सज्जिता, यद्वा—विभोः प्रभोः, ब्रह्मणः
णोः शङ्करस्य इन्द्रस्य वा इत्यर्थः, भूषितं वसतिः यस्यां
थो, सुराणां देवानां, सभा सुधर्माख्या, आरोहि आरूढ़ा,
सुरविनाशादधुना देवसभास्था निर्भयाः सन्तः तव गुणान्
न्तीत्यर्थः, स त्वं, विभूषिताः विशेषेण अलङ्कृताः, अबलाः
र्थ्यः, विहारयन् रमयन् सन्, भासुराणां दीप्यमानानां,
द्धानाम इत्यर्थः, पुरां नगराणां, सम्पदः ऐश्वर्य्याणि,
श उपभुङ्क्ष्व । ( राजानं प्रति वैतालिकस्योक्तिरियम् ।
प्रथमतृतीयौ अभ्यस्ताविति पादाभ्यासयमकम ) ॥ ५८ ॥
तदेव प्रथमचतुर्थपादगतमुदाहरति, कलमिति ।—कलं
म, उक्तं वचनं, विलासिनीनामिति अध्याहार्य्यम् ; तथा
चीणं, मध्यं कटिदेशं, नमयतीति तथोक्ता पृथुतरेत्यर्थः ;

न याति भूतं गणने भवन्मुखे
कलङ्कमुक्तं तनुमद्ध्यनामिका ॥ ५९ ॥

यद्वा—तनोर्मद्ध्यस्य नामिका, निजभरेण इति भावः, ("अजादि-हलन्तोऽदीर्घात्" इति क्वचित् पाणिनौ मध्यशब्दस्य धकार-द्विर्भावः) स्तनद्वयी च त्वदृते त्वां विना, कं जनं, न हन्ति ? न पीडयति ? अपि तु त्वां परित्यज्य सर्वमेव इत्यर्थः, अतः कारणात्, भवन्मुखे भवदादिविषये, गणने सङ्ख्याने, भवादृशां जितेन्द्रियाणां गणनायामित्यर्थः, हि निश्चितम्, अनामिका अङ्गुष्ठतश्चतुर्थी अङ्गुलिः, कलङ्कमुक्तं निर्दोषं, तनुमत् शरीरि, भूतम् अपरं प्राणिनं, न याति न गच्छति, त्वां विना अन्यं न गणयति इत्यर्थः, जगत्यस्मिन् के के जितेन्द्रियाः सन्तीति गणनाप्रस्तावे कनिष्ठाङ्गुल्या प्रथमं त्वां गणयित्वा अनामिकया अन्यं कमपि गणयितुं न शक्नोति भवादृशजितेन्द्रियान्तराभावादिति भावः। (कमपि महान्तं प्रत्युक्तिरियम्। अत्र प्रथमचतुर्थौ पादावभ्यस्ताविति पादा-भ्यासयमकम्। अत्रेदमवधेयं—चतुर्थपादे "तनुमद्ध्यनामिका" इति पदस्य तनुमत् हि अनामिका एवं विश्लेषं कृत्वा व्याख्याने तनुमद्ध्यनामिकेति धकारस्य दकारयुक्तत्वं भवति, ततश्च प्रथमपादस्थतनुमध्यपदस्य दकारयुक्तत्वाभावे यमकत्वहानि-माशङ्क्य प्रथममध्यशब्दस्यापि द्विर्भावः व्याख्यातृभिरङ्गीकृतः, परन्तु मध्यशब्दस्य धकारस्य द्विर्भावः अप्रसिद्धः, अतः वयमत्रेदं मन्यामहे यत्, चतुर्थपादे—कलङ्कमुक्तं तनुमधि शरीर-मधिकृत्य, शरीरधारि इत्यर्थः, भूतं न याति एवं व्याख्याने प्रथम-मध्यपदस्य धकारस्य द्विर्भावरूपकष्टकल्पनां विनाऽपि व्याख्यानसङ्गतिरिति सुधीभिर्विभाव्यम्)॥ ५९ ॥

द्वितीयतृतीयपादगतपादाभ्यासोदाहरणम्।—

यशश्च ते दिक्षु रजश्च सैनिका
वितन्वतेऽजोपम! दंशिता युधा।
वितन्वतेजोऽपमदं शितायुधा
द्विषाञ्च कुर्वन्ति कुलं तरस्विनः॥६०॥

द्वितीयचतुर्थपादगतपादाभ्यासोदाहरणम्।—

बिभर्त्ति भूमेर्वलयं भुजेन ते
भुजङ्गमोऽमा स्मरतो मदञ्चितम्।

द्वितीयतृतीयपादगतं पादाभ्यासयमकमुदाहरति, यश्च ते।—अजोपम! हे अजराजसदृश!, नारायणसम! इति, हरसम! इति वा, ("अजा विष्णुहरच्छागाः" इत्यमरः) दंशिताः सन्नाहवन्तः, शितानि तीक्ष्णानि, आयुधानि अस्त्राणि येषां ते तथोक्ताः, तथा तरस्विनः महावेगाः, अप्रतिहतवेगा इत्यर्थः, ते तव, सैनिकाः योद्धृपुरुषाः, युधा सङ्ग्रामेण, दिक्षु यशश्च तथा रजश्च पांशुञ्च, वितन्वते विस्तारयन्ति, तथा द्विषां शत्रूणां, कुलञ्च समूहञ्च, वितनु देहरहितम्, अतेजः तेजोहीनं, तथा अपमदं निरहङ्कारञ्च, कुर्वन्ति विदधति। (विजिगीषुस्तुतिरियम्। अत्र द्वितीयतृतीयावभ्यस्ताविति पादाभ्यासयमकम्)॥६०॥

तदेव द्वितीयचतुर्थपादगतमुदाहरति, बिभर्त्तीति।—हे राजन्! भुजङ्गमो वासुकिः, ते तव, भुजेन अमा सह, त्वद्भुजेन साहाय्येनेत्यर्थः, भूमेर्वलयं भूमण्डलं, बिभर्त्ति धत्ते। एतावता गर्वो न विधेय इत्याह, स्मरत इति।—स्मरतः पूर्ववृत्तं जानत इत्यर्थः, मत् मत्तः, मत्सकाशादित्यर्थः, अञ्चितं पूजितं,

शृणूक्तमेकं स्वमवेत्य भूधरं
भुजङ्गमो मास्म रतो मदञ्चितम् ॥६१॥

तृतीयचतुर्थपादगतपादाभ्यासोदाहरणम्।—

स्मरानलो मानविवर्द्धितो यः
स निर्वृतिन्ते किमपाकरोति ?।
समन्ततस्तामरसेक्षणे ! न
समन्ततस्तामरसे ! क्षणेन ॥६२॥

सर्वजनसम्मतम् इत्यर्थः, एकम् उक्तं वचनं, शृणु आकर्णय; किन्तदित्याह—स्वं स्वकीयं, भुजं भूधरं भूधारणक्षमम्, अवेत्य ज्ञात्वा, रतः प्रीतः सन्, चितं प्रवृद्धम, अत्यन्तमित्यर्थः, मदं गर्वं, मास्म गमः न गच्छ, गर्वं मा कुरु इत्यर्थः। (राजानं प्रत्युपदेशगर्भस्तुतिरियम्। अत्र द्वितीयचतुर्थावभ्यस्ताविति पादाभ्यासयमकम्) ॥ ६१ ॥

तदेव तृतीयचतुर्थपादगतमुदाहरति, स्मरानल इति।—तामरसेक्षणे! हे पद्मलोचने!, ("अथ तामरसं पद्मे ताम्रकाञ्चनयोरपि" इति मेदिनी) रक्तोत्पलनयने! इति वा, मानजनितकोपेनेति भावः, ("रक्तोत्पलं तामरसम्" इति कोषः) अरसे! हे अरसिके!, मानेन विवर्द्धितः विशेषेण वृद्धिं गतः, ते तव, यः स्मरानलः कामाग्निः, स ततः विस्तारं गतः सन्, क्षणेन उत्सवेन, समं सह, समन्ततः सर्वतोभावेनेत्यर्थः, तां पूर्वानुभूतां, निर्वृतिं सुखं, किं न अपाकरोति? न निरस्यति?, अपि तु निरस्यत्येवेत्यर्थः, नितरां कामपीड़िताऽसि अत इदानीमेव मानं मुञ्च विलम्बेनालमिति

प्रथमद्वितीयतृतीयपादगतपादाभ्यासोदाहरणम्।—

प्रभावतो नामन ! वासवस्य
प्रभावतो नाम नवासवस्य।
प्रभावतोऽनाम ! न वा सवस्य
विच्छित्तिरासीत् त्वयि विष्टपस्य ॥६३॥

प्रथमद्वितीयचतुर्थपादगतपादाभ्यासोदाहरणम्।—

परम्परायाबलवा ! रणानां
परम्परायाबलवारणानाम्।

---

वः। (मानिनीं प्रति तत्सख्युक्तिरियम्। अत्र तृतीय-
तुर्थावभ्यस्ताविति पादाभ्यामयमकम्) ॥ ६२ ॥

पादत्रयाभ्यासं क्रमशो दर्शयितुमादौ प्रथमद्वितीयतृतीय-
दगतं दर्शयति, प्रभावत इत्यादि।—हे प्रभावतः प्रभावात्,
तेजसा इत्यर्थः, प्रभावतः प्रभा दीप्तिः तत्सम्पन्नस्य, वासवस्य
इन्द्रस्यापि, नामन ! नामयति नतं करोतीति तत्सम्बुद्धौ,
प्रभङ्गपारिजातहरणादिना इन्द्रस्यापि गर्वहरणादिति भावः,
मेति प्रसिद्धौ, हे अनाम ! नास्ति आमो रोगो यस्य यस्माद्वा
सम्बुद्धौ, त्वयि विष्टपस्य भुवनस्य, प्रभौ अधिपे सति, दुर्वृत्त-
नादिना जगत् पालयति सतीत्यर्थः, अतोऽस्मात् कर्मणः,
असुरादिनिधनादित्यर्थः, नवासवस्य नवस्य आसवस्य
याः, सवस्य वा यज्ञस्य च, विच्छित्तिर्विच्छेदः, नासीत न
वत्, भोगिनां सुरापानोत्सवः धर्मिष्ठानां यज्ञादिकञ्च
तं प्रवृत्ते इत्यर्थः। (श्रीकृष्णस्तुतिरियम्। अत्र प्रथम-
तीयतृतीयपादानामभ्यासात्पादत्रयाभ्यासयमकम्) ॥ ६३ ॥

तदेव प्रथमद्वितीयचतुर्थपादगतमुदाहरति, परमिति।—

धूलीः स्थलीर्व्योम विधाय रुन्धन्
परम्परायाबलवारणानाम् ॥६४॥

द्वितीयतृतीयचतुर्थपादगतपादाभ्यासोदाहरणम्।—

न श्रद्दधे वाचमलज्ज! मिथ्या-
भवद्विधानामसमाहितानाम्।

(अत्र पदच्छेदप्रकारो यथा—परं, परायाः, बलवाः, रणानां, परम्परायाः, बलवारणानाम्, परं, पराय!, अबलवारणानाम् इति) हे पराय! परः उत्कृष्टः, अयः शुभावहविधिर्यस्य तत्-सम्बुद्धौ, हे परमकल्याणिन्नित्यर्थः, हे बलवाः! बलेन शक्त्या, वारयति निवारयति, शत्रूनिति शेषः, तत्सम्बुद्धौ, (वारयतेः क्विपि रूपम्) त्वं बलमेषामस्तीति बलाः बलवन्तः, (अर्श-आदित्वादच्-प्रत्ययः) वारणा हस्तिनः येषु तथोक्तानां, तथा अबलान् दुर्बलान्, वारयन्ति विमुखीकुर्वन्तीति अबलवारणाः तेषां, रणानां युद्धानां, परम्परायाः समूहस्य, स्थलीः रणभूमी-रित्यर्थः, धूलीर्विधाय रेणुमयीः कृत्वा, प्रभूतरथाश्वसैन्यानां पादताड़नेनेति भावः, व्योम आकाशं, रुन्धन् आच्छादयन् सन्, धूलीभिरिति भावः, परं श्रेष्ठं, बलिनमिति यावत्, परं शत्रुं, परायाः गतवान्, जितवान् असीत्यर्थः, (परापूर्वकात् याधातोः लङः मध्यमपुरुषैकवचनम्। राज्ञः स्तुतिरियम्। अत्र प्रथमद्वितीयचतुर्थाः पादा अभ्यस्ता इति पादत्रयाभ्यास-यमकम्) ॥ ६४ ॥

द्वितीयतृतीयचतुर्थपादगतं पादत्रयाभ्यासमुदाहरति, नेति।—अलज्ज! हे निस्त्रप!, असमाहितानाम् अनवहित-चित्तानाम्, अन्यासक्तत्वात् असंयतात्मनाम् इत्यर्थः, तथा

भवद्विधानामसमाहितानां
भवद्विधानामसमाहितानाम् ॥६५॥

पादचतुष्टयाभ्यासोदाहरणम्।—

सन्नाहितोमानमराजसेन !
सन्नाहितोऽमानम ! राजसे न।
सन्नाहितो मानम ! राजसेन
सन्ना हितोऽमानमराजसेन ! ॥६६॥

समा असदृशाः, अतिबहुला इत्यर्थः, अहिताः शत्रवः येषाम्, धिकशत्रूणामित्यर्थः, भवद्विधानां त्वत्सदृशानां धूर्त्तानां, भ्याभवत् असत्यम्भवत्, विधानं कार्य्यं यस्यास्तां कार्य्येषु परिणतामित्यर्थः, तथा असमः विषमः, अतिदारुण इत्यर्थः, अहिः सर्पः, तस्येव तानो विस्तारः, वक्रगतिरिति यावत्, था: तादृशीम्, अतिवक्रदारुणामित्यर्थः, पुनश्च भवे उत्पत्तौ, णमात्र एवेत्यर्थः, द्विधा द्विविधः, अनः प्राणः, अर्थरूपः ते यावत्, यस्याः तथाभूताम्, अर्थानामेव वाचां प्राणत्वात् न भावः, यद्वा—भवे द्वे द्विप्रकारे, धाने धारणे, अर्थग्रहणे र्थे:, यस्याः तां, श्रवणसमकालमेव द्व्यर्थबोधिकामित्यर्थः, चं न श्रद्दधे न विश्वसिमि। (शठनायकं प्रति नायिकाया क्तिरियम्। अत्र द्वितीयतृतीयचतुर्थपादानामभ्यासात् पाद-भ्यासयमकम्) ॥ ६५ ॥

पादत्रयगतं द्विरभ्यासमुदाहृत्य इदानीं पादचतुष्टयगतं रभ्यासमुदाहरति,सन्निति।—सन्! हे साधो !, हे आहितोमा-राजसेन ! न नमन्तीति अनमाः ब्राह्मणाः, (पचादि-दच्) अनमानां राजा अनमराजश्चन्द्रः, (चन्द्रस्य द्विज-

श्लोकाभ्यासयमकम् ।-

सकृत् द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः ।
श्लोकद्वयन्तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥६७॥

राजापरपर्य्यायत्वात् ) उमा पार्वती च, अनमराजश्च तौ उमानमराजौ, आहितौ स्वाङ्गे धृतौ, उमानमराजौ पार्वतीद्विजराजौ येन सः आहितोमानमराजः शिवः, तेन सेनः इनः प्रभुः, उपास्य इति यावत्, ("इनः सूर्य्ये प्रभौ" इत्यमरः ) तेन सह वर्त्तमानः सेश्वरः इत्यर्थः, तत्सम्बुद्धौ, हे शिवभक्त! इत्यर्थः, तथा हे अमानम ! अमाना अपरिमाणा, मा लक्ष्मीः, सम्पदित्यर्थः, यस्य तत्सम्बुद्धौ, हे प्रभुतसम्पत्तिमन् !, पुनश्च हे राजसेन रजोगुणजक्रोधादिविकारेण, मानम! मा नम्यते न वशीक्रियते इति तत्सम्बोधनं, हे क्रोधलोभाद्यनायत्तोन्नत ! इत्यर्थः, किञ्च हे अमानमराजसेन ! मानः सम्मानः, मा लक्ष्मीः ते मानमे, न विद्येते मानमे यस्याः सा अमानमा सम्मानसम्पद्विहीना, राजसेना विपक्षराजचमूर्यस्य तत्सम्बुद्धौ, सन्नाहितः कृतयुद्धोद्योगः सन्, न राजसे न शोभसे, त्वमिति शेषः, यतस्त्वं सन्नाहितः सन्ना अवसादं गताः, अहिताः शत्रवो यस्य तथोक्तः, तथा सन्ना सत्पुरुषः, साधुः इत्यर्थः, ततश्च हितः सर्वेषां हिते रत इत्यर्थः, अतस्तव युद्धयात्रा न युज्यते इति भावः । ( शैवं राजानं प्रति युद्धनिवर्त्तकवचनम् । अत्र सर्वे एव पादा अभ्यस्ताः ) ॥ ६६ ॥

सम्प्रति पादाभ्यासमुपसंहृत्य श्लोकाभ्यासं निर्दिशति, सकृदिति ।—एवम् उक्तप्रकारेण, पादस्य सकृत् एकवारं, द्विः वारद्वयं, त्रिश्च वारत्रयञ्च, यः अभ्यासः पुनरावृत्तिः, सः प्रदर्शितः उदाहृतः । (तत्र सकृदभ्यासः पादद्वयगतः, द्विरभ्यासः

श्लोकाभ्यासोदाहरणम् ।—

त्रिनायकेन भवता वृत्तोपचितबाहुना ।
स्वमित्रोद्धारिणाऽभीता पृथ्वीयमतुलाश्रिता ॥६८ ॥
विनायकेन भवता वृत्तोपचितबाहुना ।
स्वमित्रोद्धाऽरिणाऽभीता पृथ्वी यमतुलाश्रिता ॥६९॥

पादत्रयगतः, त्रिरभ्यासः पादचतुष्टयगत इति बोद्धव्यम् )। युक्तः सङ्गतः, अर्थोऽभिधेयः यस्य तं सङ्गतार्थम्, एकवाक्यतापन्नमित्यर्थः, श्लोकद्वयं समानानुपूर्वपदवर्णघटितं पद्यद्वितयं, श्लोकाभ्यासः श्लोकाभ्याससंज्ञकः, स्मृतः कथितः। यथेति वक्ष्यमाणोदाहरणार्थम् ॥ ६७ ॥

तमेव श्लोकाभ्यासमुदाहरति, विनायकेनेति ।—हे राजन्! विनायकेन विनेत्रा, दुर्जनानां शासित्रा इत्यर्थः, तथा वृत्तौ वर्त्तुलौ, उपचितौ पीनौ च, बाहू भुजौ यस्य तथोक्तेन, महाभुजेनेत्यर्थः, स्वमित्राणां सु शोभनानाम्, अमित्राणां शत्रूणां, शौर्य्यादिसम्पन्नानामपि रिपूणामित्यर्थः, उद्धारिणा विनाशकेन, तथा अतुलाश्रिता तुलां तुलनाम्, आश्रयतीति तुलाश्रित्, स न भवतीति अतुलाश्रित् तेन, केनापि सादृश्यं न भजता इत्यर्थः, निरुपमेण इति यावत्, (श्रयतेः क्विप्) भवता हेतुना, इयं पृथ्वी वसुधा, अभीता दुर्जनेभ्यो भयरहिता जाता इत्यर्थः ॥ ६८ ॥

विनायकेनेति ।—किञ्च अभीता युद्धाय भवदभिमुखमागच्छता, (अभिपूर्वादिण्धातोः क्विपि तृतीयैकवचनम्) अरिणा शत्रुणा, तवेति शेषः, विनायकेन नायकरहितेन, तथा वृत्तौ जातौ, उपचितौ चितामुपगतौ, श्मशानस्थचितामारूढौ इत्यर्थः,

महायमकलक्षणम् ।—

एकाकारचतुष्पादं तन्महायमकाह्वयम् ।
तत्रापि दृश्यतेऽभ्यासः सा परा यमकक्रिया ॥७०॥

---

[ उपगतौ च्युतामिति विग्रहेण "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" ( वा० ) इति तत्पुरुषः ] बाहू यस्य तथोक्तेन, तथा स्वमित्राणि निजबन्धून्, स्वानि धनानि, मित्राणि बन्धूंश्च इति वा, उज्जहाति परित्यजतीति स्वमित्रोज्झाः तादृशेन, परित्यक्तस्वजनेन परित्यक्तधनबान्धवेनेत्यर्थः वा, [ स्वमित्र-शब्दात् उत्पूर्वकस्य जहातेः क्विपि तृतीयैकवचनम् "आतो धातोः" ( ६।४।१४० पा० ) इति धातोराकारलोपः ] भवता पूर्वोक्तप्रकारेण सता, पृथ्वी गुर्वी, यमतुला यमस्य अन्तकस्य, तुला परिमाणयन्त्रं, विचारस्थानम् इति भावः, ( मानयन्त्रे न्यूनाधिकत्वनिश्चयवत् कृतान्तविचारालयेऽपि पुण्यपापनिश्चयकरणात् तस्य तुलायन्त्रतुल्यत्वमवगन्तव्यम् ) आश्रिता प्राप्ता, यमसदनं गतम् इत्यर्थः । ( राज्ञः स्तुति-विषयकं श्लोकद्वयमिति । समानवर्णादिघटितश्लोकद्वयस्य युक्तार्थत्वात् श्लोकाभ्यासोऽयम् । केचित्तु श्लोकद्वयावृत्तिरूपं श्लोकाभ्यासयमकं महायमकमाहुः; उदाहृतञ्च यथा— "अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः । कर्कशं प्रथितं धाम समस्तं पुष्करेक्षणम् ॥" पुनरपि—"अभियाऽतावरम्—" इत्यादिपठनरूपं श्लोकद्वयम् ) ॥ ६९ ॥

पादचतुष्टयगतस्य निरभ्यासरूपयमकस्य प्रतिचरणमवान्तराभ्यासे वैचित्र्यविशेषसम्भवात् महायमकसंज्ञामाह, एकाकारेति ।—एकाकाराः अभिन्नाः, चत्वारः पादा यत्र तादृशं, तत् यमकं, महायमकाह्वयं महायमकसंज्ञं, ज्ञेयमिति शेषः;

महायमकोदाहरणम् ।—

**समानयास ! मानया समानयासमानया ।**
**समानया समानया समान ! या समानया ॥७१॥**

तत्रापि एकाकारचतुष्पादरूपमहायमकस्य पादमध्येऽपि, अभ्यासः पुनरावृत्तिः, पादखण्डस्येति भावः, दृश्यते, अतः सा परा श्रेष्ठा, यमकक्रिया यमनप्रकारः, यमकवत्पद्यानुष्ठानमित्यर्थः, पादचतुष्टयाभ्यासे यत्र पादखण्डस्यापि अभ्यासः तत् महायमकमिति निष्कर्षः । ( महायमकत्वञ्च ईदृशयमनविधेः वैचित्र्याधायकतया उत्कृष्टत्वात् बोध्यम । ननु पादचतुष्टयाभ्यासयमके यथा चतुष्पादानां तुल्यावृत्तिस्तथैवात्रापि, किं ततो महायमके वैचित्र्यम् इत्यतो भेदप्रदर्शनाय पादखण्डाभ्यासवैचित्र्यमिह महायमकलक्षणमित्युक्तं, ततश्च चतुष्पादानामुभयत्रैव एकाकारत्वेऽपि प्रतिपादखण्डस्य पुनरावृत्तिपुरःसरं चतुष्पादानामेकरूपत्वन्तु महायमकत्वम् इति निष्कर्षः । उक्तञ्च कण्ठाभरणे—"एकाकारचतुष्पादं महायमकमुच्यते । श्लोकाभ्यासश्च तत्राद्यं पुनरभ्यासमर्हति ॥" इति । केचित्तु चतुष्पादानामेकरूपात्मकमिदं महायमकं सर्वपादयमकमाहुः ; यथा—"बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः । बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः ॥" इति ) ॥ ६० ॥

उदाहरति, समानेति ।—( अत्रायं पदच्छेदः,—समानयास, मा, अनया, समानय, असमानया, समानया, समानया, समान, या, समानया इति ) हे समानयास ! समानः एकरूपः, यासः यत्नः यस्य तत्सम्बुद्धौ, सर्वत्र तुल्यप्रयत्न ! इत्यर्थः, तथा समान ! समदर्शिन् !, सर्वत्र आत्मवद्दर्शिन इत्यर्थः,

विजातीयमिश्रयमकोदाहरणम् ।—

धराधराकारधरा धराभुजां
भुजा महीं पातुमहीनविक्रमाः ।
क्रमात् सहन्ते सहसा हतारयो
रयोद्धरा मानधुरावलम्बिनः ॥७२॥

यद्वा—सम: अभिन्न:, आन: प्राण: यस्य स:, अभिन्नहृदय !, सखे ! इति भाव:, या नायिका, समानया मा लक्ष्मी:, शोभा इत्यर्थ:, नय: नीति:, विद्या इत्यर्थ:, ताभ्यां सह वर्त्तमाना, सुन्दरी विदुषी चेत्यर्थ:, अत एव असमानया निरूपमया, समानया मानवत्या, समानया मान: सम्मान:, तेन सह वर्त्तमानया, सम्माननीयया इत्यर्थ:, यद्वा—समानयासमानया इत्येकं पदं, यास: यत्न:, मान: ईर्षारोष:, तौ समानौ यस्या-स्तया इत्यर्थ:, अनया नायिकया, मा मां, समानय सङ्गमय, अस्या: सङ्गमस्य अतीवादरणीयत्वात् अतीवपीड़ादायक-मेतन्मानं शीघ्रं सान्त्वयन् अनया मां संयोजय इति भाव: । ( मन्मथोन्माथाविष्टस्य कस्यचित् वयस्यं प्रति प्रार्थनेयम् । अत्र पादचतुष्टयाभ्यासे पादखण्डस्यापि अभ्यासात् महा-यमकम् ) ॥ ७१ ॥

"अत्यन्तबहवस्तेषाम्" इत्यादिना प्रतिपादितेषु बहुषु भेदेषु पूर्वं सजातीयसम्मिश्रणजनितप्रभेदा: दर्शिता:, इदानीं विजातीयमिश्रणोदाहरणं दर्शयति, धरेति ।—धराधराकार-धरा: धराया: पृथिव्या:, धर: धारणकर्त्ता, नागराज: इत्यर्थ:, तस्य आकारं सादृश्यं, धरन्तीति तादृशा: धराधराकारधरा: अतिदीर्घा इत्यर्थ:; अहीनविक्रमा: अहीन: अनल्प:, विक्रम:

प्रतिलोमयमकलक्षणम्।—

**आवृत्तिः प्रातिलोम्येन पादार्द्धश्लोकगोचरा।**
**यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम्॥७३॥**

वीर्य्यं येषां ते, अथवा—अहीनस्य अहीनां प्रभोः, नागाधिपस्यानन्तस्येत्यर्थः, विक्रम इव विक्रमो येषां तादृशाः, तथा सहसा बलात्, हृतारयः हृताः नाशिताः, अरयः शत्रवो यैः तथोक्ताः, तथा रयोद्धुराः रयेण वेगेन, उद्धुराः उत्कटाः, अतिवेगवन्त इत्यर्थः, तथा मानधुरावलम्बिनः मानस्य धुरां भारम्, अवलम्बन्ते इति तथाभूताः सम्मानरक्षका इत्यर्थः, धराभुजां राज्ञां, भुजाः बाहवः, क्रमात् शत्रोराक्रमणात्, शक्तित इति वा, स्वसामर्थ्यादित्यर्थः, ("क्रमस्थानक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी) महीं पृथ्वीं, पातुं रक्षितुं, पालयितुं वा, सहन्ते समन्ते। (अत्र प्रथमे पादे अव्यवहितमादिमध्ययमकं, पादानाञ्च सन्धिषु अव्यवहितमन्तादियमकं सन्दंशयमकञ्च, द्वितीयपादे पुनः वर्णद्वयव्यवहितं "महो मही" इति व्यपेतं मध्ययमकं, तृतीये च पादे एकवर्णव्यवहितं "सह सह" इति, चतुर्थे च वर्णद्वयव्यवहितं "धुरा धुरा" इति मध्ययमकम्। इत्थं बहूनां विजातीयानां सम्मिश्रणमत्र इत्यवधेयम्)॥ ७२॥

इत्थम् अनुलोमयमकभेदानुक्त्वा इदानीं प्रतिलोमभेदान् दर्शयन्नाह, आवृत्तिरिति।—प्रातिलोम्येन वैपरीत्येन, पादार्द्धश्लोकगोचरा पादार्द्धश्लोका गोचरा विषया यस्याः सा पादगोचरा, श्लोकार्द्धगोचरा, श्लोकगोचरा च एवं त्रिविधा इत्यर्थः, आवृत्तिः अभ्यासः, प्रतिलोमत्वात् वैपरीत्येनावृत्तत्वात्, प्रतिलोमं प्रतिलोमाख्यं, यमकम् इति स्मृतम्। (तथा च यत्र

पादप्रतिलोमयमकोदाहरणम् ।—

या मताश ! कृतायासा सायाता कृशता मया ।
रमणारकता तेऽस्तु स्तुतेताकरणामर ! ॥ ७४ ॥

पूर्वपादस्य प्रतिलोमावृत्त्या उत्तरपादः भवति, उत्तरपादस्यापि विलोमेनावृत्त्या पूर्वपादः सम्भवति, तत् पादगोचरं प्रतिलोमयमकम् ; तथा पूर्वार्द्धस्य प्रतिलोमावृत्त्या उत्तरार्द्धम् उत्तरार्द्धस्यापि प्रतिलोमावृत्त्या श्लोकपूर्वार्द्धं चेत् भवति तदा अर्द्धगोचरं प्रतिलोमयमकम् ; तथा एकस्य श्लोकस्य प्रतिलोमावृत्त्या श्लोकान्तरं श्लोकान्तरस्यापि तथैवावृत्त्या पूर्वश्लोको भवति चेत् तदा श्लोकगोचरं प्रतिलोमयमकमिति निष्कर्षः। तस्य चोक्तरीत्या त्रैविध्यम् )॥ ७३ ॥

(प्रतिलोमयमकस्य त्रैविध्यं दर्शयन् प्रथमं पादगोचरमुदाहरति, येति।—हे मताश ! मता ज्ञाता, आशा अन्यासङ्गविषयिणी तृष्णा यस्य तत्सम्बुद्धौ, या कृशता चीणता, कृतायासा कृतः जनितः, आयासः क्लेशः, ममेति भावः, यया तथोक्ता, ममात्यर्थं क्लेशदायिनीत्यर्थः, सा मया आयाता प्राप्ता, तव दुश्चेष्टितेन पूर्वमेव मया महती कृशता अधिगता, इदानीमपि सैव भविष्यति, काऽधिका ? अतः यथारुचि क्रियतामिति भावः, रमण ! हे सन्तोषजनक ! हे स्तुतेत ! स्तुतं स्तवम्, इत ! प्राप्त ! स्तवार्ह ! इत्यर्थः, अथवा—स्तुतं प्रशस्तम्, इतं गतिः, आचरणमिति यावत्, यस्य सः तत्सम्बुद्धौ, यद्वा—स्तुतात् इतः च्युतः अस्तवार्हः, निन्दिताचरणात् अप्रशंसनीय इत्यर्थः, तत्सम्बुद्धौ, तथा हे अकरणामर ! अकरणे अकार्य्यानुष्ठाने, अमरः देवसदृश इत्यर्थः, देववत् अकार्य्यमनुतिष्ठन्निति, देववत् अकार्य्यानुष्ठाननिरत इति वा भावः, तत्सम्बुद्धौ, ( देवाना-

श्लोकार्द्धप्रतिलोमयमकम्।—

नादिनो मदनाधी स्वा न मे काचन कामिता।
तामिका न च कामेन स्वाधीना दमनोदिना ॥७५॥

---

मकार्थ्येकरणमङ्ख्याजारत्वादिकमिति बोध्यम्; सर्वमेतत् सम्बोधनपदं सोल्लुण्ठनपरमवगन्तव्यं, प्रकृतानुपयोगित्वात्) ते तव, आरकता ऋच्छतीति आरकः, ("ऋण् गतौ" इत्यस्मात् णकप्रत्ययः) तस्य भावः आरकता गन्तृत्वं, यथेच्छगामिता इत्यर्थः, अस्तु भवतु, त्वं यां कामयसे तामेव व्रज नात्र त्वया स्थातव्यमिति भावः। (मानिन्या नायकं प्रति सकोपोक्तिरियम्। अत्र प्रथमपादस्य प्रतिलोमावृत्त्या द्वितीयपादस्तथा द्वितीयस्य प्रतिलोमावृत्त्या प्रथमपादः, एवं तृतीयचतुर्थयोरपि, तेनात्र पादविषयं प्रतिलोमयमकम्) ॥ ७४ ॥

श्लोकार्द्धविषयमुदाहरति, नादिन इति।—नादिनः नादरूपं ब्रह्म अस्यास्तीति तथोक्तस्य, नादब्रह्मानुध्यानरतस्य इत्यर्थः, मे मम, मदनाधी मदनश्च आधिश्च तौ कामः कामजनिता मानसी व्यथा चेत्यर्थः, तथा स्वा निजा, काचन कापि, कामिता विषयाभिलाषश्च, न, नादब्रह्मानुभवतो मे कामः तज्जनितमानसी व्यथा स्वार्थं विषयानुरागश्चैते न विद्यन्ते इत्यर्थः, तथा दमः बाह्येन्द्रियसंयमः, तं नुदति निरस्यतीति तथोक्तेन इन्द्रियसंयमध्वंसकारिणा, कामेन मदनेन हेतुना, स्वाधीना स्वः आत्मा, अधीनः आयत्तो यस्यास्ताहृशी आत्मव्याकुलकारिणीत्यर्थः, तामिका च ग्लानिरपीत्यर्थः, (ताम्यति अनयेति तमधातोर्भावे णकप्रत्ययः स्त्रीत्वञ्च) न नास्ति, ममेति शेषः। (नादोत्पत्तिश्च प्राणायामाभ्यासजा, तथा चोक्तं सुरेश्वराचार्य्येण यथा—"रेचपूरैरनिलस्य कुम्भैः

श्लोकप्रतिलोमयमकोदाहरणम् ।—

यानमानय माराविकशोनानजनासना ।
यामुदारशताधीनामायामायमनादि सा ॥ ७६ ॥

सर्वासु नाड़ीषु विशोधितासु। अनाहताडम्बुरुहादुदेति स्वात्मावगम्यः स्वयमेव नादः ॥" इति। कस्यचित् योगिनो वचनमिदम्। अत्र श्लोकपूर्वार्द्धस्य प्रतिलोमावृत्त्या श्लोकार्द्धान्तरं तथा श्लोकोत्तरार्द्धस्य प्रतिलोमावृत्त्या च पूर्वार्द्धं निष्पन्नमिति प्रतिलोमयमकं श्लोकार्द्धविषयम् ) ॥ ७५ ॥

श्लोकगोचरं प्रतिलोमं दर्शयति, यानमिति।—हे सखे! इति अध्याहार्य्यं, यानं वाहनम्, अश्वाद्यन्यतममित्यर्थः, आनय, त्वमिति शेषः। कथमित्याह, यामिति।—उदारशताधीनाम् उदाराणां महतां, धनिनामित्यर्थः, शतम् अधीनं वशीभूतं यस्यास्तादृशीम्, उदारशतस्य अधीनामिति वा, यां वेश्यामित्यर्थः, आयां गतवानस्मि, अहम् इति शेषः, माराविकशा मारः काम एव, अविर्मेषः, तस्य कशा ताड़नी, कामिनां कामार्त्तिहन्त्रीत्यर्थः, तथा ऊनः हीनः, धनाभावादिति भावः, अनः प्राणः येषां ते ऊनानाः धनहीनतया मृतप्राया इत्यर्थः, ऊनाः हीनाः, धनविहीनाः सन्तोऽपीत्यर्थः, अनन्ति जीवन्तीति तादृशा इति वा, ते च ते जनाश्चेति ऊनानजनाः, तान् अस्यति निरस्यतीति ऊनानजनासना निर्धनान् वहिष्कुर्वतीत्यर्थः, सा वेश्या, आयम आगमनम्, अनादि उक्ता, ( अनादि इति कथनार्थस्य नदधातोः कर्मणि लुङि रूपं, द्विकर्मत्वात् सा इति गौणकर्मणः उक्तत्वञ्च ) मयेति शेषः, अद्य तव सन्निधावागमिष्यामीति अभिहिता इत्यर्थः ॥ ७६ ॥

सा दिनामयमायामा नाधीता शरदाऽमुया ।
नासनाजनना शोक-विरामायनमानया ॥ ७७ ॥

इति यमकचक्रम् । *

गोमूत्रिकाबन्धलक्षणम् ।—

वर्णानामेकरूपत्वं यत्त्वेकान्तरमर्द्धयोः ।

साऽपि मय्यनुरागिणीत्याह, सेति ।—अमुया उपस्थितया इत्यर्थः, शरदा शरत्कालेन, उद्दीपन्या इति भावः, आधीता आधिं मनःपीडां, मद्विरहेणेति भावः, इता प्राप्ता, अत एव दिनामयमायामा, दिने दिवसे, आमयस्य रोगस्य, मायां छलम्, अमति गच्छति, प्रकाशयतीत्यर्थः, या सा तादृशी, दिवसे सखीनां समक्षं रोगच्छलेन विरहदुःखं गोपयन्तीत्यर्थः, किञ्च नासनाजनना नास्ति आसनाया उपवेशनस्य, स्थिरताया इत्यर्थः, जननं क्रिया यस्याः तथोक्ता, अस्थिरत्वात् विरहदुःखेन नैकत्र उपविशन्तीत्यर्थः, तथा अयनमानया अयनस्य मद्गमनमार्गस्य, मानं ज्ञानं, दर्शनमित्यर्थः, यातीति तथोक्ता, मदीयगमनवर्त्म निरीक्षमाणा इत्यर्थः, सा वेश्या, शोकविरामा शोकस्य विरहदुःखस्य, विरामः अवसानं यस्याः तादृशी, न, भवतीति शेषः, सततं विरहदुःखमनुभवतीत्यर्थः । (अनुरागिण्यां वेश्यायामासक्तस्य कस्यचित् सखायं प्रति उक्तिरियम् । अत्र प्रथमश्लोकस्य प्रतिलोमेनावृत्त्या श्लोकान्तरपूरणात् श्लोकान्तरस्यापि तथैवावृत्त्या प्रथमश्लोकपूरणाच्च श्लोकगोचरं प्रतिलोमयमकम् ) ॥ ७७ ॥

अथ चित्रालङ्कारान् कांश्चित् निरूपयिष्यन् प्रथमं गोमूत्रिकां निर्दिशति, वर्णानामिति ।—( अत्रेदमवधेयं—

* इति यमकचक्रं यमकानां यमकालङ्काराणां, चक्रं समूहः, अवान्तरभेदादिकमित्यर्थः, इति उक्तरूपेण, निरूपितमिति शेषः ।

गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो यथा ॥७८॥

चित्रालङ्कारभेदेषु वक्तव्येषु प्रथममेव किं नाम तल्लक्षणमित्यवश्यं वक्तव्यमपि प्रसिद्धतया ग्रन्थकृता नोक्तम्, अस्माभिस्तु शिष्याणां शिक्षासौकर्य्यार्थं किञ्चिदुच्यते—चित्रमालेख्यमिति, तदिव जीवितस्थानीयध्वनिरहितं चित्रमिति काश्मीरकाः; तदयुक्तं, ध्वनेः प्राधान्यानङ्गीकारात् प्रतीयमानभावस्य क्वचिदपि असम्भवाच्च। तदा आकृतिविशेषयुक्तं चित्रमित्येव भवतु, तदपि न, अव्यापकत्वात्; तस्मात् वर्णादिनियमेन प्रवृत्तमाश्चर्य्यकारितया चित्रमिति चित्रशब्दोऽत्राश्चर्य्यार्थकः इति समाधानम्। तच्च षड्विधमिति केचित् आहुः; तथा हि—वर्णचित्रं, स्थानचित्रं, स्वरचित्रम्, आकारचित्रं, गतिचित्रं, बन्धचित्रञ्चेति; यदुक्तं—"वर्णस्थानस्वराकार-गतिबन्धान् प्रतीह यः। नियमस्तद्बुधैः षोढ़ा चित्रमित्यभिधीयते।" इति। तत्र गतिचित्रं तावत् आदावेवानेन दर्शयित्वा वर्णस्वरस्थानचित्राणि प्रदर्शितानि। आकारबन्धौ तु नैव दर्शितौ। तत्र आकारः पद्माद्याकृतिमुद्रणं, बन्धः विविड़िनप्रभृतिः, एतयोश्च परस्परभेदः दुरधिगमः उभयोरेव आकृतिगतत्वादिति ) अर्द्धयोः श्लोकस्य यथाक्रमं पूर्व्वार्द्धोत्तरार्द्धयोः, ऊर्द्ध्वाधःक्रमेण पङ्क्तिद्वयेन लिखितयोरिति भावः, वर्णानाम् अक्षराणाम्, एकान्तरम् एकाक्षरव्यवहितं, यत् एकरूपत्वम् अभिन्नाकारत्वम्, एकैकाक्षरव्यवधानेन यत् एकविधवर्णविन्यसनमित्यर्थः, तद्विदः चित्रालङ्कारज्ञाः, दुष्करं सहसा कर्त्तुमशक्यं, तत्तु तदेव, ("तत्" इत्यत्र "तम्" इति पाठे तम् अलङ्कारमित्यर्थः ) गोमूत्रिकेति चलतो गोर्मूत्रधाराकारत्वेन श्लोकबन्धस्य घटितत्वात् गोमूत्रिकासंज्ञं, प्राहुः; ( तदुक्तं यथा कण्ठाभरणे—"गतिरुच्चारचा

यत्र मार्गे मूत्रस्य गोरिव । गोमूत्रिकेति तत् प्राहुर्दुष्करं चित्रवेदिनः ॥" इति । गोमूत्रिका च प्रधानतः त्रिविधा, पादगोमूत्रिका, श्लोकार्द्धगोमूत्रिका, श्लोकगोमूत्रिका च, अन्येऽपि अवान्तरभेदा अस्या विपरीतादयः सन्ति । इदन्तु लक्षणम् उत्तरार्द्धवर्णानामेकान्तरितत्वेन तादृशपूर्वार्द्धवर्णैः ऐकरूप्यात् अर्द्धगोमूत्रिकाया इति वेदितव्यम् । पादगोमूत्रिका पुनः यत्र प्रथमद्वितीयपादयोः तादृशाक्षराणामैकरूप्यं तृतीय-चतुर्थयोरपि अन्यविधमैकरूप्यं तत्रैवावगन्तव्या ; उदाहरणं यथा—"काङ्क्षन् पुलोमतनयास्तनताड़ितानि वक्षःस्थलोच्छ्रित-रयाभ्रनपीड़ितानि । पायादपायभयतो नमुचिप्रहारी मायामपास्य भवतोऽम्बुमुचां प्रसारी ॥" बन्धप्रकारो यथा—

पादगोमूत्रिकाबन्धः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| कां | क्ष्पु | म | य | स्त | ता | ला |
| द | लो | त | या | न | ड़ि | लि |
| व | स्थ | च्छ्रि | र | भ्र | पी | ता |

| | | | | | | |
|---|---|---|---|---|---|---|
| पा | द | य | य | न | चि | हा |
| या | पा | भ | तो | मु | प्र | री |
| मा | म | स्य | व | ऽम्बु | चां | सा |

श्लोकगोमूत्रिकायां पुनः श्लोकद्वयम् ऊर्द्धाधःक्रमेण स्थापनीयं, ततः प्रथमश्लोकस्य प्रथमपादीयैकान्तरितवर्णानां द्वितीय-श्लोकस्य प्रथमपादीयैकान्तरितवर्णैः, तथा द्वितीयादिपादाना-मपि एकान्तरितवर्णानां द्वितीयादिपादीयैकान्तरितवर्णैः ऐकरूप्यमवगन्तव्यम् ) । यथेति उदाहरणार्थम् ॥ ७८ ॥

श्लोकार्द्धगोमूत्रिकोदाहरणम् ।—

म द नो म दि रा क्षी णा म पा ङ्गा स्त्रो ज ये द यम्।

× × × × × × × × × ×

म दे नो य दि तत् क्षी णा म न ङ्गा या ञ्ज लिं द दे

॥ ७९ ॥

इति गोमूत्रिका । *

श्लोकार्द्धगोमूत्रिकामुदाहरति, मदन इति ।—अयं मदनः कामः, मदिराक्षीणां मत्तखञ्जननयनानाम्, अपाङ्गमेव अस्त्रं यस्य तथाभूतः सन्, यदि जयेत् मां प्रहरेत् इत्यर्थः, तत् तदा, मदेनः मम पापं, क्षीणं, स्यादिति शेषः, तदा च अनङ्गाय मदनाय, अञ्जलिं ददे पुष्पाञ्जलिं ददामि इत्यर्थः, अहम् इति शेषः, यदि अहं कामिनीभिः सकटाक्षमोक्ष्ये तदा कृतार्थो भवामि इति भावः । (अत्र पूर्वार्द्धोत्तरार्द्धयोर्विषमवर्णानि एकरूपाणि, समवर्णानि भिन्नरूपाणि इत्येकान्तरत्वेनैकरूप्यात् गोमूत्रिकाबन्धलक्षणसङ्गतिः । विषमवर्णैकरूप्ये बन्धलिखित-श्लोकोत्तरार्द्धस्य प्रथमाक्षरमारभ्य पूर्वार्द्धस्य द्वितीयाक्षरं पठनीयं, पुनरपि परार्द्धतृतीयाक्षरं पठित्वा पूर्वार्द्धचतुर्थाक्षरमित्येवंक्रमेण पठने पूर्वार्द्धं निष्पन्नं स्यात्, ततः पूर्वार्द्धप्रथमाक्षरमारभ्य उत्तरार्द्धं पठनीयम् । समवर्णानामैकरूप्यस्थले तु पूर्वार्द्धप्रथमा-क्षरमारभ्यैव पूर्वार्द्धम् उत्तरार्द्धप्रथमाक्षरमारभ्य च उत्तरार्द्धं पठनीयं, विषमवर्णानां पूर्वोक्तसमवर्णवत् पठनं, तेन च सम्पूर्ण-श्लोको निष्पद्यते इति अर्द्धगोमूत्रिका । बन्धलिखनप्रकारो यथा—

* इति गोमूत्रिका गोमूत्रिकाबन्धस्य लक्षणादिकं समाप्तम् ।

अर्द्धगोमूत्रिका बन्धः।




एतद्विपरीतानि अपि सम्भवन्ति, दिङ्मात्रमेवात्र दर्शितमिति।

आकारचित्रबन्धचित्रयोस्तु बहवो भेदाः; ते तु खड्गमुरज-पद्ममुषलशक्तिहलप्रभृतयः अन्यैरुक्ता ज्ञेयाः। तत्र खड्गबन्धो यथा —"मारारिशक्ररामेभमुखैरासाररंहसा। सारारब्धस्तवा नित्यं तदार्त्तिहरणक्षमा॥" "माता नतानां सङ्घट्टः श्रियां बाधितसम्भ्रमा। मान्याऽथ सीमा रामाणां शं मे दिश्यादुमाऽद्रिजा॥" अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तीर्य्यते। तत्र मुष्टेरुपर्य्यधः शाखाद्वयम्, उपरि शाखाचतुष्पथे प्राथमिक 'मा' कारं विन्यस्य तिर्य्यगधःक्रमेण 'रारि' इत्यादि 'ह' कारान्तांश्चतुर्दश वर्णान् न्यसेदित्येका धारा। ततः खड्गशिखायां श्लिष्टं 'मा' इति न्यसेत्, ततस्तिर्य्यगूर्द्ध्वक्रमेण 'रारब्ध' इत्यादिवर्णचतुर्दशकं विलिख्य अपरां धारां कुर्य्यात्, 'मा' कारः पूर्वं 'मा' कारं प्रविष्टः; एवमग्रेऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखायां 'ता' इत्यादिवर्णसप्तकं विन्यस्य वामशाखायां तिर्य्यग्विलोमेन 'श्रि' कारादिवर्णसप्तकं लिखेत्; 'मा' कारचतुष्पथे प्राथमिक 'मा'कारं प्रविष्टः, ततस्तमेव 'मा'कारमारभ्य अधोऽधः 'न्याथसी' इति त्रयो वर्णा मुष्टौ लेख्याः। ततोऽधश्चतुष्पथमध्ये तदन्तिम 'मा' कारं विन्यस्य तद्दक्षिणशाखायां "रामाणां शं" इति चतुरो वर्णान् विन्यसेत्, ततो वामशाखायां विलोमेन 'मे दिश्यादु' इति चतुरो वर्णान् लिखेत्। 'मा'कारः अधश्चतुष्पथस्थ 'मा'कारं प्रविष्टः। ततो मुष्टेरधः त्सरुके 'द्रिजा' इति वर्णद्वयं लेख्यमिति खड्गनिष्पत्तिः।

मुरजबन्धो यथा—"सा सेना गमनारम्भे रसेनासीदनारता। तारनादजना मत्तधीरनागमनामया॥" अत्र पङ्क्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधःक्रमेण यथाक्रमं प्रथमद्वितीयतृतीयचतुर्थानूर्द्ध्वक्रमेण पञ्चमषष्ठसप्तमाष्टमान् वर्णान् गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमं प्रथमात् द्वितीयतृतीयौ द्वितीयात् चतुर्थपञ्चमौ प्रथमात् षष्ठसप्तमौ द्वितीयादष्टमं गृहीत्वा द्वितीयः पादः। तृतीयात् प्रथमं तुर्य्यात् द्वितीयतृतीयौ तृतीयात् तुर्य्यपञ्चमौ तुर्य्यात् षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयः पादः। पादचतुष्टयस्योर्द्ध्वक्रमेण प्रथमद्वितीयतृतीयचतुर्थानधःक्रमेण पञ्चमषष्ठसप्तमाष्टमान् गृहीत्वा चतुर्थपादः पाठ्यः, एवं मुरजासङ्क्तिः। तत्र मुरजबन्धप्रकारो यथा—

मुरजबन्धः।




तथा पद्मबन्धो यथा—"भासते प्रतिभासार! रसाभाता हताविभा। भावितात्मा शुभा वादे देवाभा बत ते सभा॥"

अत्राष्टदिक्षु विततताष्टदलं पद्मं लेख्यं, तत्र कर्णिकायामाद्यः 'भा' कारः लेख्यः, ततो दले निर्गमप्रवेशरीत्या द्वौ द्वौ वर्णौ लेख्यौ, किन्तु दिग्दलेषु निर्गमः प्रवेशश्च, तत्र च प्राच्यदले आदौ निर्गमः श्लोकान्तप्रवेशश्च ; दक्षिणोत्तरदलयोः निर्गत्यैव प्रवेशः, पश्चिमदले तु प्रविश्यैव निर्गमः। आग्नेयवायव्यदलयोः प्रवेश एव, नैर्ऋतेशानयोस्तु निर्गम एव इति अष्टदलपद्मबन्धः। तथा चोक्तं—"कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च। प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥" इति। एवमन्येऽपि मुषलादयो वेदितव्या इति दिक्) ॥ ७९ ॥

तत्र पद्मबन्धप्रकारो यथा—

पद्मबन्धः।

पूर्व।



अर्द्धभ्रमः सर्वतोभद्रञ्च ।—

**प्राहुरर्द्धभ्रमं नाम श्लोकार्द्धभ्रमणं यदि ।**
**तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥ ८० ॥**

अथ अर्द्धभ्रमं सर्वतोभद्रञ्च निरूपयति, प्राहुरिति ।—यदि श्लोकार्द्धभ्रमणं श्लोकस्य श्लोकीयपादचतुष्टयस्येत्यर्थः, अर्द्धेन अर्द्धमार्गेण, अनुलोमविलोमात्मकयोरुच्चारणमार्गयोर्मध्ये केवलमनुलोममार्गेणेति भावः, भ्रमणं भ्रमणेन पादोपस्थितिरिति यावत्, तदा अर्द्धभ्रमं नाम चित्रं प्राहुः। यदि सर्वतः अनुलोमप्रतिलोमाभ्यां मार्गाभ्याम् इत्यर्थः, भ्रमणं, तत् तदा, सर्वतोभद्रं नाम चित्रम्, इष्टम्। ( तथा हि, द्विविधमिदम् अष्टाक्षरवृत्तिघटितमेव प्रायशो दृश्यते, तत्र प्रथमं चतुःषष्टिकोष्ठानि अष्टपङ्क्तिघटितानि लेख्यानि, ततः आद्यपङ्क्तिचतुष्टये क्रमेण पादचतुष्टयवर्णा निवेशनीयाः, ततश्च निम्नपङ्क्तिचतुष्टये चतुर्थतृतीयद्वितीयप्रथमपादा वैपरीत्येन लेख्याः; तत्र अर्द्धभ्रमे अधःपङ्क्तिचतुष्टये परावृत्त्या, सर्वतोभद्रे तु परावृत्त्या समावृत्त्या च चतुर्थादिपादलेखनम् इति भेदः। आवृत्तिक्रमस्तु अर्द्धभ्रमे चतुष्पादात्मिकायाम् ऊर्द्ध्वपङ्क्तौ वामात् दक्षिणतः, तथा पादचतुष्टयात्मिकायाम् अधःपङ्क्तौ दक्षिणात् वामतः, एवं वामस्योर्द्ध्वकोष्ठादधःक्रमेण दक्षिणस्य अधःकोष्ठात् ऊर्द्ध्वक्रमेण च अनुलोमावृत्त्या प्रथमादिपादोपस्थितिः। सर्वतोभद्रे तु दक्षिणात् वामतः वामाद्दक्षिणतश्च ऊर्द्ध्वादधःक्रमेण अधस्तु ऊर्द्ध्वक्रमेण च अनुलोमप्रतिलोमाभ्यां सर्वत आवृत्त्या पादोपस्थितिरिति बोध्यम्। एवं पठितिभङ्गिविशेषात्मकस्य गतिचित्रस्यैव भेदस्वरूपौ अर्द्धभ्रमसर्वतोभद्रौ ग्रन्थकृता दर्शितौ, एतस्यैव गतिचित्रस्यान्येऽपि भेदा गतप्रत्यागतादयः ग्रन्थान्तरा-

अर्द्धभ्रमोदाहरणम्।—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| म | नो | भ | व | त | वा | नी | कं |
| नो | द | या | य | न | मा | नि | नी |
| भ | भ्रा | द | मे | या | मा | मा | वा |
| व | य | मे | नो | म | या | न | त |
| त | न | या | म | नो | मे | य | व |
| वा | मा | मा | या | मे | द | भ्रा | भ |
| नी | नि | मा | न | य | या | द | नो |
| कं | नी | वा | त | व | भ | नो | म |

॥ ८१ ॥

इति अर्द्धभ्रमः। *

ऽवगन्तव्याः। तत्र दिङ्मात्रं यथा—"वारणागगभीरा सा साराभोगगणारवा। कारितारिवधा सेना नासेधा वरितारिका॥" इति। अत्र प्रथमतृतीयपादयोरानुलोम्येन वर्णावलीं गृहीत्वा तत्प्रातिलोम्यरूपौ द्वितीयचतुर्थपादौ गृह्येते, अतः पठितैर्वर्णाद्वर्णान्तरसञ्चारात् गतप्रत्यागताख्यं गतिचित्रम्। तथा श्लोकान्तरं यथा—"वाहनाऽजनि मानासे साराजावनमा ततः। मत्तसारगराजेभे भारीहावज्जनध्वनि॥" अत्र प्रातिलोम्येन पठनादपरः श्लोको भवति, यथा—"निध्वनज्जवहारीभा भेजे रागरसात्तमः। ततमानवजारासा सेना मानिजनाहवा॥" इत्यादि )॥ ८०॥

तत्रार्द्धभ्रममुदाहरति, मनोभवेति।—मनोभव! हे काम!

* इति अर्द्धभ्रमः अर्द्धभ्रमबन्धस्य उदाहरणं समाप्तम् इत्यर्थः।

सर्वतोभद्रबन्धोदाहरणम्।—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | मा | या | मा | मा | या | मा | सा |
| मा | रा | ना | या | या | ना | रा | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | या | रा | मा | मा | रा | या | मा |
| मा | या | रा | मा | मा | रा | या | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | रा | ना | या | या | ना | रा | मा |
| सा | मा | या | मा | मा | या | मा | सा |

॥ ८२ ॥

इति सर्वतोभद्रम्। *

नत! हे कामिजन-नमस्कृत!, तव अनीकं सैन्यरूपा, मानिनी इयं मानवती, उदयाय हृदये, विजयायेत्यर्थः, नवेति शेषः, न इति न, अपि तु उदयायेव। ननु विजयिनां सैन्यम् अपराधिदण्डकं, त्वन्तु नापराधी, तत् तव अत्र किमित्याह, भयादिति।—वयम् एनोमयाः पापिनः, अपराधिन इत्यर्थः, मा वा न वा, किन्तु भयात् अमेयामाः अमेयः अपरिमेयः, आमः रोगः येषां तथोक्ताः, यदि च वयमनपराधिनः तथाऽपि भृशं भयार्त्ता जाताः स्मेत्यर्थः। (अस्योदाहरणान्तरं यथा—"समत्वरतिदे नित्यं मदरामर्षनाशिनि। त्वराधिककसंनादे रमकत्वमकर्षति॥" इति)॥ ८१॥

सर्वतोभद्रमुदाहरति, सेति।—(अत्रायं पदविभागः,—

* इति सर्वतोभद्रं सर्वतो भद्रबन्धनिरूपणं समाप्तम्।

सा, अमायामामाया, मासा, मारानायायानारामा, याना-वारारावा, अनाया, माया, रामा, माराय, अमा इति ) अमायामामाया अमायस्य अकपटस्य, अमस्य अपरिमितस्य, आमस्य रोगस्य, कामपीड़ाया इत्यर्थः, आयः आगमनं यया तथोक्ता, तथा मारानायायानारामा मारः काम एव, आनायः जालं, बन्धनहेतुत्वात् इति भावः, तस्य आयानेन आगमनेन, आरामः प्रीतिः यस्याः तादृशी, सततकामव्यापारवती इत्यर्थः, किञ्च यानावारारावा यानं विदेशगमनम्, आवारयति निषेध-यतीति यानावारः विदेशगमनप्रतिषेधकः, आरावः वचनं यस्याः तथाभूता, मधुरभाषणेन मम विदेशगमनं वारितवतीत्यर्थः, किञ्च अनाया नास्ति नायः नयः, नीतिरित्यर्थः, ("नयो नाये" इत्यमरः ) यस्याः तादृशी, मम प्रवासाकरणे कार्य्य-हानिः भवेन्न वेति विवेकरहिता इत्यर्थः, तथा माया मां लक्ष्मीं यातीति तथोक्ता, अतिसुन्दरीत्यर्थः, सा स्मृत्युपस्थिता इत्यर्थः, रामा रमणी, मत्प्रेयसीति शेषः, मासा चन्द्रेण, ("छाया-मृगधरो राजा माः" इति चन्द्रपर्य्याये त्रिकाण्डशेषः ) अमा सह, ("अमा सह समीपे च" इत्यमरः ) माराय मम विनाशाय, तस्याः स्मरणं चन्द्रोदयश्च सम्प्रति मां भृशं व्याकुलय-तीत्यर्थः । ( कान्तामनुस्मरतो विरहिणो विलापवचनमिदम् । उदाहरणान्तरं यथा—"दे वा का नि नि का वा दे वा हि का स्व स्व का हि वा । का का रे भ भ रे का का नि स्व भ व्य व्य भ स्व नि ॥" इति । अत्र पङ्क्तिचतुष्टयेन लिखनम्, अनुलोम-विलोमाभ्यामुपर्य्यधःक्रमेण अधः-उपरिक्रमेण च पाठः । किञ्च पादार्द्धमात्रं लिखित्वा प्रतिलोमेन पठनेऽपि सम्पूर्ण एव पादो निष्पद्यते इति सर्वत आवृत्त्या श्लोकनिष्पत्तेरयं सर्वतोभद्रबन्ध इत्यवगन्तव्यम् ) ॥ ८२ ॥

स्वरस्थानवर्णनियमाः।—

य: स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ।
इष्टश्चतुःप्रभृत्येषु दर्श्यते सुकरः परः॥ ८३॥

प्राचीनैश्चित्रालङ्कारत्वेनाङ्गीकृतस्य स्वरादिनियमस्य बहुभेदस्यापि दुष्करं भेदचतुष्टयं प्रत्येकशो दर्शयन्नाह, य इति।—स्वरस्थानवर्णानां स्वरा अकारादयः, स्थानानि कण्ठादीनि, कण्ठादिवर्णा इत्यर्थः, तथा वर्णाः कण्ठ्यतालव्याद्यविशेषिता व्यञ्जनमात्राणीत्यर्थः तेषां, योऽसौ नियमः चतुर्भिरेव स्वरैः त्रिभिरेव द्वाभ्यामेव एकेनैव वा स्वरेण तथा तादृशैः स्थानैः वर्णैः वा काव्यं रचयितव्यमित्याद्यवधारणमित्यर्थः, प्राचीनैरलङ्कारतया उक्त इति शेषः, दुष्करेषु आयासकरणीयेषु, एषु मध्ये, इष्टः दुष्करत्वेन अभिमतः, चतुरादिस्वरस्थानवर्णनियम एव आयासकरतया दर्शयितुमुचित इत्यर्थः, चतुःप्रभृति चत्वारः चतुश्चतुःसङ्ख्याकाः स्वरस्थानवर्णाः, प्रभृतयः आदिभूता यत्र तद्यथा तथा, (क्रियाविशेषणमिदं, चतुरादित्वञ्च एकाद्यपेक्षया इति बोध्यम्) ततश्च चतुःस्वरादारभ्य एकस्वरादिपर्य्यन्तम् इत्यर्थः, नियमः इति शेषः, दर्श्यते, चतुस्त्रिद्व्येकरूपत्वात् चत्वारो भेदा दर्श्यन्ते इत्यर्थः, परः अन्यः पञ्चादिः, सुकरः अनायासनिष्पाद्यः, अतस्तदुदाहरणं यथायथं सुग्यं, दुष्करसाधनार्थमेव प्रयासः, ग्रन्थबाहुल्यभिया सुकराणां प्रदर्शनं प्रत्याख्यातमिति भावः। (अत्रेदमवधेयं यत्—षड्भेदेषु चित्रालङ्कारेषु मध्ये गतिचित्रं कियत् दर्शयित्वा स्वरचित्रं स्थानचित्रं वर्णचित्रमिति त्रिविधचित्रं तथा तेषाञ्च प्रत्येकशश्चतुर्भेदतया द्वादशविधत्वञ्च श्लोकेनानेन सूचितमिति)॥८३॥

तत्र स्वरनियमोदाहरणानि ।—

आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः ।
भोगो रोगो मोदो मोहो ध्येये धेच्छे देशे क्षेमे ॥८४॥
क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवर्युधि कुरवः स्वमरिकुलम् ॥८५॥

---

तत्र प्रथमं दीर्घचतुःस्वरमुदाहरति, आम्नायानामिति ।— आम्नायानां श्रुतीनाम्, अन्त्या चरमा, वाक् उपनिषदिति यावत्, गीतीः गानानि, ईतीः अतिवृष्ट्याद्युपप्लवरूपाः, चित्तक्षोभजनकत्वादिति भावः, तथा प्रीतीः पुत्रदारादिषु प्रणयान्, भीतीः भयङ्करीरित्यर्थः, पुत्रादीनां वियोगादिना दुःखजननादिति भावः, आह ब्रवीति, अतः कारणात् भोगः सङ्गीतादिविषयोपभोगः, रोगः व्याधिस्वरूपः, तथा मोदः वैषयिकानन्दः, मोहः अज्ञानमेव, इत्यप्याह इति शेषः, गीतीः ईतीः, प्रीतीः भीतीः केवलमेतदेव न आह, परं भोगः रोगः, मोदः मोहः इत्यप्याह तस्मात् एतत् सर्वं हेयमिति भावः; तर्हि किं कर्त्तव्यमित्याह—क्षेमे देशे पुण्यभूमौ, ध्येये परमात्मनि, धेच्छे धानमिति धाः धारणा, मनःसमाधानम् इत्यर्थः, इच्छा तत्राभिलाषश्च ते, विधेये इति शेषः। ( अत्र "धेच्छे" इत्यादौ "चेच्छेत् क्षेमे देशे" इति पाठान्तरे—ध्येये ध्यातव्ये, क्षेमे क्लेशरहिते, देशे विषये, मोक्षलक्षणे इत्यर्थः, इच्छेत् इच्छां कुर्य्यात् इति। "धेच्छे" इत्यत्र "ध्येच्छे" इति पाठे—ध्या ध्यानमित्यर्थः। अत्र आ ई ओ ए इति चतुर्भिरेव दीर्घस्वरैः पद्यबन्धः। विद्युन्माला वृत्तमिदम् ) ॥ ८४ ॥

ह्रस्वत्रिस्वरमुदाहरति, क्षितीति।—क्षितेः पृथिव्याः,

श्रीदीप्ती ह्रीकीर्त्ती धीनीती गीःप्रीती।
एधेते द्वे द्वे ते ये नेमे देवेशे ॥ ८६ ॥
सामायामामाया मासा मारानायायानारामा।
यानावारारावानाया माया रामा मारायामा ॥८७॥

इति स्वरनियमः।

---

भावः, विहितिः विधानं, ते एव व्रते नियमौ, क्षितिविजिति-स्थितिविहितिव्रते, तयोः रतिः अनुरागः येषां तथोक्ताः, तथा परा उत्तमा, गतिर्ज्ञानं, ("गतिः स्त्री मार्गदशयोः ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी) येषां तादृशाः, कुरवः कुरुवंशजा नृपाः, युधि युद्धे, स्वं निजम्, अरिकुलं शत्रु-समूहम्, उरु अत्यर्थं यथा तथा, ददृधुः प्रतिरुद्धवन्तः, तथा गुरु अतिशयं यथा तथा, दुधुवुः कम्पितवन्तः। (अत्र इ अ उ इति त्रिभिरेव ह्रस्वस्वरैः पद्यबन्धः। त्वरितगतिर्वृत्त-मिदम्) ॥ ८५ ॥

दीर्घद्विस्वरमुदाहरति, श्रीदीप्ती इति।—श्रीः लक्ष्मीः, दीप्तिः कान्तिश्च ते, ह्रीः लज्जा, कीर्त्तिः यशश्च ते, धीर्बुद्धिः, नीतिः नयश्च ते, गीः वाक्, वाग्मिता इति मधुरवाक् इति वा भावः, प्रीतिः सन्तोषश्च ते, द्वे द्वे एतत् द्वयं द्वयं, ते तव एधेते वर्द्धेते, ये इमे द्वे द्वे, देवेशे देवानामीश्वरे, इन्द्रेऽपि इत्यर्थः, न, विद्येते इति शेषः। (अत्र ई ए इति द्वाभ्यामेव दीर्घस्वराभ्यां पद्यबन्धः। वाणीवृत्तमिदम्। ह्रस्वद्विस्वरोदाहरणं यथा— "क्षितिस्थितिमितिक्षिप्तिविधिविन्निसिद्धिलिट्।। मम त्वञ्च! नमद्दच! हर! स्मरहर! स्मर॥" इति) ॥ ८६ ॥

दीर्घैकस्वरमुदाहरति, सेति।—पद्यमिदं सर्वतोभद्रोदा-

---

इति स्वरनियमः स्वरव्यवस्था प्रदर्शिता इत्यर्थः।

स्थाननियमोदाहरणानि।—

नयनानन्दजनने नक्षत्रगणशालिनि।
अघने गगने दृष्टिरङ्गने ! दीयतां सकृत्॥८८॥

हरणत्वेन पूर्वं लिखितं व्याख्यातञ्च। (अत्र आ इत्यनेनैकस्वरेण पद्यबन्धः। उदाहरणान्तरं तथा—"वेधैरैनेरैशैरैन्द्रैरैजेरैलैर्जैनैः सैडैः। मैवैनैंकैर्धैर्य्यैर्वैं रैदैः स्वैः स्वैरैर्दैवैस्तैस्तैः॥" इति। ऋस्वैकस्वरं यथा—"उरुगुं द्युगुरुं युत्सु चुक्रुशुस्तुष्टुवुः पुरु। लुलुभुः पुपुषुर्मुत्सु मुमुहुर्नु मुहुर्मुहुः॥" इति)। इत्थं स्वराणां चत्वारो भेदाः दर्शिता इति बोध्यम्॥८७॥

अथ स्थाननियमे दर्शयितव्ये प्रथमं निरोष्ठ्यं चतुःस्थानं दर्शयति, नयनेति।—नयनानन्दजनने ! हे नेत्रोत्सवदायिनि ! अङ्गने ! सुन्दरि !, अघने मेघरहिते, अत एव नक्षत्रगणशालिनि तारानिकरभूषिते, गगने आकाशे, सकृत् एकवारं, दृष्टिः नेत्रं, दीयतां निक्षिप्यताम्। (नयनानन्दजनने इति गगने इत्यस्यापि विशेषणं सङ्गच्छते। मानिनीं सान्त्वयतो नायकस्य तादृशगगने दृष्टिपातोक्तिः कामोद्दीपकत्वात् तादृशगगनस्य अनायासेनैव मानभङ्गः स्यादिति तात्पर्य्यम्। अत्र दन्त्यतालव्यकण्ठ्यमूर्द्धन्यैरेव वर्णैः पद्यनिबन्धनात् चतुःस्थानत्वमवगन्तव्यम्। मूर्द्धन्यविरहितं चतुःस्थानं यथा—"शलभा इव धावन्तः सायकास्तस्य भूभुजः। निपेतुः सायकच्छिन्नास्तेन संयुगसीमनि॥" इति। निष्कण्ठ्यं यथा—भूरिभूतिं पृथुप्रीतिमुरुमूर्त्तिं पुरुस्थितिम्। विरिञ्चिं सूचिरुचिधीः ! शुचिभिर्नुतिभिर्धिनु॥" इति। निस्तालव्यं यथा—"स्फुरत्कुण्डलरत्नौघमधवद्धनुकर्बुरः। मेघनादोऽथ सङ्ग्रामे प्रावृट्कालवदाबभौ॥" इति। निर्दन्त्यं यथा—"पापापहारी रणकर्मशौण्ड...

अलिनीलालकलतं कं न हन्ति ? घनस्तनि ! ।
आननं नलिनच्छाय-नयनं शशिकान्ति ते ॥८९॥
अनङ्गलङ्घनालग्न-नानातङ्का सदङ्गना ।
सदानघ ! सदानन्द-नताङ्गासङ्गसङ्गतः ॥९०॥

पाणिः। भूयाच्छ्रियापश्रमयेच्छमाणो मोक्षाय मुख्यामरपूग-पूज्यः ॥" इति ) ॥ ८८ ॥

त्रिस्थानं निरौष्ठ्यमूर्द्धन्यं दर्शयति, अलीति।—घनस्तनि ! हे निविड़पयोधरे !, अलय इव भ्रमरा इव, नीलाः कृष्णवर्णाः, अलकलताः लतावद्विन्यस्ताश्चूर्णकुन्तला यत्र तत्, नलिनच्छाये पद्मसदृशे, नयने यत्र तादृशं, तथा शशिनः कान्तिरिव कान्तिर्यस्य तथाभूतं, ते तव, आननं वदनं, कं जनं, न हन्ति ? नाकुलयति ?, अपि तु सर्वमेवेत्यर्थः। ( अत्र कण्ठ्यदन्त्यतालव्यैरेव वर्णैः पद्यबन्धः इति त्रीणि स्थानानि मूर्द्धन्यौष्ठ्यवर्णरहितानीति ज्ञेयम्। एवं निरौष्ठ्यदन्त्यं त्रिस्थानं यथा—"जीयाज्जगज्ज्येष्ठगरिष्ठचारुचक्राचिषा कृष्णकड़ार-कायः। हरिर्हिरण्याक्षशरीरहारी खगेशगः श्रीश्रयणीय-शय्यः॥" इति ) ॥ ८९ ॥

दन्त्यकण्ठ्यैः द्विस्थानचित्रमुदाहरति, अनङ्गेति।—सदानघ ! हे सदा अनघ ! दुःखविवर्जित !, सर्वावस्थास्वेव व्यथा-रहित ! इत्यर्थः, निश्चिन्त ! इति भावः, ( "अघन्तु व्यसने दुःखे दुरिते च नपुंसकम्" इति मेदिनी ) तथा हे सदानन्दनताङ्ग ! सदा आनन्देन गीतवादित्राद्यामोदेन, नतानि वशीकृतानि, व्यापृतानि इति यावत्, अङ्गानि अवयवा यस्य तत्सम्बुद्धौ, सदङ्गना साध्वी नारी, अपीति शेषः, असङ्गसङ्गतः नास्ति

अगा गाङ्गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्ग ! खगाङ्कागकङ्कागखगकाकक ! ॥९१॥

इति स्थाननियमः । *

सङ्गो येषां ते असङ्गाः दुर्जनाः, तेषां सङ्गः सम्पर्कः तस्मात् दुर्जनसम्पर्कात् इत्यर्थः, अनङ्गलङ्घनया कामाक्रमणेन, लग्नाः संसृष्टाः, जाताः इत्यर्थः, नाना विविधाः, आतङ्काः सन्तापाः शङ्का वा ("आतङ्को रोगसन्ताप-शङ्कासु मुरजध्वनौ" इति मेदिनी ) यस्यां तादृशी भवति, भर्तृविरहेण सती अपि दुर्जना-सङ्गेन भ्रश्यतीति भावः । ( तस्मात् भार्यां प्रतिचिन्तय केवलं वृथाऽऽमोदेनालमिति सखायं प्रति कस्यचिदुक्तिः । अत्र दन्त्यकण्ठैरेव पद्यरचना इति त्रिस्थानत्वम् । "नताङ्गा-सङ्गसङ्गतः" इत्यत्र "नताङ्गीसङ्गसङ्गत !" इत्यपि पाठः । तत्र सदानन्द ! हे सदैव प्रियालाभेनानन्दयुक्त ! इति पृथक् सम्बोधनम् ; तथा हे नताङ्ग्याः कस्याश्चिदन्यस्या नायिकायाः सङ्गे सङ्गत ! इति सम्बोधनान्तरं, तव सदङ्गना कामाक्रमणया नानारूपतया वर्त्तते, अतस्तामनुकम्पस्व इति सोपालम्भप्रार्थन-मित्यर्थः । पाठोऽयन्तु न मनोरमः, ईकारस्य तालव्यत्वात् केवलं दन्त्यकण्ठत्वहानिरिति ) ॥ ९० ॥

कण्ठ्यवर्णैरेकस्थानचित्रमुदाहरति, अगा इति ।—( पद-विभागो यथा—अगाः, गा, गाङ्गकाकाकगाहक, अघकका-कहा, अहाहाङ्ग, खगाङ्कागकङ्क, अगखगकाकक इति ) हे गाङ्गकाकाकगाहक ! गङ्गाया इदं गाङ्गं, यत् कं जलं, तस्य आकाकः सशब्दवक्रगतिः, ( आङ्पूर्वात् "कै शब्दे" इत्यस्मात्

* इति स्थाननियमः स्थानानां कण्ठादिस्थानोच्चारितवर्णानामित्यर्थः, नियमः

भावे क्विपि आकाः, "अक कुटिलगतौ" इत्यस्मात् भावे डप्रत्यये अकः ) आका सह अकः आकाकः तरङ्ग इत्यर्थः, तं गाहते इति तथोक्तः, तत्सम्बुद्धौ, हे गङ्गाजलतरङ्गावगाहिन् ! इत्यर्थः, तथा हे अहाहाङ्ग ! हाहां दीनतासूचकध्वनिविशेषम्, अङ्गति गच्छतीति हाहाङ्गः, न हाहाङ्गः अहाहाङ्गः तत्सम्बुद्धौ, हे सदानन्द ! इत्यर्थः, किञ्च हे खगाङ्गागकङ्क ! खं गगनं गच्छन्तीति खगाः सूर्य्यादयः, ते अङ्काश्चिह्नानि यस्य स खगाङ्कः, स च असौ अगः पर्वतश्चेति खगाङ्कागः सुमेरुरित्यर्थः, तं कङ्कते गच्छतीति तथोक्तः, ( "ककि गतौ" इत्यस्मात् अण्प्रत्ययः ) तत्सम्बुद्धौ, पुण्यबलेन सुमेरुपर्वतपर्य्यन्तगमनार्ह ! इत्यर्थः, पुनश्च हे अगखगकाकक ! अगति गच्छति इति अगं नश्वर-मित्यर्थः, खानि इन्द्रियाणि गच्छतीति खगम् इन्द्रियविषयं, ततश्च अगं खगञ्च यत् कं सुखं, तदर्थं न काकते न इच्छति, न अभिलपतीत्यर्थः इति अगखगकाककः तत्सम्बुद्धौ, ( "कक् गर्वच्चापलौल्येषु" इत्यस्य रूपम ) इन्द्रियसुखेषु अनासक्त इत्यर्थः. ( "अहाहाङ्गखगाङ्कागकङ्कागखगकाकक !" इति समस्तपाठे तु—हानं हाः, न हाः अहाः, तां जिहीते प्राप्नोतीति अहाहं, तादृशमङ्गं यस्य सः अक्षयशरीर इत्यर्थः, यः खगः गरुडः सूर्य्यो वा, स अङ्कः चिह्नभूतो यस्य तादृशः, अगः पर्वतः, सुमेरुरित्यर्थः, तत्र ये कङ्काः तदाख्याः, अगखगाः वृक्षवासिनः पक्षिणः, तेऽपि काककाः गमनस्पृहया-लवो यस्य तत्सम्बुद्धौ पतत्रिभिरप्यभिनन्दितगमन इत्यर्थः ) त्वम् अघककाकहा अघकानि कुत्सितानि पापानि एव, काकाः वायसाः, अनर्थहेतुत्वादिति भावः, तान् हन्तीति तथोक्तः; अपापः सन्, गां पृथिवीम, अगाः गतवानसि, प्रदक्षिणीचकर्थे-त्यर्थः; यद्वा—गां स्वर्गं, ( "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणि-

वर्णनियमोदाहरणानि ।—

रे रे रोरुरुरोरुगागोगोऽगाङ्गगोऽगगुः ।
किं केकाकाकुकः काको मा मा मामम मामम ! ॥९२॥

भूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः ) अगाः याया इत्यर्थः । ( आशंसायां भूतप्रत्ययः । कस्यचिद्देशपर्य्याटकस्य स्तुतिरियम । अत्र क्रमठैरेव वर्णैः पद्यरचना ) ॥ ९१ ॥

अथ चित्रालङ्कारभेदे वर्णनियमे दर्शयितव्ये स्वरस्य पृथक् निर्देशात् वर्णपदेन व्यञ्जनरूपवर्णस्यैव ग्रहणमिति व्यञ्जनात्मकं चतुर्वर्णमुदाहरति. रे रे इति ।—(रे रे इति नीचसम्बोधनसूचकमव्ययम ) रे रे मामम ! मायां लक्ष्मीं, मम ( इत्यव्ययं ) ममता इत्यर्थः, यस्य सः तत्सम्बुद्धौ, कृपण इत्यर्थः, ( "मायाम् अमम अममत्वं यस्य सः लक्ष्मीशून्यः" इति केचित् ) मां मा मा न न. ( इति निषेधवाचकं, सम्भ्रमाद्यतिरेके द्विरुक्तिरिति ) अम गच्छ, मत्समीपं मा गच्छेत्यर्थः, त्वमिति शेषः, यतः काकः वायसः, किं केकाकाकुकः केका मयूरध्वनिः, तस्याः काकुः मदजनितविकारः, तं कायति शब्दायते, शब्देन प्रकाशयतीत्यर्थः, ( "कै शब्दे" इत्यस्मात् डप्रत्ययः) तादृशः, भवति ? इति शेषः, अपि तु नैवेत्यर्थः, काको यथा मयूरकेकाभिलाषे व्यर्थमनोरथ एव भवति तथा मत्प्राप्त्यभिलाषे त्वमपीति भावः ; किञ्च रोरुरुरोरुगागोगः रोरूयते भयेन पुनः पुनरतिशयेन वा रौतीति रोरुः, ( रौतेर्यङ्लुगन्तात् क्विप् ) स च असौ रुरुर्मृगविशेषश्चेति रोरुरुरुः, तस्य उरसः वक्षसः, या रुक् शरवेधजनिता व्यथा, सा एव आगः अपराधः, पापमित्यर्थः, तत् गच्छति प्राप्नोतीति तथाभूतः, निरीहजीवहिंसकत्वात् पापीयानित्यर्थः, नीचकार्य्यकारितया त्वं न मे योग्य इति

देवानां नन्दनो देवो नोदनो वेदनिन्दिनः।
दिवं दुदाव नादेन दाने दानवनन्दिनः॥ ९३॥

भावः; पुनश्च त्वम् अगाङ्गगः अगस्य पर्वतस्य, अङ्गम् एकदेशं, गच्छति अधिवसतीत्यर्थः, तथोक्तः पार्वत्य इत्यर्थः, निकृष्टदेशवासित्वाच्च त्वं न मे योग्य इति भावः; तथा अगगुः न गच्छति न सङ्गच्छते इति अगा असम्बद्धा इत्यर्थः, गौः वाक् ("स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः) यस्य तादृशः, असम्बद्धभाषीत्यर्थः, अतोऽपि त्वं न मे योग्य इति भावः। (वाराङ्गनामभिलषन्तं कञ्चित् व्याधं प्रति तस्याः प्रत्याख्यानोक्तिरियम्। अत्र "र-ग-क-स" इति चतुर्भिरेव व्यञ्जनवर्णैः पद्यबन्धः। वर्णपदेन च पद्यपूरकवर्णानां ग्रहणं, तेन अङ्गेति ङकारयोगेऽपि न चातुर्वर्ण्यव्याघातः, तस्य पद्यपूरकत्वाभावात्। ङकारयोगादिदमुदाहरणं केषाञ्चिदशुद्धत्वेनाभिमतं चेत् शुद्धोदाहरणं यथा—"जजौजोजाजिजिज्जाजी तं ततोऽतितताततुत्। भाभोऽभीभाभिभूभाभूरारारिररिरी ररः॥" इति)॥ ९२॥

वर्णचित्रेषु त्रिव्यञ्जनमुदाहरति, देवानामिति।—देवानाम् इन्द्रादीनां, नन्दनो दैत्यदमनात् प्रीतिजननः, तथा वेदनिन्दिनो वेदनिन्दकस्य, नास्तिकजनस्य इत्यर्थः, ("वेदनिन्दिनः" इत्यत्र "वेदनिन्दिनाम्" इति पाठान्तरम्) नोदनः निरासकः, देवः नृसिंहरूपो भगवान्, दानवान् नन्दयति त्रिभुवनविजयेन सन्तोषयतीति तथोक्तस्य दानवनन्दिनः हिरण्यकशिपोः, दाने वक्षोविदारणे, ("दो अवखण्डने" इत्यस्मात् अनट्प्रत्ययः) नादेन सिंहनादेन, दिवम् अन्तरीक्षं,

सूरिः सुरासुरासारि-सारः सारससारसाः ।
ससार सरसीः सीरी ससूरुः स सुरारसी ॥९४ ॥

नूनं नुन्नानि नानेन नाननेनाननानि नः ।
नानेना ननु नाऽनूनेनैनेनानानिनो निनीः ॥९५॥

इति वर्णनियमः । *

द्रुदाव तापितवान् । (अत्र "द-व-न" इति त्रिभिरेव व्यञ्जनैः पद्यबन्धः ) ॥ ९३ ॥

द्विव्यञ्जनात्मकं वर्णचित्रमुदाहरति, सूरिरिति ।—सूरिः विद्वान्, तथा सुरासुरासारिसारः सुरान् असुरांश्च आसरति आस्कन्दति इति तथोक्तः, सारो बलं यस्य तादृशः, किञ्च ससूरुः सु शोभनौ, ऊरू सूरू, ताभ्यां सहितः वामोरुरित्यर्थः, पुनश्च सुरारसी सुरायां मधुपाने, रसः आस्वादः, अनुराग इत्यर्थः, विद्यते अस्येति सुरारसी, स प्रसिद्धः, सीरी सीरं लाङ्गलमस्यास्तीति तथोक्तः बलदेवः, सारससारसाः आरसेन उच्चः शब्देन सह वर्त्तमानाः सारसाः उच्चैः शब्दं कुर्वाणाः, सरसि भवाः सारसाः पक्षिविशेषाः यासु ताः, सरसीः तड़ागान्, ससार जलक्रीड़ार्थं गतवान् । (बलदेवस्य जलक्रीड़ा-प्रकरणोक्तं पद्यमिदम् । अत्र द्वाभ्यामेव "स-र" इति वर्णाभ्यां पद्यबन्धः । यथा वा—"भूरिभिर्भारिभिर्भीराभूभारैरभिरेभिरे । भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥" इति ) ॥ ९४ ॥

चित्रालङ्कारभेदमेकव्यञ्जनमुदाहरति, नूनमिति ।—अनूनेन प्रबलेन, अनेन पुरतो दृश्यमानेनेत्यर्थः, एनेन एतेन, [ "द्वितीयाटौस्स्वेनः" ( २।४।३४ पा० ) इति इदमः

* इति वर्णनियमः वर्णानां चतुस्त्र्यादिव्यञ्जनानां, नियमः सन्निवेशविधिः, प्रदर्शित इति शेषः ।

एतदो वा एनादेशः ] रिपुणा इति भावः, यद्वा—इनः प्रभुः, न इनः एनः अप्रभुः, तेन प्रभुप्रतिपक्षेण, शत्रुणा इत्यर्थः, आननेन मुखेनैव करणेन, भ्रूकुटिमतेति भावः, नः अस्माकम्, अननानि प्राणाः, नूनं निश्चितं, नुन्नानि अपनीतानि, न इति न, अपि तु नुन्नान्येव, अस्य भ्रूभङ्गिं दृष्ट्वैव वयं मृतप्रायाः, का कथा सम्प्रहारस्य इति भावः; परन्तु ननु भोः!, इनः प्रभुः, ना पुरुषः, अस्माकं प्रभुरित्यर्थः, अनान् प्राणान्, निनीः रक्षितुमिच्छुः सन्नित्यर्थः, ( नेतुमिच्छतीति नीधातोः सनन्तात् क्विपि प्रथमैकवचनम् ) न अनेनाः न अपापः, भवति इति शेषः, शत्रुविजितस्य युद्धे मरणं जीवितादपि वरम् अतोऽनेन यथाशक्ति युद्धं कर्त्तव्यमिति भावः। ( रिपुपराजितस्य कस्यचित् नृपस्य सैन्यानां दैन्योक्तिरियम्। अत्र नकाररूपवर्णेनैव पद्यबन्धः। एवं क्रमस्थसर्वव्यञ्जनवर्णैरपि बन्धे वैचित्र्यातिशयात् तदप्यत्र केचित् अङ्गीकुर्वन्ति; तदुदाहरणं यथा—"कः खगौघाङचिच्छौजा झाञ्ज्ञोऽटौठीडडंढणः। तथोदधीन् पफर्बाभीर्मयोऽरिल्वाशिषां सहः॥" इति। तथा म्यरस्तजभनगलान्ता ये दशवर्णाश्छन्दोलक्षणसिद्धये निर्णीताः, तैरेव बद्धं छन्दोऽक्षरव्यञ्जनरूपमप्युक्तं, यथा—"सरत्सुराऽरातिभयाय जाग्रतो जगत्यलं स्तोतृजनस्य जायताम्। स्मितं स्मरारेर्गिरिजास्यगौरजे समेतनेत्रत्रितयस्य भूतये॥" इति। तथा "सरिगामपधानिश्च वर्णाः सप्त स्वरादयः। षड्जादिकृतसङ्केता दृष्टा गान्धर्ववेदिभिः॥" इत्युक्तलक्षणमात्रव्यञ्जनमयं षड्जादिव्यञ्जनं यथा—"सा ममारिधमनीनिधानिनी सामधामधनिधामसाधिनी। मानिनी सगरिमाऽपपापपा सापगा समसमागमाऽसमा॥" इति। एवमन्येऽपि भेदा ज्ञेयाः ) ॥ ८५ ॥

प्रहेलिका।—

इति दुष्करमार्गेऽपि कश्चिदादर्शितः क्रमः।
प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः॥ ९६॥

प्रहेलिकोपयोगिता।—

क्रीड़ागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः॥९७॥

चित्रालङ्कारस्य दुष्करतया ग्रन्थबाहुल्यतया च कियन्तं दर्शयित्वा तमुपसंहरन् प्रहेलिकां निर्दिशति, इतीति।—इति उक्तप्रकारेण, दुष्करमार्गेऽपि चतुस्त्रिद्व्येकरूपत्वात् कृच्छ्रसाध्यनियमेऽपि, कश्चित् अल्पमात्र इत्यर्थः, क्रमः नियमः, आदर्शितः उदाहृतः, (एतावता अन्येऽपि दुष्कराश्चित्रालङ्काराः पद्मबन्धादयः प्राचीनोक्ताः सन्ति, ग्रन्थविस्तारभयेन ते नात्रोक्ताः, ग्रन्थान्तरतः ज्ञातव्या इति ज्ञापितम्) पुनः इदानीं, प्रहेलिकायाः प्रकाराणां विशेषाणां, गतिः नियमः, उद्दिश्यते निरूप्यते। (तल्लक्षणन्तु सामान्यत उक्तम्; यथा—"प्रहेलिका तु सा ज्ञेया वचः संवृतिकारि यत्" इति। ततश्च स्वाभिलषितार्थस्य कथञ्चित् संवरणात्मकवचनविन्यासः प्रहेलिकेति लक्षणमवगन्तव्यम्)॥ ९६॥

"रसस्य परिपन्थित्वात् नालङ्कारः प्रहेलिका" इत्युक्त्या यदि च प्रहेलिकाया यमकादिवत् शब्दार्थोपस्कारकत्वेन रसानुगुण्याभावात् नालङ्कारत्वं, तथाऽपि अस्या उपयोगित्वमाह, क्रीड़ेति।—क्रीड़ागोष्ठीषु विहारसभासु, ये विनोदाः प्रमोदाः, यद्वा—क्रीड़ा परस्परवाक्चातुर्य्यरूपकौतुकं, गोष्ठी विदग्धानामासनबन्धः, विनोदः काव्यसमालोचनेन कालयापनं तेषु, तथा तज्ज्ञैः प्रहेलिकाभिज्ञैः सह, आकीर्णे जनसङ्कुले देशे,

समागता प्रहेलिका।—

**आहुः समागतां नाम गूढार्थां पदसन्धिना।**

वञ्चिता प्रहेलिका।—

**वञ्चिताऽन्यत्र रूढेन यत्र शब्देन वञ्चना॥ ९८॥**

व्युत्क्रान्ता प्रहेलिका।—

**व्युत्क्रान्ताऽतिव्यवहित-प्रयोगान्मोहकारिणी।**

प्रमुषिता प्रहेलिका।—

**सा स्यात् प्रमुषिता यस्यां दुर्बोधार्था पदावली॥ ९९॥**

यत्र मन्त्रणं गुप्तभाषणं, परस्परसंलापः इत्यर्थः, तस्मिन्, तथा परस्य बोद्धव्यातिरिक्तस्य जनस्य, व्यामोहने विमोहरूपेण अर्थाबोधवशेन मनसः व्याकुलतायाम्, अथवा अवबोधनिराकरणे विषये, प्रहेलिकाः सोपयोगाः सप्रयोजनाः, उपकारिण्य इत्यर्थः। ( तस्मात् अस्या क्रीडागोष्ठ्याद्युपयोगित्वे अलङ्कारत्वम् अन्यत्र दोषावहत्वमिति बोध्यम् )॥ ९७॥

अस्याः सलक्षणनामानि क्रमेणाह, आहुरिति।—पदसन्धिना पदयोः सुप्तिङन्तादिरूपयोः, सन्धिना सान्निध्यजनितसन्धिकार्य्येण, गूढः दुर्बोधः, अर्थो यस्यास्तादृशीं, प्रहेलिकां समागतां नाम आहुः। वञ्चितेति।—अन्यत्र विवक्षितार्थभिन्ने, यत्र यस्मिन् स्थले, रूढेन प्रसिद्धेन, शब्देन या वञ्चना प्रतारणा, सा वञ्चिता वञ्चिताख्या प्रहेलिकेत्यर्थः॥ ९८॥

व्युत्क्रान्तेति।—अतिव्यवहितानाम् अतिशयेन दूरवर्त्तिपदानां, प्रयोगात् विन्यासात्, मोहकारिणी अर्थावबोधवैधुर्य्यविधायिनी, प्रहेलिकेति शेषः, व्युत्क्रान्ता नाम। सेति।—यस्याञ्च प्रहेलिकायां, पदावली पदसमूहः, दुर्बोधः अप्रसिद्धपदप्रयोगात् दुर्ग्राह्यः, अर्थो यस्यास्तादृशी, सा प्रहेलिका,

समानरूपा प्रहेलिका।—

समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः।

परुषा प्रहेलिका।—

परुषा लक्षणास्तित्व-मात्रव्युत्पादितश्रुतिः॥१००॥

सङ्ख्याता प्रहेलिका।—

सङ्ख्याता नाम सङ्ख्यानं यत्र व्यामोहकारणम्।

प्रकल्पिता प्रहेलिका।—

अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता॥१०१॥

---

प्रमुषिता नाम स्यात्, प्रकर्षेण बुद्धेर्मुषितत्वादित्यर्थः। (वञ्चितायाम् एकं पदं दुर्बोधार्थमिह तु पदानि, किञ्च वञ्चितायां नानार्थस्य पदस्य अप्रसिद्धार्थे प्रयोगः इह तु एकार्थानामपि पदानामित्यतोऽपि अनयोर्भेदः)॥ ९९॥

समानरूपेति।—गौणार्थेन लाक्षणिकार्थेन, आरोपितैः उपचरितैः, पदैः ग्रथिता विरचिता, प्रहेलिकेति शेषः, समानरूपा नाम, शक्यार्थलक्ष्यार्थयोः द्वयोः सादृश्यनिबन्धनत्वादिति भावः। परुषेति।—लक्षणस्य सूत्रस्य, अस्तित्वमात्रेण केवलं लक्षणमस्तीति हेतोः, न तु शक्ताशक्तविवेचनया इति भावः, व्युत्पादिता श्रुतिः प्रसिद्धिः शब्दः वा यत्र तादृशी, प्रहेलिका परुषा नाम, अशक्तिनिबन्धनत्वेन श्रोतयोः पारुष्यावबोधादिति भावः॥१००॥

सङ्ख्यातेति।—यत्र सङ्ख्यानं वर्णगणना सङ्ख्यावाचकशब्दः वा, व्यामोहस्य विशिषेण अर्थावबोधवैधुर्य्यस्य, कारणं हेतुः, सा सङ्ख्याता नाम प्रहेलिका, सङ्ख्याघटितत्वादिति भावः। अन्यथेति।—यत्र वाक्यार्थः अन्यथा भासते आपाततः प्रतीयमानादर्थात् अन्यरूपः प्रतीयते, सा प्रहेलिका, प्रकल्पिता नाम, अर्थान्तरप्रकल्पनादिति भावः॥ १०१॥

नामान्तरिता प्रहेलिका ।—

**सा नामान्तरिता यस्यां नाम्नि नानार्थकल्पना ।**

निभृता प्रहेलिका ।—

**निभृता निभृतान्यार्था तुल्यधर्मस्पृशा गिरा॥१०२॥**

समानशब्दा प्रहेलिका ।—

**समानशब्दोपन्यस्त-शब्दपर्य्यायसाधिता ।**

सम्मूढ़ा प्रहेलिका ।—

**सम्मूढ़ा नाम या साचान्निर्दिष्टार्थाऽपि मूढ़ये ॥१०३॥**

सेति ।—यस्यां प्रहेलिकायां, नाम्नि संज्ञाविषये, नानार्थकल्पना नानार्थानां शब्दस्य विविधार्थकत्वात् बहूनामर्थानां, कल्पना विकल्पः, जायते इति शेषः, सा नामान्तरिता नाम, नामान्तरेणान्तरितार्थकत्वादिति भावः । निभृतेति ।—यस्याञ्च तुल्यधर्मस्पृशा प्रस्तुताप्रस्तुतयोः साधारणधर्मं स्पृशन्त्या, गिरा वाचा, निभृतः गोपितः, अन्यः अपर, प्रकृत इत्यर्थः, अर्थो यत्र सा निभृता नाम । ( अस्याश्च साधारणधर्मवत्तेन विषयस्य सूचनात् समासोक्तिमूलता बोध्यति ) ॥ १०२ ॥

समानशब्देति ।—उपन्यस्तेन उक्तेन, शब्दानां प्रकृतार्थावबोधकपदानां, पर्य्यायेण नामान्तरेण, साधिता विरचिता, प्रहेलिका समानशब्दा नाम । (अत्र च शब्दपर्य्यायत्वं लक्षणया एकार्थबोधकत्वं, न त्वभिधया एकार्थशक्यत्वं, तथात्वे अर्थस्य सवरणीयत्वाभावेन प्रकृतानुपयोगित्वात् प्रहेलिकैव न भवेदिति ध्येयम् ) । सम्मूढ़ेति ।—या वाक्, साचात् अभिधायकशब्देन, निर्दिष्टः निरूपितः, अर्थो यत्र तादृशो अपि, वाचकशब्देन कथितार्थाऽपि इत्यर्थः, मूढ़ये आपाततो व्यामोहाय, भवतीति शेषः, सा सम्मूढ़ा नाम ॥ १०३ ॥

परिहारिका प्रहेलिका।—

योगमालात्मिका नाम या स्यात् सा परिहारिका।

एकच्छन्ना प्रहेलिका।—

एकच्छन्नाऽऽश्रितं व्यक्तं यस्यामाश्रयगोपनम् ॥१०४॥

उभयच्छन्ना प्रहेलिका।—

सा भवेदुभयच्छन्ना यस्यामुभयगोपनम्।

सङ्कीर्णा प्रहेलिका।—

सङ्कीर्णा नाम सा यस्यां नानालक्षणसङ्करः ॥१०५॥

योगमालेति।—या प्रहेलिका, योगानां यौगिकपदानां, माला समूहः, आत्मा स्वरूपं यस्यां तादृशी, सा यौगिकपदमालया रूढपदप्रतिपाद्यानामेकैकानामर्थानां बोधिका सा प्रहेलिकेत्यर्थः, परिहारिका नाम स्यात्। (परिहरति झटित्यर्थबोधं वारयतीति व्युत्पत्त्या तथा व्यपदेशः, शक्तिलभ्यार्थात् यौगिकार्थस्य नानाकष्टकल्पनामूलत्वेन सहसाऽवबोधविरहादिति भावः)। एकच्छन्नेति।—यस्याम् आश्रितम् आधेयं, व्यक्तं स्फुटम्, आश्रयस्य आधारस्य तु, गोपनं, सा एकच्छन्ना नाम एकः आश्रयः, छन्नः निगूढः यत्र सा इति व्युत्पत्त्या तदाख्या ॥ १०४ ॥

सेति।—यस्याम् उभयस्य आधेयस्य आधारस्य च, गोपनं सा उभयच्छन्ना नाम, भवेत्, आधेयाधारयोः उभयोरपि निभृतत्वात् इति निष्कर्षः। सङ्कीर्णेति।—यस्यां नानालक्षणानाम् उक्तानां प्रहेलिकाभेदानां मध्ये द्वित्रादिलक्षणानां, सङ्करः साहित्येनावस्थितिः, सा सङ्कीर्णा नाम ॥ १०५ ॥

प्रहेलिकानां सञ्ज्ञा।—

**एताः षोडश निर्दिष्टाः पूर्वाचार्य्यैः प्रहेलिकाः।**

दुष्टप्रहेलिकानां सञ्ज्ञा।—

**दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश॥ १०६॥**

एता इति।—एताः समागताप्रभृतयः, षोड़श प्रहेलिकाः पूर्वाचार्य्यैः निर्दिष्टाः अदुष्टत्वेन कथिता इत्यर्थः। दुष्टेति।—तैः पूर्वाचार्य्यैरेव, अन्याः अपराः, चतुर्दश दुष्टाः प्रहेलिकाश्च च्युतदत्ताक्षरादिरूपाः अपि इत्यर्थः, अधीताः पठिताः, सदोषत्वेन कीर्त्तिता इत्यर्थः। (तत्र प्रथमं च्युताक्षरादीनां षड्भेदा अन्यैरुक्ताः यथा—"प्रहेलिका सकृत् प्रश्नः साऽपि षोढ़ा च्युताक्षरा। दत्ताक्षराभयं मुष्टिर्विन्दुमत्यर्थवत्यपि॥" इति। तासु च्युताक्षरा यथा—"पयोधरभराक्रान्ता सन्नमन्ती पदे पदे। पदमेकं न का याति यदि हारेण वर्जिता॥" अत्र विहङ्गिका काहारेण वर्जिता न यातीति वक्तव्ये हारेण वर्जिता इत्युक्तत्वात् का इत्यक्षरस्य च्युतिरिति च्युताक्षरा। दत्ताक्षरा यथा—"कान्तयाऽनुगतः कोऽयं पीनस्कन्धो मदोद्धतः। मृगाणां पृष्ठतो याति शंवरो रूढ़यौवनः?"॥ अत्र शवर इति वक्तव्ये शंवर इत्युक्तेरनुस्वारो दत्त इति दत्ताक्षरा। च्युतदत्ताक्षरा यथा—"विदग्धः सरसो रागी नितम्बोपरि संस्थितः। तन्वङ्ग्यालिङ्गितः कण्ठे कलं कूजति को विटः?"॥ अत्र विट इत्यस्मिन् पदे विकारे च्युते घ-कारे च दत्ते घटः कूजति इत्यायातमिति च्युतदत्ताक्षरा। अक्षरमुष्टिर्यथा—"अतिः अतिः अस्म अलं प्रोच्य रच्य जच्य फच्य। मेला मेला मेलं मेलं फस फस फस फस॥" इयञ्च अक्षराणां मुष्टिरूपत्वात् अक्षरमुष्टिका। अत्र पादशश्चतुष्पङ्क्तौ लिखितायां चतुर्भिर्मुरजबन्धैः श्लोकः उपतिष्ठति, यथा—"अद्य

दुष्टप्रहेलिकानां वर्जनं लक्षणञ्च ।—

दोषानपरिसङ्ख्येयान् मन्यमाना वयं पुनः ।
साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः॥१०७॥

मे सफला प्रीतिरद्य मे सफला रतिः। अद्य मे सफलं जन्म अद्य मे सफलं फलम् ॥" इति। विन्दुमती यथा—"तवाववादः प्रत्यब्धि पताकाः प्रतिमङ्गरम्। फलं प्रत्यङ्गुतोपायं यशांसि न नु म क्वचित् ॥" इत्यनेन श्लोकेनोक्तार्थस्य यथास्थितस्वरानुस्वारविसर्जनीयसंयोगस्य श्लोकान्तरस्य विन्दुभिरेव सूचनात्क्रम इति विन्दुमती। यथा—

०ु००।०ु००।०।०।०॑ॅु०॑ ०॑०ु०॑ ००ः।
०।००॑०।००॑ ि०ि०ः००॑ ० ०० ०ो०॑ ०ः॥

एतैर्विन्दुभिरयं श्लोकः,—"उदधावुदधावाज्ञा संयुगे संयुगे जयः। साहसे साहसे सिद्धिः सर्वत्र तव कीर्त्तयः ॥" इति। अर्थवती यथा—"उत्तप्तकाञ्चनाभासं सन्दष्टदशनच्छदम्। सरसं चुम्बति हृष्टैर्हृष्टैरपि किमुज्ज्वलम् ?" ॥ अत्र एवं प्रश्न पक्वाम्रफलमित्युत्तरं, तस्य च द्व्यर्थपदप्रयोगेणानवगतेरियमर्थप्रहेलिका इति। पुनः षड्विधमाह—"क्रियाकारकसम्बन्धैः पादाभिप्रायवस्तुभिः। गोपितैः षड्विधं प्राहुर्गूढं गूढार्थवेदिनः ॥" इति। क्रियाकारकसम्बन्धगुप्तादीनामुदाहरणं तथा अन्तःप्रश्नबहिःप्रश्नादिभेदेनास्याः प्रभूततमं भेदञ्च ग्रन्थबाहुल्यभिया नात्र प्रदर्शितं, भोजादौ तु तानि द्रष्टव्यानि ) ॥ १०६ ॥

यदि च दुष्टाः प्रहेलिकाः पूर्वाचार्य्यैरुक्तास्तथाऽप्यस्माकं न तास्वभिरुचिरित्याह, दोषानिति।—वयं पुनः दोषान् शाब्दबोधप्रतिबन्धकत्वरूपानित्यर्थः, अपरिसङ्ख्येयान् बहून्, मन्य-

समागतायाः उदाहरणम्।—

**न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ?।**
**अस्थानरुदितैरेभिरलमालोहितेक्षणे ! ॥ १०८ ॥**

माना: जानन्तः सन्तः, साध्वीरिव उत्कृष्टा एव, दोषाधिक्या-भावात् अलङ्कारत्वं प्राप्ताः समागताप्रभृतीः षोड़श एव निर्दोषाः प्रहेलिकाः इत्यर्थः, अभिधास्यामः उदाहरिष्यामः ; ननु साध्वीः प्रहेलिका एव अभिधास्यन्ति चेत् भवन्तः कथं शिष्याणां दुष्टप्रहेलिकाज्ञानं भवेत् इत्याशयेनाह, ता इति।—यास्तु अलक्षणाः पूर्वोक्तलक्षणानन्तर्भूताः, ताः दुष्टाः सदोषाः, तासामुदाहरणे न मम प्रयास इति भावः॥ १०७॥

तत्र समागतामुदाहरति, नेति।—आलोहितेक्षणे ! हे आरक्तनयने !, कोपादिति भावः, मया ममेत्यर्थः, (षष्ठ्यर्थे तृतीया) चेतः गोरसस्य दुग्धादेः, अभिज्ञं रसज्ञं, न, दुग्धादिकं मया न हृतमित्यर्थः, यद्वा—गोरसाभिज्ञं चेतो मया न, धार्य्यते इति अध्याहृतेन क्रियापदेनान्वयः ; कस्मात् प्रकुप्यसि ? एभिः ईदृशैः, अस्थानरुदितैः अकारणरोदनैः, अलम् इति सञ्जोऽर्थः संवृतिकारकः,' संवरणकारित्वप्रयोजनन्तु अनेनास्या दुग्धाद्यपचयः कृत इति बोधात् कुपिताऽसौ दुःखेन रोदिति इत्येवं साधारणा जानन्त्विति। गूढ़ार्थस्तु—मे चेतः आगसः अपराधस्य, नायिकान्तरसङ्गरूपस्य इत्यर्थः, ("आगोऽपराधो मन्तुश्च" इत्यमरः) रसस्य आस्वादस्य, अभिज्ञं न, नाहं त्वदृते अन्यां कामये कथं तवेदृशो मानः ? इति। (अत्र "मे आगोरसाभिज्ञम्" इति पदच्छेदे सन्धिसूत्रेण एकारस्य अयादेशेन मयागोरसाभिज्ञमिति निष्पन्नत्वात् प्रकृतार्थस्य संवरणं, ततश्च सन्धिना प्रकृतार्थ-

वञ्चिताया उदाहरणम् ।—

कुब्जामासेवमानस्य यथा ते वर्द्धते रतिः ।
नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥१०९॥

व्युत्क्रान्ताया उदाहरणम् ।—

दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।
मुखं वल्गुरवं कुर्वंस्तुण्डेनाङ्गानि घट्टयन् ॥११०॥

---

गूढरूपा समागता नाम्नी प्रहेलिकेयम् । काञ्चित् मानिनीं गोपीं प्रति श्रीकृष्णस्य जनसमाजे उक्तिरियम् ) ॥ १०८ ॥

वञ्चितामुदाहरति, कुब्जामिति ।—कुब्जां भुग्नपृष्ठां कामपि नारीम्, आसेवमानस्य उपभुञ्जानस्य, ते तव, यथा रतिः सन्तोषः, वर्द्धते, अमरस्त्रीविडम्बिनीः सुरकामिनीसदृशीः, नारीः अन्याः स्त्रीः, निर्विशतः उपभुञ्जानस्य, ते इति शेषः, एवं तथा रतिः, न, वर्द्धते इति शेषः, इति सङ्क्षेपोऽर्थः । गूढार्थस्तु—कुब्जां कान्यकुब्जनगरीं तत्रत्यनारीं वेत्यादिः । ( अत्र कुब्जाशब्दो भुग्नपृष्ठनार्य्यामेव प्रसिद्धः, अन्यत्र तु न इति प्रसिद्धशब्देनाप्रसिद्धार्थप्रतिपादनरूपेयं वञ्चिताख्या प्रहेलिका । कान्यकुब्जनगरीं वा तत्रत्यनारीं प्रति अनुरक्तजनं कस्यचिदुक्तिरियम् ) ॥ १०९ ॥

व्युत्क्रान्तामुदाहरति, दण्डे इति ।—हंसः कर्कशकण्टके परुषकण्टकान्विते, पद्मिन्याः दण्डे नाले, अङ्गानि घट्टयन् घर्षयन्, तथा वल्गुरवं मनोज्ञं नादं, कुर्वन् तुण्डेन मुखेन, पद्मिन्याः मुखं चुम्बतीत्यन्वयः । ( अत्रान्वयबोधघटकपदाना-मतिव्यवधानसन्निवेशवशात् आसत्तेर्व्यतिक्रमः इति व्युत्क्रान्ता प्रहेलिका ) ॥ ११० ॥

प्रमुषिताया उदाहरणम्।—

खातयः कनि! काले ते स्फातयः स्फाहवल्गवः।
चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम धारिणः॥१११॥

समानरूपाया उदाहरणम्।—

अत्रोद्याने मया दृष्टा वल्लरी पञ्चपल्लवा।
पल्लवे पल्लवे ताम्रा यस्यां कुसुममञ्जरी॥११२॥

प्रमुषितां दर्शयति, खातय इति।—कनि! हे कुमारि!, ("कन्या कनी कुमारी च" इति हेमचन्द्रः) ते तव, काल्यते क्षिप्यते इति कालः पादः तस्मिन्, ("कल प्रेरणे" इत्यस्य घञन्तस्य रूपम्) स्फातयः स्फायनं स्फाः वृद्धिरित्यर्थः, तस्य अतिः गतिः यत्र ते, स्फीता इत्यर्थः, बहव इति यावत्, ("अत सातत्यगतौ" इत्यस्य इन्प्रत्ययान्तस्य रूपम्) खातयः खम् आकाशं, तस्यायं गुणः खः शब्द इत्यर्थः, (खशब्दादिदमर्थे णः) खस्य शब्दस्य, अतिर्गतिः येषु ते, शब्दायमाननूपुरादयोऽलङ्काराः इत्यर्थः, स्फाहवल्गवः स्फां स्फीतताम् अर्हन्तीति स्फार्हाः प्रभूता, वल्गवः वल्गनात् चलनात् जाताः ध्वनय इत्यर्थः, ततश्च स्फार्हा वल्गवः येषां तथोक्ताः, भवन्तीति शेषः, तव पादभूषणनूपुरादयः गमनकाले अतिशयं शिञ्जन्तीत्यर्थः, चन्दति आह्लादयति इति तस्मिन् चन्द्रे आह्लादके, अत्र सशिञ्जितनूपुराद्यलङ्कृते तव पादे इत्यर्थः, साक्षात् प्रत्यक्षीकृते सति इत्यर्थः, मम वायवः प्राणाः, धारिणः अवस्थिताः, सुस्थिराः इत्यर्थः, ("धृङ् अवस्थाने" इत्यस्य रूपम्) भवन्ति। (अत्र अप्रसिद्धैः बहुभिः पदैः प्रकृतार्थस्य संवरणात् प्रमोषणम् इति प्रमुषिता)॥ १११ ॥

समानरूपां दर्शयति, अत्रेति।—अत्र उद्याने मया पञ्च-

परुषाया उदाहरणम्।—

**सुराः सुरालये स्वैरं भ्रमन्ति दशनार्चिषा।**
**मज्जन्त इव मत्तास्ते सौरे सरसि सम्प्रति॥११३॥**

---

पल्लवा शाखापञ्चकविशिष्टा, वल्लरी लता, दृष्टा, यस्यां लतायां पल्लवे पल्लवे प्रतिपल्लवमित्यर्थः, ताम्रा आरक्ता, कुसुमञ्जरी पुष्पवल्लरिः, शोभते इति शेषः। (अत्र नायिका काचित् उद्यानत्वेन अध्यारोपिता, तस्या बाहुः वल्लरीत्वेन, अङ्गुलयः पल्लवत्वेन, नखाश्च कुसुममञ्जरीत्वेन, तेषाञ्च ताम्रत्वं रक्ताङ्गुलि-प्रभयेति बोध्यम्। इह उद्यानादिपदानां नायिकाद्यर्थाभिधाने गौणीलक्षणाया अध्यास एव हेतुरिति समानरूपा प्रहेलिका)॥ ११२॥

परुषां दर्शयति, सुरा इति।—ते प्रसिद्धाः, सुरां मद्यं कुर्वन्ति इति सुराः, (नामधातुत्वात् सुराशब्दात् ड-प्रत्यये रूपं) यद्वा—सुराः एषां सन्तीति सुराः शौण्डिका इत्यर्थः, (अर्श-आदित्वादच्प्रत्ययः) यद्वा—सुराः सु अतिशयेन, राः शब्दः, ध्वनिरित्यर्थः, येषां ते, उच्चैः चोत्कुर्वन्तः इत्यर्थः, ("रै शब्दे" इत्यस्य क्विबन्तस्य रूपम्) अस्मिन् पक्षे सुरापा इति कर्त्तृपदमूह्यम्; दशनार्चिषा हास्येन विवृतास्यतया दन्तकिरणेनोपलक्षिताः सन्तः, सम्प्रति सुराया इदं तस्मिन् सौरे सुरामये, सरसि मज्जन्तः निमग्नीभवन्त इव, मत्ताः सन्तः, सुरालये मद्यागारे, स्वैरं स्वच्छन्दं, भ्रमन्ति। (अत्र सुरा इति पदं देवतावाचकमपि अनुशासनबलात् शौण्डिके सुरापे उच्चैश्चोत्कुर्वति वा प्रयुक्तम् इति प्रयोक्तुः पारुष्यप्रकाशनात् परुषा नाम प्रहेलिका)॥ ११३॥

सङ्ख्यातायाः उदाहरणम् ।—

नासिक्यमध्या परितश्चतुर्वर्णविभूषिता ।
अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥११४॥

प्रकल्पितायाः उदाहरणम् ।—

गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा ।
तिष्ठन्तमपि सोत्कम्पं वृद्धे ! मां नानुकम्पसे ? ॥११५॥

सङ्ख्यातामुदाहरति, नासिक्यमध्येति ।—नासिक्यः नासिकायां भवः, नकार इत्यर्थः, स मध्ये यस्याः सा मध्यस्थनकारा इत्यर्थः, तया परितः उभयतः, चतुर्भिः वर्णैः अक्षरचतुष्टयैः, विभूषिता विरचिता, आदौ "क-आ" इति द्वौ वर्णौ अन्ते "च ई" इति द्वौ, मध्ये च नकारः एवंरूपा इति यावत्, काचित् पुरी नगरी, काञ्चीत्यर्थः, (नामनामिनोरभेदोपचारात् नासिक्यत्यादि-विशेषणवाक्यद्वयं काञ्चीबोधकमपि पुर्य्या योजनीयम् ) अस्ति, यस्यां पुर्य्यां, नृपाः राजानः, अष्टवर्णाह्वयाः अष्टाभिर्वर्णैः अक्षराष्टकैः निबद्धः, आह्वयः आख्या येषां तादृशाः, आसन् इति शेषः । (एतेन पुण्ड्रकाख्या इत्यायातम् ; पुण्ड्रकवंशीया राजानः काञ्चीं पुरीं अशासन् इति प्रसिद्धिः । पुण्ड्रकशब्दश्च प-उ-ण-ड-र-अ-क-अ इत्यष्टभिर्वर्णैर्निबद्ध इति चतुरष्टभिर्वर्णैः सङ्ख्या-वाचकैर्वा मोहनम् इति सङ्ख्याता प्रहेलिका ) ॥ ११४ ॥

प्रकल्पितां दर्शयति, गिरेति ।—वृद्धे ! हे स्थविरे !, स्खलन्त्या भ्रश्यन्त्या, वार्द्धकेनास्पष्टया इत्यर्थः, गिरा वाचा, नम्रेण वार्द्धकवशादेव अवनतेन, शिरसा, दीनया कातरया, क्षीणशक्तिकया इत्यर्थः, दृशा चक्षुषा च, उपलक्षिताऽपि त्वं (विशेषणे तृतीया) सोत्कम्पं सवेपथु, भयवशादिति भावः,

नामान्तरिताया उदाहरणम्।—

**आदौ राजेत्यधीराक्षि! पार्थिवः कोऽपि गीयते**
**सनातनश्च नैवासौ राजा नापि सनातनः ॥११॥**

तिष्ठन्तमपि मां नानुकम्पसे? न दयसे? इति सहजोऽ
गूढ़ार्थस्तु—हे ऋद्धे! हे लक्ष्मि! ("ऋद्धिः सिद्धिलक्ष्मी
रप्याह्वया इमे" इत्यमरः) धनाभावेन स्वलद्गिरा अवनताशि
दीनचक्षुषा च उपलक्षितं तथा सोत्कम्पं मां नानुकम्प
इति। (अत्र प्रथमं प्रतीयमानादर्थात् प्रस्तुतत्वेन अपर
कल्पनादियं प्रकल्पिता प्रहेलिका) ॥ ११५ ॥

नामान्तरितां दर्शयति, आदाविति।—अधीराक्षि!
चञ्चलनेत्रे!, कोऽपि पार्थिवः पार्थिवशब्दप्रतिपाद्यः, अ
प्रथमं, राजा, तथा सनातनः नित्यश्च, इति नाम्ना गी
कीर्त्यते, किन्तु असौ पार्थिवः, वस्तुतो नैव राजा भूपा
नापि सनातनः नित्यः, अत एव कोऽसौ? इति प्रश्न
सहजः। उत्तरार्थस्तु राजातनवृक्षरूपः गूढ़ः। तथा
कोऽपि पार्थिवः पृथिवीविकारजातः, वृक्षविशेषः इत्य
आदौ तद्वाचकनाम्नः प्रथमांशे, राजा इति राजा इति श
गीयते वर्त्तते इत्यर्थः, तथा, स नातनश्च अतनः तनश
रहितश्च न भवतीति नातनः, राजा इति पदानन्तरं
शब्दोऽप्यस्तीत्यर्थः, ततश्च राजातनवृक्षः इत्युत्तरभूतोऽ
(राजातनशब्देन पियालवृक्ष उच्यते; यथा—"राजा
पियालः स्यात्" इत्यमरः। राजातनं राजादनमिति
नामद्वयम्। अत्र राजातनेति नाम्नि वक्तव्ये नानार्थकल्प
इति नामान्तरिता प्रहेलिका। लक्षणे नामपदं वस्तुम
परत्वेन विवक्षितं, तेन "तरुण्यालिङ्गितः कण्ठे नितम्बस्थ

निभृतोदाहरणम् ।—

**हृतद्रव्यं नरं त्यक्त्वा धनवन्तं व्रजन्ति काः ? ।**
**नानाभङ्गिसमाकृष्ट-लोका वेश्या न दुर्द्धराः ॥११७॥**

माश्रितः । गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ? ॥" इत्यत्र मजलकुम्भरूपवस्तुनि प्रतिपाद्ये नानार्थकल्पनाक्रमामान्तरिता इति बोध्यम् ) ॥ ११६ ॥

निभृतामुदाहरति, हृतद्रव्यमिति ।—नानाभङ्गिभिः बहुविधविलासचेष्टितैः, समाकृष्टाः आयत्तीकृताः, लोकाः याभिः तथोक्ताः, तथा दुर्द्धराः दुःखेन ध्रियमाणाः, कयाश्चिदपि अवश्याः इत्यर्थः, काः हृतानि विनष्टानि, द्रव्याणि धनानि यस्य तादृशं, नरं त्यक्त्वा धनवन्तं धनिनं, व्रजन्ति ? ईदृशलक्षणस्त्रय वेश्या एव भवितुमर्हन्तीति तद्वारयितुमाह—वेश्या न, एतादृशलक्षणा वेश्या मम प्रश्नविषया नेत्यर्थः, अतस्ताः काः ? इति प्रश्नः सहृजार्थकः । उत्तरभूतः संवरणीयार्थस्तु—पर्वतोत्पन्ना नद्य इति । तथा हि, नाना विविधाः, भङ्गास्तरङ्गाः सन्त्यस्मिन्निति नानाभङ्गि जलं, तेन समाकृष्टाः समीपमानीताः, लोकाः अवतरणोत्सुका जना याभिस्ताः, दुर्द्धराः धरात् पर्वतात्, दुःदुःखेन गताः, कष्टेन निर्गता इत्यर्थः, नद्य इति भावः, हृतानि स्रोतोवेगेन ध्वंसितानि, द्रव्याणि पार्वतीयानि वस्तूनि, द्रूणां वृक्षाणामिमानि द्रव्याणि शाखापल्लवादीनि इत्यर्थो वा, यस्य तं, नरं नरसदृशम् आश्रयभूतं, पर्वतमित्यर्थादायातं, त्यक्त्वा धनवन्तं रत्नाकरं, समुद्रमित्यर्थः, व्रजन्ति । ( अत्र विशेषणसाधारण्यात् एकतरनिषेधे अन्यतरप्रतीतियुक्तेति नद्य इति प्रश्नविषयोऽर्थः । अस्य च तुल्यविशेषणप्रतीतौ अपि वाचकशब्दानुपादानात् निभृतात्वमित्यपि बोध्यम् ) ॥ ११७ ॥

समानशब्दोदाहरणम् ।—

जितप्रकृष्टकेशाख्यो यस्तत्राभूमिसाह्वयः ।
स मामद्य प्रभूतोत्कं करोति कलभाषिणि ! ॥११८॥

सम्मूढोदाहरणम् ।—

शयनीये परावृत्य शयितौ कामिनौ क्रुधा ।
तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम् ॥११९॥

---

समानशब्दां दर्शयति, जितेति ।—कलभाषिणि ! हे मधुरभाषिणि !, प्रकृष्टस्य अत्युत्कृष्टस्य, केशस्य आख्या तत्पर्य्यायकं नाम, प्रवाल इत्यर्थः, यद्वा—प्रकृष्टो यः केशस्तस्य आख्या तत्पर्य्यायनाम इव नाम यस्य स इति विग्रहः; जिताः तिरस्कृताः, प्रकृष्टकेशाख्याः प्रवालाः येन सः, तत्र यः अभूमिसाह्वयः भूमिर्धरा, नास्ति भूमिर्यत्र सः अभूमिः अधरः इत्यर्थः, तत्साह्वयः तस्य समाननामा, ओष्ठ इत्यर्थः, सः अद्य मां प्रभूतोत्कम् अत्युत्सुकं, करोति प्रवालसदृशस्तवाधरो मां व्यग्रयतीत्यर्थः । (अत्र प्रकृष्टकेशाख्यः अभूमिशब्दश्च लक्षितलक्षणया प्रवालाधरौ बोधयतः, तथा हि प्रकृष्टकेशपदस्य प्रवालशब्दे अभूमिपदस्य च अधरशब्दे लक्षणा, तयोश्च लक्षितयोः शक्तिग्रहेण तादृशार्थोपस्थितिः इति प्रकृतस्य समानशब्देनार्थोपस्थितेः समानशब्देयं प्रहेलिका ) ॥ ११८ ॥

सम्मूढां दर्शयति, शयनीये इति ।—कामिनौ क्रुधा कोपेन, शयनीये शय्यायां, परावृत्य विमुखीभूय, शयितौ, तथैव शयितौ परावृत्य शयितावपि इत्यर्थः, रागात् अनुरागात्, स्वैरं स्वच्छन्दं, मुखम् अचुम्बताम् । (अत्र क्रुधा परावृत्य शयितयोः स्वैरं मुखचुम्बनस्य दुर्घटत्वादापाततो मोहः, पर्य्यवसाने तु प्रथमं प्रणयकोपेन परावृत्य शयितौ, पश्चात् अनुरागात् तथैव

परिहारिकोदाहरणम्।—

विजितात्मभवद्वेषि-गुरुपादहतो जनः।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥१२०॥

एकाच्छन्नोदाहरणम्।—

न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम्।
अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः॥१२१॥

शयितौ पुनः परावृत्य शयितौ इति परावृत्तयोः पुनः परावर्त्तनात् पार्श्वान्तरेण शयितयोः सम्मुखीनत्वात् मुखचुम्बनं सुघटमेवेति आपातत एव श्रोतॄणां व्यामोहनात् सम्मूढेयम्)॥ ११९ ॥

परिहारिकां दर्शयति, विजितेति।—विना पक्षिणा, गरुडेनेत्यर्थः, जितः अमृताहरणकाले पराभूतः, इन्द्र इत्यर्थः, (पुरा किल मातुर्दासीत्वनिष्क्रयं नागादिष्टममृतमाहर्त्तुं सुरलोकं गतेन गरुडेन सुरपतेः प्रबलं सङ्ग्राममभवत्, तत्र च गरुडः निजपराक्रमेण सुरनाथं विजित्य अमृतं गृहीत्वा प्रतिष्ठत इति वार्त्ता) तस्य आत्मभवः पुत्रः, अर्जुन इत्यर्थः, तस्य द्वेषी शत्रुः, कर्ण इत्यर्थः, तस्य गुरुः पिता, सूर्य्य इत्यर्थः, तस्य पादैः किरणैः, हतः सन्तप्तः, जनः हिमं शैत्यम्, अपहन्तीति हिमापहः अग्निः, तस्य अमित्राः शत्रवः, जलानि इत्यर्थः, तेषां धराः अम्भोधराः मेघाः, तैः व्याप्तम् आवृतं, व्योम आकाशम्, अभिनन्दति समादरति इत्यर्थः। (अत्र यौगिकशब्दैः झटिति प्रकृतार्थबोधस्य हरणात् परिहारिका)॥ १२० ॥

एकच्छन्नां दर्शयति, नेति।—कस्यापि अमनुष्यस्य पुरुषतया अगण्यस्य इत्यर्थः, हस्तः जातु कदाचिदपि, आयुधम्

उभयच्छन्नोदाहरणम् ।—

केन कः सह सम्भूय सर्व्वकार्य्येषु सन्निधिम् ।
लब्ध्वा भोजनकाले तु यदि दृष्टो निरस्यते ? ॥१२२॥

सङ्कीर्णोदाहरणम् ।—

सहया सगजा सेना सभटेयं न चेज्जिता ।
अमात्रिकोऽयं मूढ़ः स्यादक्षरज्ञश्च नः सुतः ॥१२३॥

अस्त्रं, न स्पृशति, स्त्रीणां स्तनमण्डलञ्च न स्पृशति, तथाऽपि अयं हस्तः, न अफलः नः व्यर्थः किल, अपि तु सफल एव इति आपाततः प्रतीयते, परन्तु आयुधस्त्रीस्तनस्पर्शाभावेन नायं वीरः न वा विलासीत्यतः कथमस्य हस्तस्य फलवत्त्वमिति विरुद्धवद्भासनात् अमनुष्यगन्धेन गन्धर्व्वो लक्ष्यते, तस्य हस्तः गन्धर्व्वहस्तः एरण्डवृक्ष इत्यर्थः ; ( उक्तञ्च हारावल्याम्— "अमण्डपञ्चाङ्गुलवर्द्धमाना गन्धर्व्वहस्तस्त्रिपुटीफलञ्च" इति, तस्य फलं विद्यते एवेति आश्रितस्य फलस्य स्फुटत्वं न तु आश्रयस्य वृक्षस्येति एकच्छन्नेयम् ) ॥ १२१ ॥

उभयच्छन्नां दर्शयति, केनेति ।—कः पदार्थः, केन पदार्थेन सह, सम्भूय मिलित्वा, सर्व्वकार्य्येषु सन्निधिं सामीप्यं, लब्ध्वा प्राप्य च, भोजनकाले तु ( तु शब्दोऽवधारणे ) भोजनकाले एव, यदि दृष्टः, भवति इति शेषः, तदा निरस्यते ? निराक्रियते ? उत्तरमिदं यथा—कस्य अयं कः केशः, ( कशब्दादिदमर्थे णप्रत्ययः ) केन मस्तकेन सह, सम्भूय तथा सर्व्वकार्य्येषु सान्निधिं समादरं, लब्ध्वा भोजनकाले एव दृष्टो निरस्यते इति । ( अत्र आश्रयाश्रयिणोर्मस्तककेशयोरुभयोरेव छन्नतेति उभयच्छन्ना ) ॥ १२२ ॥

सङ्कीर्णां दर्शयति, सहयेति ।—सहया साश्वा, सगजा

सहस्तिका, सभटा भटैः योद्धृभिः सह वर्त्तमाना, इयं सेना मातवी चमूरित्यर्थः, न जिता चेत् पराभूता न यदि, तदा नः अस्माकम्, अयं सुतः अमात्रिकः मात्रं स्वार्थः, तत् वेत्तीति मात्रिकः स्वार्थाभिज्ञः, तादृशो न भवतीति अमात्रिकः स्वार्थचिन्तापराङ्मुख इत्यर्थः, यद्वा—मात्रा द्रव्यं, धनमित्यर्थः, विषय इति यावत्, ("मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रा परिच्छदे। अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे॥ काले वृत्ते च" इति हैमः) तामर्हतीति मात्रिकः न मात्रिकः अमात्रिकः धनमर्य्यादानभिज्ञः, विषयज्ञानवर्जितः इत्यर्थः, अतः अक्षरज्ञः अक्षरं ब्रह्म तज्ज्ञोऽपीत्यर्थः, मूढ़ः मूर्खः, स्यात्, स्वार्थज्ञानाभावात् वैषयिकबुद्ध्यभावात् वा ब्रह्मविदपि मूर्खत्वेनैव गण्यः इति सहजोऽर्थः। गूढ़ार्थस्तु—हकार-यकाराभ्यां गकार-जकाराभ्यां भकार-टकाराभ्याञ्च सहिता इयं सेना इनः प्रभुः, अधिष्ठाता इत्यर्थः, अक्षरस्रष्टा ब्रह्मा इति यावत्, (यदुक्तं—"धात्राऽक्षराणि सृष्टानि पत्राकढ़ान्यतः पुरा" इति) तेन सहिता साधिष्ठातृका वर्णमाला इत्यर्थः, वर्णमाला कीदृशी, का वा तासां अधिष्ठात्री देवता इत्यादिरूपा इति भावः, न जिता अनभ्यस्ता चेत्, न ज्ञाता चेदित्यर्थः, तदा अमात्रिकः मात्रा स्वरादिवर्णानामुच्चारणकालः, तां वेत्तीति मात्रिकः, न मात्रिकः अमात्रिकः वर्णज्ञानरहित इत्यर्थः, अतः अक्षरं वेदं जानातीति अक्षरज्ञः अभ्यस्तवेदः अपि, मूढ़ः मूर्खं इत्यर्थः, यद्वा—न जिता लेखितुं न शिक्षिता इत्यर्थः, तदा अमात्रिकः मात्रा अक्षरावयवः, तां न वेत्तीति अमात्रिकः, कः अक्षरः कीदृशेन आकारेण लेखनार्हः इत्यादिज्ञानरहित इत्यर्थः, अयम् अक्षरज्ञः वर्णज्ञोऽपि, मूर्ख एवेति सङ्कीर्णेति॥ १२१॥

सा नामान्तरितामिश्रा वञ्चितारूपयोगिणी ।
एवमेवेतरासामप्युन्नेयः सङ्करक्रमः ॥ १२४ ॥

इति प्रहेलिकाचक्रम् । *

[ शब्दालङ्काराः समाप्ताः ] †

दोषविभागः ।—

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम् ॥१२५॥

अत्र सङ्कीर्णतां घटयति, सेति ।—सा पूर्वोक्ता इयं सङ्कीर्णाख्या प्रहेलिका, अत्र नामान्तरितामिश्रा इत्यादिशब्दानां नानार्थकल्पनात् नामान्तरितानामप्रहेलिकालक्षणसंयुक्ता, तथा वञ्चितारूपयोगिणी सेनाशब्दस्य चमूरूपार्थस्य प्रसिद्धस्य अर्थान्तरकल्पनया वञ्चनात् वञ्चितायाः प्रहेलिकायाः, रूपयोगिणी लक्षणसमन्विता च, तन्मिलिता इत्यर्थः । ( अतः उल्लिखिते पद्ये प्रहेलिकायाः सङ्कीर्णतेति ज्ञेयम् ) एवमेव अनेनैव प्रकारेण, इतरासाम् अन्यासामपि प्रहेलिकानां, सङ्करक्रमः परस्परमिश्रणप्रकारः, उन्नेयः स्वयमेव अवगन्तव्य इत्यर्थः ॥ १२४ ॥

इत्थं काव्यशोभाकरान् धर्मान् गुणालङ्कारान् निरूप्य काव्यस्य हेयत्वप्रतिपादकानां धर्माणां बहूनां दोषाणां सविस्तरवर्णने ग्रन्थबाहुल्यभिया प्राधान्येन नितान्तत्याज्यान् दश दोषानुद्दिशति, अपार्थमित्यादि ।—अपार्थं निरर्थकं, व्यर्थं विरुद्धार्थम्, एकार्थम् अभिन्नार्थं, ससंशयं सन्दिग्धम्, अपक्रमं

* इति प्रहेलिकाचक्रं प्रहेलिकानां लक्षणोदाहरणादिसमूहः प्रदर्शित इत्यर्थः ।

† शब्दालङ्काराः यमकचित्रालङ्कारादयः, समाप्ताः ।

देश-काल-कला-लोक-न्यायागमविरोधि च ।
इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः॥१२६॥

यथाक्रमरहितं. शब्दहीनम् कृत्वादिना पूर्ववत्, यतिभ्रष्टं विच्छेद-रहितं, भिन्नवृत्तम् असमवृत्तं, विसन्धिकम् अकृतसन्धि, देशादिविरोधि च इति, इतिशब्दः वाक्यसमाप्तौ, ईदृशं वाक्यं दुष्टमित्यर्थः, एते अपार्थतादयः, दश एव दोषाः काव्यापकर्षक-धर्माः, सूरिभिः विद्वद्भिः, काव्येषु वर्ज्याः त्याज्याः, शाब्दबोध-प्रतिकूलतया प्रयोक्तुरज्ञताप्रकटनात् इति भावः। [ उक्तञ्च— "दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति" इति। एवकारेण किञ्चिद्वैरस्यप्रतिपादकानां श्रुतिकटुप्रभृतीनां व्यवच्छेदः, तेषाम् अन्वयबोधाप्रातिकूल्येन नात्यन्तं हेयत्वप्रतिपादकत्वात् इति निष्कर्षः। अत्रेदमवधारणीयम् ;—सामान्यलक्षणाभिधाना-नन्तरमेव विशेषाणामभिधानस्यौचित्येऽपि गुणानां काव्यशरीर-स्योत्कर्षाधायकत्वेन सलक्षणोदाहरणप्रदर्शनात् तदवगतेश्च तद्विपर्ययात्मानो दोषाः इति तु सामर्थ्यादेव सामान्यलक्षणाव-गमात् तदप्रदर्श्यैव विशेषाः दर्शिता इति। एवमेव चोक्तं वामनेनापि—"गुणविपर्ययात्मानो दोषाः" (२य अधि० १ अ० १ सू० ) "अर्थतस्तदवगमः" (२ अधि० १ अ० २ सू० ) इति। "किमर्थं ते पृथक् प्रपञ्च्यन्ते ? इत्याह—"सौकुमार्याय प्रपञ्चः" ( २ अधि० १ अ० ३ सू० ) इति च"। एतेन काव्ये गुणानामुपादेयधर्मतया तत्राभिमतप्रतीतिव्यवधायकत्वेन ये हेयतामापादयन्ति ते दोषा इति लक्षणमायातम् ; तदुक्तं सरस्वतीकण्ठाभरणे—"दोषाः पदानां वाक्यानां वाक्यार्था-नाञ्च षोडश। हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे॥" इति। यद्वा —दुष्यति विकृतं भवति काव्यमनेन इति दोषः

प्रतिज्ञाहान्यादीनां दोषत्वानङ्गीकारः ।—

**प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ ।**
**विचारः कर्कशः प्रायस्तेनालीढेन किं फलम्?॥१२**

इति व्युत्पत्तिबलादेव लक्षणावगतिः। प्रकाशकृताऽपि—"मुख्यार्थहतिः दोषः" इति लक्षणं कृतं, तेनास्य भावसाधनात्मता सूचिता; ततश्च काव्यस्यापकर्षो दोष इति, तच्च हेयत्वस्यापकृष्टत्वम्, अपकर्षश्च शब्दानामर्थानां वाक्यानां वाक्यार्थानां व्युत्क्रमादेश्च सम्भवति इति बहुविधतया कार्त्स्न्येन वक्तुमशक्यमिति दश एवात्र दर्शिताः )॥१२५॥१२६॥

ननु दशैवेति अवधारणमनुचितं प्रतिज्ञाहान्यादेरपि विवक्षितार्थाप्रतिपत्त्या दोषत्वकीर्त्तनात्। उक्तञ्च भगवता गौतमेन—"प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" इति। अत एव "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः" इत्यादिसूत्रेण प्रतिज्ञाहान्यादीनां निग्रहस्थानत्वं तेनोक्तम्। उदाहृतञ्च यथा भोजराजेन—"यावज्जीवमहं मौनी ब्रह्मचारी पिता मम। माता च मम वन्ध्याऽऽसीदपुत्रश्च पितामहः॥" इति। भामहादयस्तु तस्य दोषत्वं नाङ्गीकुर्वन्ति; यथा—"प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टञ्च नेष्यते" इति। तदेतं संशयमपाकर्त्तुं स्वमतमाह, प्रतिज्ञेति।—प्रतिज्ञा साध्यनिर्देशः, हेतुः साध्यसाधनं, दृष्टान्तः प्रसिद्धोदाहरणविन्यासः, तेषां हानिः विरोधः अभावश्च, दोषः काव्यस्य हेयत्वप्रतिपादकः, न वा इति संशये, असौ एतत्प्रश्नविषयकः, विचारः निश्चयः, एकपक्षावधारणमित्यर्थः, प्रायः कर्कशः न्यायशास्त्रीयत्वात् कठिनः, कर्कशः नीरस इत्यर्थः वा, तस्मात् तेन विचारेण, आलीढेन आस्वादितेन, ज्ञातेन इत्यर्थः, किं फलम्? न किमपि फलमस्ति

अपार्थत्वम् ।—

समुदायार्थशून्यं यत् तदपार्थमितीष्यते ।
उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति ॥१२८॥

इत्यर्थः । (तथा हि काव्यस्य वैरस्यजनकधर्मतया दोषाणामवबोधः बोद्धृणां स्वत एव भवति, न च तदर्थं ग्रन्थबाहुल्यीकरणं युक्तं, केवलम् अत्यन्तपरिहार्य्या एव कतिपये काव्यदोषा अत्र दर्श्यन्ते, प्रतिज्ञादिहानेश्च नात्यन्तपरिहार्य्यता, अप्रतिज्ञातानाम् अपि प्रसङ्गसङ्गत्या कविभिर्वर्णितत्वं दृश्यते । हेतोरभावश्च प्रसिद्धसाध्ये न वैरस्यमावहति, दृष्टान्तश्च अलङ्कारस्वरूप एव, तदभावेन न काव्यस्यात्यन्तवैरस्यम्, अनलङ्काराणाम् अपि काव्यत्वस्य सर्व्वैरेवाङ्गीकृतत्वात्; अतो न्यायसूत्रवृत्तिकताऽप्युक्तं—"दृष्टान्तस्य सामयिकत्वेनाभावेऽस्थिकत्वेऽपि न क्षतिः" इति । ततश्च रसापकर्षजनकत्वमेव दूषकताबीजमित्यवधेयम् ) ॥ १२७ ॥

क्रमेण दोषप्रभेदान् लक्षयन् प्रथमम् अपार्थं निरूपयति, समुदायेति ।—समुदायस्य वाक्यघटकपदसमूहस्य महावाक्यघटकवाक्यसमूहस्य च, यः अर्थः शाब्दबोधेन एकतामापन्नः प्रतिपाद्यः, तेन शून्यं यत् वाक्यं, तत् अपार्थम् अपार्थनामदोषान्वितम्, इति इष्यते कथ्यते इत्यर्थः, वाक्यार्थानां पदार्थानां वा योग्यताऽऽकाङ्क्षासत्तिविरहेण यत्र शाब्दबोधः बाधितो भवति तत्र अपार्थवत् वाक्यमिति निष्कर्षः, तच्च उन्मत्तानाम् उन्मादग्रस्तानां, मत्तानां सुरापानेन विकृतानां, तथा बालानां शिशूनाम्, उक्तेः वचनात्, अन्यत्र दुष्यति, उन्मत्तादिवचने तु अपार्थत्वादेः न दोषत्वम् इत्यर्थः ॥ १२८ ॥

समुद्रः पीयते देवैरहमस्मि जरातुरः।
अमी गर्जन्ति जीमूता हरेरैरावणः प्रियः॥१२९॥
इदमस्वस्थचित्तानामभिधानमनिन्दितम्।
इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम्?॥१३०॥

अपार्थत्वं दर्शयति, समुद्र इति।—देवैः सुरैः मेघैर्वा, समुद्रः पीयते, ("देवैः" इत्यत्र "सोऽयम्" इति पाठश्च दृश्यते) अहं जरातुरः जराक्रान्तः, अस्मि, अमी जीमूता मेघाः, गर्जन्ति, ऐरावणः ऐरावतनामा हस्ती, हरेरिन्द्रस्य, प्रियः। (अत्र वाक्यचतुष्टयस्य परस्पराकाङ्क्षाभावेन अङ्गाङ्गित्वाभावात् एकवाक्यताया अभाव इत्यतः समुदायस्यार्थो नास्ति। उक्तञ्च —"स्वार्थबोधसमाप्तानाम् अङ्गाङ्गित्वव्यपेक्षया। वाक्यानाम् एकवाक्यत्वं पुनः संहृत्य जायते॥" इति। ततश्चायं वाक्यार्थ-गत एव दोषः। कण्ठाभरणेऽपि तदेवोक्तं यथा—"उक्ता वाक्यार्थजा दोषास्तेषां वक्ष्यामि लक्षणम्। समुदायार्थशून्यं यत्तदपार्थं वचः स्मृतम्॥" इति। उदाहरणान्तरं यथा— "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन्! रुमायां लशुनस्य कोऽर्घः?"॥ इति। इदञ्च बहुवाक्यगतम् अपार्थत्वं ज्ञातव्यम्। एवं बहुपदगतमपि तत् दृश्यते, यथा—वह्निना सिञ्चतीत्यादौ योग्यताद्यभावेन समुदायार्थशून्यत्वम् इति बोध्यम्)॥ १२९॥

इदमिति।—अस्वस्थचित्तानाम् उन्मत्तादीनाम्, इदं पूर्वोक्तम्, अभिधानं समुद्रः पीयते इत्यादिवचनम्, अनिन्दितम् अदुष्टत्वेन परिगृहीतं, भवतीति शेषः, इतरत्र अन्यत्र, अस्वस्थ-चित्तादिभ्य इति शेषः, उन्मत्तादीन् विना इत्यर्थः, को वा

व्यर्थत्वम्।—

**एकवाक्ये प्रबन्धे वा पूर्वापरपराहतम्।**
**विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥१३१॥**

कविः एवमादिकं प्रयुञ्जीत ? न कोऽपि कविः प्रयुञ्जीतेत्यर्थः। (तदुक्तं कण्ठाभरणेऽपि भोजेन—"अथ वाक्यार्थदोषाणामदोषः कथ्यतेऽधुना। समुदायार्थशून्यं यत् तदपार्थं प्रचक्षते ॥ तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति ॥ यथा—क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणामुपशान्तये श्रुतमहो ! कोपेऽपि कान्तं मुखम्। किं वक्ष्यन्त्यपकल्मषाः कृतधियो स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ?" ॥ इति। अस्य समुदायार्थशून्यतया अपार्थस्यापि उन्मत्तवचनत्वाद्गुणत्वमित्यवधेयम्) ॥ १०० ॥

व्यर्थं निरूपयति, एकवाक्ये इति।—एकवाक्ये एकस्मिन् वाक्ये, वा प्रबन्धे महावाक्ये, विरुद्धार्थतया विपरीतार्थत्वेन, यत् पूर्वापरपराहतं पूर्वापरयोः आद्यन्तभागयोः, पराहतं सङ्गतिरहितं, तत् वाक्यं, व्यर्थं व्यर्थाख्यदोषान्वितम्, इति दोषेषु मध्ये पठ्यते गण्यते। (परस्परविरुद्धार्थत्वेन पूर्वापरयोरसङ्गत्या यत् कस्यचिदर्थस्याप्रत्यायनं तत् व्यर्थत्वमिति लक्षणम्। भोजराजस्तु विगतोऽर्थः प्रयोजनमस्येति व्यर्थमिति व्युत्पत्त्या विप्रकृष्टः विगतार्थम् इत्याह; उक्तञ्च—"व्यर्थमाहुर्गतार्थं यत् यच्च स्यान्निष्प्रयोजनम्" इति। उदाहरणं यथा—"आश्विनान्तो रघुश्चाप्नो शरभङ्गाश्रमं ततः। स्वामश्रीषोत्तमं वक्षो दृष्ट्वा तौ रामलक्ष्मणौ ॥" इति। अर्थविरोधश्च शाब्दबोधानन्तरं पर्यालोचनया प्रतीयते, अपार्थे तु आकाङ्क्षादीनाम् अभावेन शाब्दबोध एव नास्तीत्यनयोर्भेदः। अत्र हि विरुद्धमतिकारित्व-

जहि शत्रुबलं कृत्स्नं जय विश्वम्भरामिमाम्।
तव नैकोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥१३२

व्यर्थताया गुणत्वम्।—

अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः।
यस्यां भवेदभिमता विरुद्धार्थाऽपि भारती ॥१३३

परदाराभिलाषो मे कथमार्य्यस्य युज्यते ?।
पिबामि तरलं तस्याः कदा नु दशनच्छदम् ?॥१३४

प्रकाशितविरुद्धत्वामतपरार्थत्व-परिपन्थिरसाङ्गादयो दोषा अन्ये वक्ता अन्तर्भवितुमर्हन्तीति सुधीभिर्विभाव्यम्)॥ १३१ ॥

व्यर्थतां दर्शयति, जहीति।—कृत्स्नं समग्रं, शत्रुबलं रिपुसैन्यं, जहि नाशय, इमां विश्वम्भरां पृथिवीं, जय, सर्वभूतानुकम्पिनः सर्वभूतेषु दयावतः, तव एकोऽपि विद्वेष्टा शत्रुः, न, अस्तीति शेषः। (अत्र विद्वेष्टृमात्रशून्यस्य समग्रशत्रुहननं सर्वभूतानुकम्पिनश्च पृथिवीविजयः पर्य्यालोचनया विरुद्धतया प्रतीयते, ततश्च पूर्वापरविरुद्धतया पराङ्गवाक्यार्थानां व्यर्थताप्रत्यायनमिति व्यर्थतादोषः)॥ १३२ ॥

कदाचित् व्यर्थताया गुणत्वमपीत्याह, अस्तीति।—साभिषङ्गस्य वियोगादिदुर्घटनाभिभूतस्य, ("शापे त्वभिषङ्गः पराभवे" इत्यमरः) चेतसः काचित् अनिर्वचनीया, इष्टानिष्टशुभाशुभादिविचाराक्षमा इत्यर्थः, अवस्था दशा, अस्ति भवति, यस्यां सा विरुद्धार्थाऽपि असङ्गताऽपि, विरुद्धार्थतया व्यर्थाऽपि इत्यर्थः, भारती वाणी, अभिमता समादृता, भवेत्। (अभिमता इत्यनेन अवस्थावशात् अस्य गुणत्वमपि जायते इति सूचितम्)॥१३३॥

अस्या गुणत्वं दर्शयति, परेति।—आर्य्यस्य साधोः, मे मम,

एकार्थत्वम् ।—

**अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।**
**अर्थतः शब्दतो वाऽपि तदेकार्थं मतं यथा ॥१३५॥**

परदाराभिलाषः परस्त्रीषु अभिरतिः, कथं युज्यते ? तस्याः परभार्य्याः, परकीयाया इति भावः, तरलं लज्जाभयजनितसम्भ्रमात् सकम्पं, दशनच्छदम् अधरं, कदा नु पिबामि ? । (अत्र पूर्वार्द्धे शान्तभावः उत्तरार्द्धे तु पुनः परदारौत्सुक्यमिति विरोधादुत्तरार्द्धवाक्यं व्यर्थमेव, तच्च प्रयोक्तुर्वियोगाभिभूततया गुणत्वेन सङ्गच्छते । एवं वि-शब्दस्य विगतार्थकत्वे उदाहरणं यथा—"हृत्वा गठवक्त्रशोरेषु कस्य नावास्थितं तव । श्रीखण्डहारकर्पूर-दन्तपत्रप्रभं यशः ?" ॥ अत्रापि एकेनैव उपमानेन शौक्ल्यप्रतीतौ शेषोपमानपदानां व्यर्थत्वेऽपि यशसः स्मर्य्यमाणत्वगीयमानत्व-स्तूयमानत्व-श्रूयमाणत्वैः हृदयादिषु श्रीखण्डादिवदवस्थानस्य प्रतीयमानत्वात् गुणत्वम् । नव्यास्तु विरुद्धानां बाध्यत्वेनोक्तौ गुणतामङ्गीकुर्वन्ति, यदाह—"मत्वार्य्यादिविरुद्धस्य बाध्यत्वेन वचो गुणः" इति । तदत्र दोषस्य गुणत्वसम्पादनं सर्वसम्मतम् इति बोध्यम् ) ॥ १३४ ॥

एकार्थं समर्थयितुमाह, अविशेषेणेति ।—यदि पूर्वोक्तं प्रागभिहितम्, अर्थतः शब्दतो वाऽपि अर्थः शब्दश्चेत्यर्थः, (पूर्वोक्तमिति सामान्यत्वान्नपुंसकलिङ्गम् । अर्थतः शब्दतः इति प्रथमान्तं ज्ञेयम् ) अविशेषेण अभिन्नतया, भूयोऽपि पुनरपि, कीर्त्यते, तत् एकार्थम् एकार्थाख्यदोषयुक्तं, मतम् । ( एवञ्च दोषोऽयम् अर्थगतः एकार्थकशब्दगतश्चेति, तथा च अर्थस्य एकार्थकशब्दस्य वा पुनरुक्तत्वम् एकार्थत्वमिति बोध्यम् । तेन च पुनरुक्ताख्यार्थदोषस्य कथितपदत्वाख्यशब्ददोषस्य चान्येषुक्तस्य

उत्कामुन्मनयन्त्येते बालां तदलकत्विषः।
अम्भोधरास्तडित्वन्तो गम्भीराः स्तनयित्नवः॥१३६॥

एकार्थसंज्ञया मङ्गः। शब्दत इत्यत्र शब्दपदं तदर्थकशब्दपरं, ततश्च भिन्नार्थकशब्दपौनरुक्त्यस्य तादृशवैरस्याजनकत्वेन न दोषत्वम् इत्यभिप्रायः सूचितः; तद्यथा—"सुरा विप्रैः सुरा नीचैः" इत्यादौ सुरा देवाः सुरा मद्यानीति भिन्नार्थत्वान्न दोषः) यथेति उदाहरणप्रदर्शनार्थम्॥ १३५॥

एकार्थं दर्शयति, उत्कामिति।—तस्याः बालायाः, अलकानामिव केशानामिव, त्विषः कान्तयः येषां तादृशाः, स्तनयित्नवः गर्जनशीलाः, तडित्वन्तः सौदामनीमण्डिताः, गम्भीराः प्रगाढ़ा इत्यर्थः, एते अम्भोधराः मेघाः, उत्कां विरहेणोत्कण्ठितां, बालाम् उन्मनयन्ति उन्मनसं कुर्वन्ति, उद्दीपकत्वादिति भावः। (अत्र उत्कोन्मनःशब्दौ अम्भोधरास्तडित्वन्तः स्तनयित्नवः इत्येते शब्दाश्च स्वरूपतो भिन्ना अपि एकपर्य्यायत्वेन एकार्थप्रतीतेः पुनरुक्तार्थाः। एवं येन केनापि पूर्वोक्तार्थस्य पुनः प्रतीतौ दोषोऽयं दृश्यते; यथा दर्शितः विश्वनाथेन—"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥ अत्र द्वितीयार्द्धव्यतिरेकेण द्वितीयपादस्यैवार्थे इति पुनरुक्तता॥" इति। तथा शब्दतोऽर्थतो वा इत्यनेनोक्तस्य शब्दगतस्य अपि उदाहरणं दर्शितं प्रकाशकृता कथितपदतायां यथा—"अधिकरतलतल्पं कल्पितस्वापलीला परिमिलननिमीलत्पाण्डिमा गण्डपाली। सुतनु! कथय कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम्?"॥ अत्र उभयत्र विलासरूपार्थस्यैकलीलापदेनैवोक्तौ तात्पर्य्यमाहकाभावात् लीलापदम् एकार्थम्।

एकार्थस्य गुणत्वम्।—

**अनुकम्पाद्यतिशयो यदि कश्चित् विवक्ष्यते।**
**न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया॥ १३७॥**

---

शब्दार्थविभागेन एकार्थस्य यत् द्वैविध्यमभिहितं, तस्यायमभिप्रायः,—वाक्यार्थदोषप्रकरणोक्तस्यैकार्थस्य वस्तुतो वाक्यार्थदोषत्वेऽपि शब्दार्थगतत्वेन भेदद्वयकल्पनमकिञ्चित्करमेव, स च भेदः यत्र पर्य्यायान्तरशब्देनार्थस्य पौनरुक्त्यं, तत्रार्थमात्रगतः; यत्र एकस्यैवैकार्थशब्दस्य तात्पर्य्याभावेऽपि पुनः प्रयोगस्तत्र शब्दगत इत्येवंरूपो बोध्यः। नव्यास्तु शब्दगतस्य कथितपदत्वम् अर्थगतस्य पुनरुक्तत्वमिति संज्ञाद्वयमाहुः)॥ १३६॥

अस्य प्रतिप्रसवमाह, अनुकम्पेति।—यदि कश्चित् अनुकम्पाद्यतिशयः अनुकम्पादीनाम् अतिशयः, प्रकृतस्येति शेषः, (आदिपदेन विहितानुवादादीनां परिग्रहः, यदुक्तं "गुण." इत्यधिकृत्य दर्पणकारेण—"कथितञ्च पदं पुनः। विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि॥ दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने। अर्थान्तरसङ्क्रमित-वाच्ये हर्षेऽवधारणे॥" इति) विवक्ष्यते वक्तुमिष्यते, तदा पुनरुक्तोऽपि न दोषः, प्रत्युत इयं पुनरुक्तिरित्यर्थः, अलङ्क्रिया अलङ्कारः, काव्यशोभाधायकत्वात् इति भावः। एवञ्च रसाक्षिप्तचेतसो वक्तुरुक्तौ च एकार्थं न दुष्यति; तदुक्तं कण्ठाभरणे—"अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते। तदेकार्थं रसाक्षिप्त-चेतसां तन्न दुष्यति॥" उदाहरणं यथा—"असारं संसारं परिमुषितरत्नं त्रिभुवनं निरालोकं लोकं मरणशरणं बान्धवजनम्। अदर्पं कन्दर्पं जननयननिर्माणमफलं जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः?"॥ अत्र असारं संसार-

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥१३८॥

ससंशयत्वम् ।—

निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत् ।
वचांसि दोष एवासौ ससंशय इति स्मृतः ॥१३९॥

---

मित्युक्त्या परिमुषिततरलं त्रिभुवनं निरालोकं लोकं जगज्जीर्णारण्यमिति यदुक्तं तस्य विशेषानभिधायकत्वेऽपि रसाविष्टेन वक्त्रा अभिहितत्वात् गुणत्वम् ; तथा उन्मत्ताद्युक्तावपि पौनरुक्त्यं गुण एवेति ज्ञेयम् ) ॥ १३७ ॥

अनुकम्पायामुदाहरति, हन्यते इति ।—सा वरारोहा उत्तमाङ्गना, अकाण्डवैरिणा अकारणरिपुणा, स्मरेण कामेन, हन्यते, सा चारुसर्वाङ्गी हन्यते, सा मञ्जुभाषिणी मधुरवादिनी, हन्यते । ( अत्र हन्यते इति क्रियावाचकं पदं पुनः पुनरुक्तमपि प्रस्तुताया नायिकाया अनुकम्पनीयत्वादिप्रकटनात् वैचित्र्यमेव जनयतीति न दोषावहम् । एवमन्यत्रापि उदाहरणानि मृग्याणि ) ॥ १३८ ॥

ससंशयं निरूपयति, निर्णयार्थमिति ।—निर्णयार्थं निश्चयार्थं, श्रोतुः प्रवृत्तिनिवृत्त्योरेकतरनिर्धारणार्थमिति यावत्, प्रयुक्तानि विन्यस्तानि, वचांसि चेत् यदि,संशयं विषयद्वयात्मकज्ञानं, जनयन्ति उत्पादयन्ति, तदा असौ एव दोषः ससंशयः ससंशयाख्यदोषेण लिप्त इत्यर्थः, इति स्मृतः । ( भोजस्तु— "सन्दिग्धार्थं ससंशयम्" इति लक्षणमाह । अस्य च लक्षणस्य सङ्गतत्वेऽपि बोद्धव्यस्य प्रवृत्तिनिवृत्त्यन्यतरनिर्णयार्थं प्रयुक्तं वाक्यं सन्दिग्धार्थं सन्देहजनकञ्चेदित्यर्थः करणीयः, सन्देहार्थ-

**मनोरथप्रियालोक-रसलोलेक्षणे ! सखि ! ।**
**आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥१४०॥**

मेव सन्दिग्धवाक्यप्रयोगे तु अस्य गुणत्वमिति स्वयमेव वक्ष्य-
माणत्वात् ) ॥ १३९ ॥

ससंशयमुदाहरति, मनोरथेति।—मनोरथप्रियालोकरस-
लोलेक्षणे ! मनोरथप्रियः वाञ्छितवल्लभः, तस्य आलोकः
दर्शनं, तस्मिन् यः रसः अनुरागः, तेन लोले चञ्चले, ईक्षणे
नयने यस्याः तत्सम्बुद्धौ, हे जारदर्शनव्यापृतनयने ! सखि !
असौ माता, तवेति शेषः, आराद्वृत्तिः दूरवर्त्तिनीत्यर्थः, अतः
ईदृशं तव सानुरागाङ्गनाजनयोग्यं व्यवहारं, द्रष्टुं न क्षमा
व्यवहिततया विलोकयितुं न शक्ता, ततो निःशङ्कमवलोकय
इति भावः ; अथवा—आराद्वृत्तिः समीपवर्त्तिनी, अतस्तव
ईदृशं कुलाङ्गनानुचितं चारित्रखण्डनरूपं व्यवहारमित्यर्थः,
द्रष्टुं न क्षमा न सहिष्णुः, अतो नयनचापलं मा कार्षीरिति
भावः। ( "आराद्दूरसमीपयोः" इत्यमरः। अत्र सख्याः कर्त्तव्य-
निर्णयार्थं दूरसमीपोभयार्थकस्य आरात्-शब्दस्य उल्लेखद्वारा
प्रयुक्तेन वाक्येन माता मे दूरवर्त्तिनी, अतः ममेदृशं कर्म
द्रष्टुं न शक्ष्यति तत् निःशङ्कं प्रवर्त्ते इति, किं वा माता मे
समीपस्था, अतः ईदृशं निन्दितं कर्म द्रष्टुं न शक्ष्यति तत्
अस्मात् निवर्त्ते इति नायिकायाः प्रवृत्तिनिवृत्त्योः एकतर-
निश्चयाभावात् सन्देहपर्य्यवसायित्वेन ससंशयदोषः। अस्य च
उभयार्थकशब्दप्रयोगनिबन्धनत्वात् शब्दगतत्वम्। अयञ्च
दोषः अर्थगतोऽपि सम्भवति, स च अर्थबोधानन्तरं वक्त्राद्य-
निश्चयेन ज्ञातव्यः, उदाहरणं यथा—"मात्सर्य्यमुत्सार्य्य
विचार्य्य कार्य्यमार्य्याः समर्य्यादमुदाहरन्तु। सेव्या नितम्बाः

ससंशयस्य गुणत्वम् ।—

ईदृशं संशयायैव यदि वा तु प्रयुज्यते ।
स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा ॥१४१॥

पश्याम्यनङ्गजातङ्क-लङ्घितां तामनिन्दिताम् ।
कालेनैव कठोरेण ग्रस्तां किं नस्त्वदाशया ?॥१४२॥

---

किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ?" ॥ इति । अत्र प्रकरणाद्यभावात् वक्ता शमप्रधानः शृङ्गारप्रधानो वा इति निश्चयाभावात् संशयः । जारं साभिलाषमवलोकयन्तीं मातुस्तदाचरणपरिज्ञानशङ्कया च भीतां नायिकां प्रति सख्या उक्तिः ) ॥ १४० ॥

अस्य कदाचित् गुणत्वमाह, ईदृशमिति ।—यदि वा तु यद्यपि, ईदृशं ससंशयं वाक्यं, संशयाय संशयप्रतिपादनाय एव, प्रयुज्यते व्यवह्रियते, तदा असौ संशयः, अलङ्कार एव स्यात्, तत्र तादृशस्थले, न दोषः, तथा च यत्र संशय एव विवक्षितः तत्र असौ गुण एव, अविवक्षितस्तु दोष एवेति भावः । तत् तस्य उदाहरणं, यथेति—वक्ष्यमाणसूचनार्थम् । ("वा तु" इत्यत्र "जातु" इति पाठो दृश्यते ॥ १४१ ॥

पश्यामीति ।—अनिन्दितां सर्वाङ्गसुन्दरीमित्यर्थः, तां तव कान्तामित्यर्थः, अनङ्गजेन कामकृतेन, आतङ्केन रोगेण, कामपीड़या इत्यर्थः, लङ्घिताम् आक्रान्ताम, अत एव कठोरेण निर्दयेन, कालेन मृत्युना, ग्रस्तामिव कवलितामिव, पश्यामि, त्वदाशया तव प्रत्याशया, नः अस्माकं, किम् ? किं फलम् ? त्वामनासादयन्ती इदानीं कामपीड़या सा म्रियते, अतः तव प्रत्याशया प्रयोजनं नास्तीत्यर्थः । अथवा—अङ्गजेन आतङ्केन

कामार्त्ता घर्मतप्ता वेत्यनिश्चयकरं वचः ।
युवानमाकुलीकर्त्तुमिति दूत्याह नर्मणा ॥ १४३॥

अपक्रमः ।–

बन्धुद्देशानुगुणोऽर्थानामनूद्देशो न चेत् कृतः ।
अपक्रमाभिधानं तं दोषमाचक्षते बुधाः ॥१४४॥

शारीरिकपीड़या, न लङ्घितेति अनङ्गजातङ्कलङ्घिता तां, कठोरेण तीव्रेण, कालेन ग्रीष्मेणेत्यर्थः, यस्तां पश्यामि, त्वदाशया नः किम्? तस्याः शारीरिकी पीड़ा काऽपि नास्ति, केवलं त्वदप्राप्तिनिमित्तचिन्तादिभिरपगतनिद्रा ग्रीष्मकालजनितसन्तापेन सा नितरां पीड्यते इति पूर्वोक्तार्थ एवास्य श्लोकस्य प्रतिपाद्यः किं परार्थ इत्येष संशयः। (स च दूत्या विवक्षित एव। प्रोषितं नायकं प्रति दूत्या उक्तिरियम् ) ॥ १४२ ॥

अत्र च अस्य गुणत्वमुपपादयति, कामार्त्तेति।—दूती युवानम् आकुलीकर्त्तुं नायिकासमीपगमनाय उत्सुकं कर्त्तुं, नर्मणा भङ्ग्या, कामार्त्ता घर्मतप्ता ग्रीष्मार्त्ता वा, इति अनिश्चयकरं सन्देहसङ्कुलम्, इति पूर्वोक्तरूपं, वचः आह, कामपीड़िता ग्रीष्मपीड़िता वा इति निर्णेतुमशक्यतया युवाऽयम् आकुलीभूय तत्समीपं यास्यतीति मनसिकृत्य दूती तादृशं सन्दिग्धं वचनं प्रोवाच इत्यस्य गुणत्वमिति भावः ॥ १४३ ॥

अपक्रमं निरूपयति, उद्देशेति।—अर्थानां वक्तव्यविषयाणाम्, उद्देशानुगुणः उद्देशः आदावुपन्यासः इत्यर्थः, तस्य अनुगुणः अनुकूलः, अन्वययोग्य इत्यर्थः, अनु पश्चात्, उद्देशः उपन्यासः, क्रमानुसारेण विन्यास इत्यर्थः, चेत् यदि, न कृतः, तदा बुधाः तम् अपक्रमः अभिधानं नाम यस्य तथोक्तं, क्रमलङ्घनात्

स्थितिनिर्माणसंहार-हेतवो जगताममी।
शम्भुनारायणाम्भोज-योनयः पालयन्तु वः॥१४५॥

---

अपक्रमाख्यं, दोषम् आचक्षते कथयन्ति। (तथा च, कार्य्य-कारणभूतानामर्थानां यथाक्रममुपन्यास एव गुणः, तल्लङ्घनं दोष एवेति भावः। अयञ्च दोषः शब्दार्थदोषयोरक्रमत्वदुष्क्रमत्वयोरन्यतरस्मिन्नन्तर्भवति, किन्तु तयोर्नात्यन्तपरिहार्य्यत्वम्; यदुक्तं विश्वनाथेन—"इयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः। कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥ अत्र त्वमित्यनन्तरमेव चकारो युक्तः" इति। तथा "देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम्। अत्र गजेन्द्रस्य प्रथमयाचनमुचितम्" इति। इयमित्यादौ परामृश्यमाणवाक्यानन्तरं प्रयोक्तव्यस्य चकारस्यान्यत्र प्रयुक्ततया क्रमो लङ्घितोऽपि व्यवहितस्यापि योजनया अन्वयनिर्बाधात् नातिदोषं भजते। देहि मे इत्यादौ च प्रधानस्य प्रथमप्रार्थनमुचितं, तद्दाने दातुरसामर्थ्ये ततो न्यूनं याचनीयमिति क्रमः, इह तु तल्लङ्घनात् अपक्रमत्वं, किन्तु अन्वयनिर्बाधत्वेन नात्यन्तपरिहार्य्यत्वम् इत्युभयत्रापि अन्वयस्य बाधाभावान्नात्यन्तपरिहार्य्यतेति विभाव्यम्। अस्य तु क्रमिकाणां क्रमिकैरेवान्वय इति नियमलङ्घनादन्वयबोधबाधकत्वेनात्यन्तपरिहार्य्यत्वमिति विशेषः)॥१४४॥

अपक्रमं दर्शयति, स्थितीति।—जगतां स्थितिः पालनं, निर्माणं सृष्टिः, संहारः ध्वंसः, तेषां हेतवः कारणानि, कर्त्तारः इत्यर्थः, अमी एते, शम्भुनारायणाम्भोजयोनयः शिवविष्णुब्रह्माणः, वः युष्मान्, पालयन्तु रक्षन्तु। (अत्र प्रथमोद्दिष्टानां स्थितिनिर्माणसंहाराणां यथाक्रममन्वये कर्त्तव्ये नारायण-

अपक्रमस्यादोषत्वम्।—

यत्र सम्बन्धविज्ञान-हेतुकोऽपि कृतो यदि।
क्रमलङ्घनमप्याहुः सूरयो नैव दूषणम्॥ १४६॥
बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु।
आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः॥१४७॥

...जयोर्निशम्भव इति वक्तुमुचितं, परन्तु तद्विपरीतमुक्तमिति ...ान्वयबोधविघटकत्वात् अपक्रमता)॥ १४५॥

अस्यादोषत्वमपि क्वचिदित्याह, यत्र इति।—सम्बन्धस्य ...न्वयस्य, विज्ञानं विशेषेणावबोध एव, हेतुर्यस्य तादृशः, ...त्रः विशिष्टसम्बन्धबोधायैव तादृशक्रमलङ्घनप्रयास इत्यर्थः, ...यपि कृतः, कविनेति शेषः, तदा सूरयः विद्वांसः, क्रमलङ्घन...पि दूषणं दोषावहं, नैव आहुः॥ १४६॥

अपक्रमस्यादोषत्वमुदाहरति, बन्धुत्याग इति।—बन्धु...त्यागः स्वजनपरिहारः, तनुत्यागः देहाभावः, देशत्यागः ...देशावस्थितिः, इति त्रिषु विषयेषु मध्ये आद्यन्तौ बन्धुत्याग...शत्यागौ, आयताः दीर्घाः, क्लेशाः ययोः तौ, मध्यमस्तनु...त्यागस्तु, क्षणिकज्वरः क्षणमात्रसन्तापकर इत्यर्थः, वरं तनु...त्यागः श्रेयान् न च पुनः बन्धुत्यागः देशत्यागो वा इति भावः। अत्र यथाक्रममुद्दिष्टेषु बन्धुत्यागादिषु आयतक्लेशावित्यनेन ...ादिपदगृहीतस्य बन्धुत्यागस्यान्वयित्वे तदुत्तरोद्दिष्टस्य तनु...त्यागस्यान्वयायोगात् तमुल्लङ्घ्य तदन्तस्य देशत्यागस्यान्वयित्व...मिति क्रमलङ्घनं सम्बन्धविज्ञानहेतुत्वात् युज्यते एव इति न ...दोषाय, प्रत्युत तनुत्यागात् बन्धुत्यागदेशत्यागयोः गरीयस्त्वेन ...क्तुरभिमतत्वात् गुण एव इत्यवधेयम्)॥ १४७॥

शब्दहीनत्वम् ।—

शब्दहीनमनालक्ष्य-लक्ष्यलक्षणपद्धतिः ।
पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति ॥१४८॥

शब्दहीनं निरूपयति, शब्दहीनमिति ।—अनालक्ष्य अदृश्या, अपरिज्ञेया इति यावत्, तस्या अशास्त्रीयत्वादिति भावः, लक्ष्यस्य सजातीयोदाहरणान्तरस्य, तथा लक्षणस्य अनुशासनस्य, सूत्रकोषधातुपाठादिरूपनियामकस्येत्यर्थः पद्धतिः नियमः यत्र तादृशः अगणितानुशासन इत्यर्थः, तत् अशिष्टानाम् अज्ञानाम्, इष्टः अनवबोधविजृम्भित इत्यर्थः पदानां पदयोः पदस्य वा प्रयोगः व्यवहारः, कदभिहित भावत्वात् प्रयुज्यमानं पदमित्यर्थः, शब्दहीनं शब्देन अनुशासन शास्त्रेण हीनं, तदाख्यदोषवान् इत्यर्थः, सुधीभिरप्रयुक्तनय निष्पादकानुशासनाभावाच्च यस्य सजातीयोदाहरणान्तर नास्ति तादृशपदप्रयोगः शिष्टाव्यवहृतपदप्रयोगश्च शब्द-हीनाख्यदोषवानिति निष्कर्षः । ( ततश्च यादृशपदस्यानुशासनं सजातीयप्रयोगान्तरञ्च न विद्येते तादृशं पदं तथा सत्यप्यनु-शासने तत्तल्लिङ्गादिमत्त्वेन तत्तदर्थकत्वेन वा शिष्टैरप्रयुक्तञ्च पदं शब्दहीनाख्यदोषवदिति लक्षणम् ) । किञ्च शिष्टानामुक्तौ अनुशासनविरुद्धत्वमपि न दोषायेत्याह, शिष्टेति ।—शिष्टेष्टस्तु शिष्टैः साधुभिर्बुधैः, इष्टः अभिमततया व्यवहृतस्तु, न दुष्यति न दोषाय भवति । ( पदानां नित्यत्वात् तद्व्युत्पत्त्यर्थमेवानु-शासनं पाणिन्यादिभिः कृतमिति शिष्टानामुक्तौ सूत्राणामभावे अनुशासनकारिण एव दण्डनीयाः, न तत्र दोष इति भावः । गोयीचन्द्रेणापि "नित्यानां पदानां प्रतिपत्त्यर्थं प्रकृतिप्रत्यय-विभागपरिकल्पनं शास्त्रेण क्रियते" इत्युक्ततया अनुशासनस्य

अवते भवते बाहुर्महीमर्णवशक्करीम् ।
महाराजन्नजिज्ञासा नास्तीत्यासां गिरां रसः॥१४९॥

ष्टव्यवहृतपदात् परत्वमेव प्रतिपादितम् । ततश्चानुशासना- वेऽपि बहुभिः प्रयुक्तपदप्रयोगो नास्य दोषस्य विषयः, तथा त्यप्यनुशासने तादृशः पदप्रयोगो यदि कैरपि न कृतः, तत्- योगस्तु दोष एवेति बोध्यम् । शब्दशास्त्रविरुद्धपदप्रयोगे अन्यैरसाधुत्वमित्युक्तं, तथा च वामनः,—"शब्दस्मृतिविरुद्ध- साधु" ( का० सू० वृ० २ अधि० १ अ० ५ सू० ) इति । प्रयुक्तासमर्थदोषयोरप्यन्यैरुक्तयोरनेनैव सङ्ग्रहः कृतः इति क् ] ॥ १४८ ॥

शब्दहीनमुदाहरति, अवते इति ।—हे महाराजन् ! भवते वतः, बाहुः भुजः, अर्णवः सागरः, शक्करी मेखला यस्याः ां ससागरामित्यर्थः, ( "शक्करी छन्दसां भेदे नदीमेखलयोरपि" ति मेदिनी ) महीम् अवति पालयति, अजिज्ञासा संशया- वात् अत्र जिज्ञासा न विद्यते, सत्यमेवैतदित्यर्थः, इत्यासां गुक्तानामीदृशीनां, गिरां वाचां, रसः माधुर्य्यानुगुणः स्वादः, नास्ति, प्रोक्तपदानामसाधुत्वात् अन्वयबाधप्रति- त्वेन शृङ्गाररसानुप्राणितराजविषयकरतिभावस्यानुद्गमादिति ावः । ( अत्र अवते इति परस्मैपदिनः अवधातोरात्मनेपदं, वते इती षष्ठीस्थाने चतुर्थी, महाराजन्निति कर्मधारय- मासे टच्-प्रत्ययाभावः, अर्णवशक्करीमित्यत्र बहुव्रीहिसमासे -प्रत्ययाभावश्च सर्वमेतत् अनुशासनविरुद्धम् अशिष्टेरप- ुक्तम् । अन्यच्च शक्करीशब्दः मेखलार्थे कैरपि न व्यवहृतः तश्च अप्रयुक्तत्वात् प्रयुक्तमिदं पदं श्रोतृबुद्धिं व्याकुलयत् न्वयबोधव्याघातकं भवति ) ॥ १४९ ॥

शब्दहीनस्यादोषत्वम् ।—

दक्षिणाद्रेरुपसरन् मारुतश्चूतपादपान् ।
कुरुते ललिताधूत-प्रवालाङ्कुरशोभिनः ॥ १५० ॥
इत्यादि शास्त्रमाहात्म्य-दर्शनालसचेतसाम् ।
अपभाषणवद्भाति न च सौभाग्यमुज्झति ॥१५१॥

अदूषितं शब्दहीनं दर्शयति, दक्षिणाद्रेरित्यादि।—दक्षिणाद्रेः मलयपर्वतस्य, उपसरन् समीपं यान्, मलयाचलं गच्छन् इत्यर्थः, मारुतः वायुः, चूतपादपान् तत्रत्यान् आम्रतरून्, ललितं सुन्दरं यथा तथा, मृदुलतया इत्यर्थः, आधूताः कम्पिताः, ये प्रवालाङ्कुराः नवपल्लवप्ररोहाः, अभिनवोद्गत-पल्लवा इत्यर्थः, तैः शोभिनः शोभाशालिनः, कुरुते। इत्यादि पूर्वोक्तरूपं वाक्यं, शास्त्रस्य अनुशासनस्य, यत् माहात्म्यं निगूढार्थं इत्यर्थः, तस्य दर्शने अलसं विमुखं, चेतो येषां तथाभूतानाम्, आलस्यवशात् व्याकरणादिशास्त्रालोचनापराङ्मुखाणां विदुषाम् इत्यर्थः, अपभाषणवत् अपशब्दवत्, भाति प्रतीयते, न तु अपशब्दरूपेण इत्यर्थः। [ अयं भावः,—कर्मणि द्वितीयेति अनुशासनबलेन उपसरणक्रियायाः कर्मपदस्य दक्षिणाद्रे-रित्यत्र द्वितीया भवितुमर्हत्येव, परं तदकरणेऽपि नात्र दोषः, सर्वत्र सम्बन्धविवक्षया षष्ठीविधानस्य अदुष्टत्वेन शिष्टानुमोदि-तत्वात्; उक्तञ्च दीक्षितेन—"कर्मादीनामपि सम्बन्धमात्र-विवक्षायां षष्ठ्येव" इति। किञ्च शिष्टैरुक्तेषु प्रयोगेषु अनु-शासनाभावेऽपि न दोषः; यथा—"लज्जालोलं वलन्तौ" "चेतः परं वलति शैलवनस्थलीषु" इत्यादौ वलेर्धातोरात्मने-पदित्वात् परस्मैपदित्वमनुशासनविरुद्धमपि न दुष्टम्; अत

यतिभ्रंशः।—

श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा॥ १५२॥

एव वामनेन तत्सिद्धये क्वचिदनुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन समर्थितम्; यथा—"खलेरात्मनेपदमनित्यं ज्ञापकात्" ( का० सू० वृ० ५ अधि० २ अ० ३ सू० ) इति ] द्वितीयाया अभावेऽपि श्रोतॄणां न वैरस्योदय इत्याहुः, न चेति।—सौभाग्यञ्च लालित्यञ्च, शिष्टसम्मतत्वात् प्रयोगसौष्ठवञ्चेत्यर्थः, न उज्झति न त्यजति, तथा च ईदृशस्थले श्रोतृविरागो दोष एवेति भावः। ( वायुना कम्पितस्य मलयपर्वतीयचूततरोर्वर्णनमिदम्। दक्षिणाद्रेरुपसर्पन्नित्यस्य दक्षिणाद्रेः मलयाचलात् उपसर्पन् आगच्छन्नित्यर्थकत्वे न कश्चित् पर्य्यनुयोग इति बोध्यम् )॥ १५०॥ १५१॥

यतिं तद्भ्रंशञ्च निरूपयति, श्लोकेष्विति।—श्लोकेषु पद्येषु, न तु गद्येषु इति भावः, नियतं छन्दःशास्त्रैः निरूपितं, स्थानं यस्य तादृशं, पदस्य सुप्तिङन्तरूपस्य, छेदं विरतिं, यतिं विदुः जानन्ति, बुधा इति शेषः, पदान्ते जिह्वेष्टविश्रामस्थानं यतिरिति निष्कर्षः; ( उक्तञ्च—"यतिर्जिह्वेष्टविश्राम-स्थानं कविभिरुच्यते" ) तदपेतं तस्याः विच्युतम्, अत एव श्रवणयोः श्रोत्रयोः, उद्वेजनम् असुखजनकम् इत्यर्थः, यतिभ्रष्टं यतिभ्रष्टाख्यदोषवदित्यर्थः, पदमिति शेषः, यत्र विरामे श्रुतिकटुरेव भवति श्लोकः, तत्र दोष इति भावः; [ अत एवोक्तं वामनेन—"विरसविरामं यतिभ्रष्टम्" ( का० सू० वृ० २ अधि० २ अ० ३ सू० ) इति ]॥ १५२॥

स्त्रीणां सङ्गीतविधिमयमादित्यवंश्यो नरेन्द्रः
पश्यत्यक्लिष्टरसमिह शिष्टैरमेत्यादि दुष्टम् ।
कार्य्याकार्य्याण्ययमविकलान्यागमेनैव पश्यन्
वश्यामुर्वीं वहति नृप इत्यस्ति चैवं प्रयोगः॥१५३॥

स्त्रीणामिति ।—अयम् आदित्यवंश्यः सूर्य्यवंशीयः, नरेन्द्रः राजा, शिष्टैः सज्जनैः, अमा सह, अक्लिष्टः मनोज्ञः, रसः स्वादः, माधुर्य्यमित्यर्थः, यस्य तादृशं, स्त्रीणां सङ्गीतविधिं सम्यक् गीतविधानं, नाट्यगीतवाद्यत्रयमित्यर्थः, इह अत्र सभायां, पश्यति, इत्यादि एवमादिकं पद्यं, दुष्टं यतिभ्रष्टत्वादनादरणीयमित्यर्थः ; [ तथा हि सप्तदशाक्षरे मन्दाक्रान्तावृत्ते अस्मिन् आदितश्चतुर्थे ततः षष्ठे ततः सप्तमे यतिर्निवेशनीया ; तथा चोक्तं—"मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति । अत्र तु चतुर्थादिवर्णानां पदान्तगतत्वात् यतिभ्रष्टता ; तथा च "स्त्रीणां सङ्गी" इति चतुर्थवर्णे, तथा "मयमा" इति दशमवर्णे च विरत्यभावेन वैरस्यात् यतिभ्रष्टत्वं, तच्च सङ्गीत इति प्रातिपदिकांशगतमिति वामनोक्तं नामभागभेदोदाहरणमिदमित्यपि बोध्यम् । वामनस्तु धातुनामभागत्वेनास्य द्वैविध्यमाह ; यथा—"तद्धातुनामभागभेदे स्वरसन्ध्यकृते प्रायेण" (का० सू० वृ० २ अधि० २ अ० ४ सू० ) इति । धातुभागभेदे मन्दाक्रान्तायां यथा—"एतासां राजति सुमनसां दाम कण्ठावलम्बि" इति । अत्र 'एतासां रा' इत्यत्र राजधातोरंशे प्राप्तस्य विरामस्याभावात् वैरस्यमिति धातुभागभेदत्वम् । लक्षणेऽस्मिन् पदभागभेदे इति लाघवं विहाय धातुनामग्रहणेन धातुनामभागव्यतिरिक्ते प्रकृतिप्रत्ययमध्यविरामे यति-

लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा।
तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते ॥१५४॥

भंगो न भवेदिति सूच्यते ; तेन "शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः" इत्यादौ "शोभां पुष्य" इत्यत्र विरामो न वैरस्यमावहति, धातुभागस्य पुष इत्यन्तत्वात्। कण्ठाभरणे तु 'शोभाम्' इत्यादि प्रथमपादः, "किञ्चिद्भावालसमसरल-प्रेक्षितं कामिनीनाम्" इति द्वितीयः पादः, "कार्य्याकार्य्या-ण्ययम्" इत्याद्यपरार्द्धमित्येवमुदाहृतम्। अस्य च क्वचिददोष-त्वमाह, कार्य्येति।—अयं नृपः आगमेनैव नीतिशास्त्रेणैव, न तु स्वेच्छाचारितयेति भावः, कार्य्याकार्य्याणि कर्त्तव्या-कर्त्तव्यानि, अविकल्पानि अव्याहतानि, पश्यन् वश्यां वशता-मापन्नाम्, उर्वीं पृथिवीं, वहति पालयति इत्यर्थः, इति एवं प्रयोगश्च अस्ति अदुष्टत्वेन वर्त्तते इत्यर्थः, ('कार्य्याकार्य्याणि' इत्यत्र कार्य्या इत्यस्य प्रातिपदिकभागान्ततया नामभागभेद-गतस्य तस्याप्राप्तेरिति भावः ; तदुक्तं कण्ठाभरणेऽपि—"स्वर-सन्ध्यकृते प्रायो धातुभेदे न दृश्यते। नामभेदे च शेषेषु न दोष इति सूरयः॥" इति। किञ्च 'ण्य' इत्यादिस्थले स्वरसन्धि-श्रयणे पदमध्ये 'र्य्या' इत्यादौ यतिभंगस्य अदोषत्वमवगन्तव्यम् ; यदुक्तं—"क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः पदान्ते सा शोभां श्रयति पदमध्ये त्यजति च। पुनस्तत्रैवासौ स्वर-विहितसन्धिः श्रयति तां यथा कृष्णः पुष्णात्यतुलमहिमा मां करुणया॥" इति। स्त्रीणां सङ्गीतप्रभृतिषु तु एतल्लक्षणाभावात् दोष एव इति) ॥१५३॥

उभयत्रापि पदमध्ये विश्रान्तिरूपस्य उक्तविधयतिभंगस्य एकत्र सदोषत्वम् अन्यत्र अदोषत्वञ्च प्रतिपादयन्ति लुप्ते

तथाऽपि कटु कर्णानां कवयो न प्रयुञ्जते।
ध्वजिनो तस्य राज्ञः केतूदस्तजलदेत्यदः ॥१५५॥

इति।—पदस्य सुबन्त-तिङन्तरूपस्य, अन्ते शेषवर्णे, लुप्ते मधु पठ इत्यादौ विभक्तिलोपे जाते इत्यर्थः, ( अत्र पदान्ते इत्येकवचनमविवक्षितं राजा इत्यत्र द्वयोरपि लोपे अवशिष्टस्य राजभागस्य पदत्वस्वीकारात् ) शिष्टस्य अवशिष्टस्य प्रकृतिभागरूपस्य पदांशस्य, यथा पदत्वं निश्चितं सिद्धान्ति, निःसन्दिग्धं शिष्टैः पदत्वेन स्वीकृतमित्यर्थः, तथा सन्धिः स्वरद्वयसम्मेलनं, तत्कृतो विकारः दीर्घ-य-व-प्रभृतिवर्णान्तरोत्पत्तिरूपः, तादृशविकारयुक्तव्यञ्जनमिति यावत्, अन्ते यस्य तत्, पदमध्यमपीति शेषः, पदमेव पदान्त एव, इति वर्ण्यते कविभिरुच्यते। ( ततश्च 'कार्य्याकार्य्याण्ययम्' इत्यादौ 'ण्य' इत्यादिस्थले स्वरसन्धिकृतयकारादिविकारयुक्तवर्णान्ते, 'र्य्या' इत्यादौ पदमध्येऽपि यतिर्न दोषावहा। तथा चतुर्थपादेऽपि पादस्य मध्यभागे निविष्टकेवलस्वरत्वात् यतिभ्रंशेऽपि स्वरसन्धिकृतत्वादविभिन्नमधातुशरीरत्वाच्च न दोषत्वम्। एतदुक्तमेव प्राक्। एतद्विपरीत्ये दोष एव, यथा स्त्रीणामित्यादि ) ॥ १५४ ॥

स्वरसन्धावपि क्वचिद्दोष दर्शयति, तथाऽपीति।—तथाऽपि स्वरसन्धिना पदमध्यस्य पदान्तत्वस्वीकारेऽपि, कवयः कर्णानां कटु श्रोत्रासुखकरं, तस्य राज्ञः ध्वजिनी सेना, केतुभिः ध्वजैः, उदस्ता उत्क्षिप्ताः, अत्युन्नतत्वादिति भावः, जलदा मेघा यया तादृशी, इत्यदः एवमिदं पद्यं, न प्रयुञ्जते न व्यवहरन्ति। ( प्रकृते च केतूदस्तेत्यत्र "तू" इति स्वरसन्धिना कृतदीर्घपदान्तमपि 'के' इत्यक्षरं यतिस्थानपातितया श्रोतृवैरस्यं जनयतीति स्वरसन्धावपि श्रुतिकटुर्यतिभ्रंश एवेति भावः ) ॥ १५५ ॥

क्रमभङ्गः।—

वर्णानां न्यूनताऽऽधिक्ये गुरुलघ्वयथास्थितिः।
तत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः॥ १५६॥
इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता।
सहकारस्य किसलयान्यार्द्राणीत्यधिकाक्षरम्॥ १५७॥

भिन्नवृत्तं निर्दिशति, वर्णानामिति।—यत्रेत्यूह्यम्, उत्तरत्र तत्रेति दर्शनात्; यत्र पद्ये वर्णानां वर्णस्य वर्णयोः वर्णानां वेत्यर्थः, न्यूनता आधिक्यं वा, तथा गुरूणां लघूनां वा वर्णानाम्, अयथास्थितिः अनियमेन विन्यासः, तत्र पद्ये, तत् भिन्नवृत्तं भिन्नं भग्नं, वृत्तं छन्दः, छन्दोभङ्ग इत्यर्थः, स्यात्, छन्दःशास्त्रलक्षणाच्युततया यद्वृत्तं कृतं तत् वृत्तभङ्गदोषवदिति निष्कर्षः; [तदुक्तं वामनेन—"स्वलक्षणाच्युतवृत्तं भिन्नवृत्तम्" (का० सू० वृ० २ अधि० २ अ० २ सू०) इति] एष वृत्तभङ्गाख्यः, दोषः सुनिन्दितः कवयितुश्छन्दोऽनभिज्ञतया उपहासास्पदत्वज्ञापनादिति भावः। (प्रकाशकारादिभिश्च दोषोऽयं हतवृत्तसंज्ञया अभिहितः, तच्च हतवृत्तं लक्षणानुसरणेऽपि अश्रव्यत्वरूपम्, अप्राप्तगुरुभावान्तलघुरूपं, रसाननुगुणरूपञ्चेति त्रिविधं बोध्यम्; तत्रोदाहृतं यथा—"अमृतममृतं कः सन्देहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्। सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात्॥" इति)॥१५६॥

न्यूनताऽऽधिक्ये उदाहरति, इन्दुपादा इति।—शिशिराः शीतलाः, इन्दोश्चन्द्रस्य, पादाः किरणाः, ("पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः) स्पृशन्ति, इत्यत्र ऊनवर्णता प्रथमे पादे अष्टाक्षरे वक्त्रे समाक्षराणीति एको वर्णः न्यून इत्यर्थः,

कामेन बाणा निशिता विमुक्ता
मृगेक्षणास्वित्ययथागुरुत्वम् ।
स्मरस्य बाणा निशिताः पतन्ति
वामेक्षणास्वित्ययथालघुत्वम् ॥ १५८ ॥

सहकारस्य आम्रस्य, किसलयानि पल्लवानि, आर्द्राणि, इति अत्रापि, अधिकाक्षरं तृतीये पादे अष्टाक्षरे वक्तव्ये नवाक्षराणीति एको वर्णोऽधिक इत्यर्थः ॥ १५७ ॥

गुरुलघुयथास्थितिमुदाहरति, कामेनेति ।—कामेन मृगेक्षणासु निशिता बाणा विमुक्ताः, इत्यत्र, अयथागुरुत्वं 'का' इति प्रथमपादस्यप्रथमवर्णस्य लघुत्वनियमेऽपि दीर्घकरणात् इति बोध्यम् ; ( तथा च, अत्र पूर्वार्द्धे उपेन्द्रवज्रा वृत्तम्, "उपेन्द्रवज्रा जतजास्ततो गौ" इति लक्षणात्, ततश्च जगणे प्रथमं निवेश्ये का इति गुरुवर्णो निवेशितः, जगणश्च "जो गुरुमध्यगतः" इत्युक्तत्वात् आद्यन्तौ लघू मध्यवर्णो गुरुरित्येवं वर्णत्रयात्मक इति, एवञ्च प्रथमवर्णस्य दीर्घत्वादिन्द्रवज्रालक्षणाक्रान्तः प्रथमपादः, द्वितीयपादस्तु उपेन्द्रवज्रालक्षणात्मक इति इन्द्रवज्रोपेन्द्रवज्रयोः सङ्करादुपजाति वृत्तमिदम् । नन्वत्र यद्यपि प्रथममिन्द्रवज्रापादाङ्गीकारे प्रथमवर्णस्य दीर्घत्वमेव युज्यते, न च अयथागुरुत्वदोषोऽपि सम्भवति, तथाऽपि उपजातिवृत्तानां प्रथमपादाक्षराणां लघुत्वनियमादयथागुरुत्वं सम्भवत्येव ; उक्तञ्च यथा—"उपजातिविकल्पानां सिद्धो यद्यपि सङ्करः । तथाऽपि प्रथमं कुर्य्यात् पूर्वपादाक्षरं लघु ॥ गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाग्रतः । करोति प्रथमं स्थूलं किञ्चित् कर्णकदर्थनाम् ॥" इति । अत एव "अस्त्युत्तरस्याम्" इत्यादि-

महाकविप्रयोगोऽपि दोषोदाहरणे दर्शितः इति बोध्यम्) तथा, स्मरस्य निशिता बाणा वामेक्षणासु पतन्ति इत्यत्र, लघुत्वम्; (तथा च, उत्तरार्द्धे इन्द्रवज्रा वृत्तं "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात्, ततश्च तगणे प्रथमं निवेश्ये "स्म" इति लघुवर्णो निवेशितः, तगणश्च "अन्त्यलघुस्तः" इत्युक्तत्वात् प्रथमद्वितीयौ गुरू अन्त्यश्च लघुरित्येवं वर्णत्रयात्मक इति बोध्यम्। अत्र आदाविन्द्रवज्रा पश्चादुपेन्द्रवज्रा इत्येवमुपजातिच्छन्द इदमिति स्वीकृते नायं दूषणावसरः। वस्तुतस्तु उपेन्द्रवज्रायाः इन्द्रवज्रायाः वा उदाहरणमिदमिति प्रकल्प्य वृत्तभङ्गत्वं दर्शितम्। दिङ्मात्रमिदं, शुद्धोदाहरणं यथा— "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः॥" इति। अत्र पञ्चमवर्णस्य लघोः स्थाने गुरोः करणात् वृत्तभङ्गः। यथा वा—"अयि! पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्" इति। वैतालीययुग्मपादे "नाश्च समे स्युर्नो निरन्तराः" इति समपादे लघ्वक्षरषट्कस्य नैरन्तर्य्यं निषिद्धम्, अत्र तु "अविरलसुम" इति षडपि लघ्वक्षराणि प्रयुक्तानि। केचित्तु—द्वितीयादिपादत्रयस्य लघ्वादित्वेन गुर्वादित्वेन वा साम्यमभिप्रेत्य दूषणद्वयप्रदर्शनमिदम्, अन्यथा अयथागुरुत्वोदाहरणे अयथालघुत्वम् अयथालघुत्वोदाहरणे च अयथागुरुत्वमपि सम्भवति, पादद्वयादौ द्वयोरपि गुरुलघ्वोः सत्त्वादिति उक्ता उपेन्द्रवज्रेन्द्रवज्रयोः सङ्करादुपजात्याख्यं छन्दोऽन्तरं ये न मन्यन्ते तेषां मते दूषणद्वयमिदमित्याहुः; तथा "कामिन" इत्यत्र "स्वभुवा" "स्मरस्य" इत्यत्र "मदन" इति पाठं प्रकल्प्य पूर्वत्र तृतीयस्य गुरुत्वम् उत्तरत्र द्वितीयस्य लघुत्वमयथाप्रयुक्तमिति सङ्गमयन्ति च। किञ्च नवीनैर्यदुक्तम्—अप्रामाणिकभावाद्यालम्बनं

विसन्धित्वम्।—

न संहितां विवक्षामीत्यसन्धानं पदेषु यत्।
तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥१५९॥

तत्रापि अयथालघुत्वं बोद्धव्यं, यथा—"विकम्पितमञ्जकारभार-हारिपरिमल एष समागतो वसन्तः" इत्यादौ भारहारि इत्यत्र 'रि' इत्यस्य लघुवर्णस्य प्रथमपादान्तत्वात् गुरुत्वाभावः इति वृत्तभङ्गः, पादान्तलघोर्गुरुत्वन्तु द्वितीयचतुर्थपादविषयत्वेनाभिहितत्वात् इत्यपि सुधीभिः ध्येयम्)॥१५८॥

विसन्धिकं निर्दिशति, नेति।—संहितां वर्णयोर्मिलनरूपां सन्धिं, न विवक्षामि न वक्तुमिच्छामि, तद्विधायकसूत्रे सत्यपि न करोमीति भावः, (एतेन "सन्धिस्तु पुरुषेच्छया" इति "सैवान्यत्र विभाषितः" इत्यादिकमन्येषां मतं प्रत्युक्तम्) इति इत्यभिप्रेत्य, पदेषु पदसंयोजकवर्णेषु, यत् असन्धानम् असंयोजनं, तत्तत्सूत्रेण सन्ध्यभाव इत्यर्थः, तत् विसन्धि विगतः सन्धिः सन्धिसूत्रेण परस्परमिलनं यत्र तत् तादृशं, विसन्ध्याख्य-दोषवत् इत्यर्थः, वाक्यमिति शेषः, (पदमिदं वाक्यविशेषणम्, अन्यथा क्लीवत्वानुपपत्तेरिति बोध्यम्) इति निर्दिष्टं कथितमित्यर्थः। वक्तुरिच्छाकृतसन्ध्यभावस्यैव दोषत्वमिति यदुक्तं तदेव स्पष्टयति, नेति।—प्रगृह्यं सन्धिनिषेधकानुशासन-विशेषः, तदादिः तत्प्रभृतिरेव, (आदिना अनुकरणादीनां परिग्रहः) हेतुः यत्र तत्, सन्धिसूत्रेषु यत्र सन्धिर्निषिद्धः इत्यर्थः, न तत्र विसन्धि दोषो न भवति इत्यर्थः। (तत्र प्रगृह्यहेतुको यथा—अमी ईशा इत्यादि। असिद्धिहेतुको यथा—"तत उदित उदारहारिद्युतिः" इत्यादि। अत्र "लोपः

मन्दानिलेन चलता अङ्गनागण्डमण्डले ।
लुप्तमुद्भेदि घर्माम्भो नभस्यस्मद्वपुष्यपि ॥ १६० ॥

विसन्धिदोषः ।—

मानेर्ष्ये इह शीर्य्येते स्त्रीणां हिमऋतौ प्रिये ।
आसु रात्रिष्विति प्राज्ञैराम्नातं व्यस्तमीदृशम् ॥ १६१ ॥

लोपस्य "आद्गुणः" ( ६।१।८७ पा० ) इत्यनेन प्राप्तं गुणं प्रति "पूर्वत्रासिद्धम्" ( ८।२।१ पा० ) इत्यनेनासिद्धिविधानादसिद्धि-हेतुकोऽयं विश्लेषः। प्रगृह्यादिहेतुकस्य सन्ध्यभावस्य सकृत् प्रयोगे एव दोषाभावः, असकृत् प्रयोगे तु बन्धशैथिल्यनिबन्धनश्रवणो-द्वेजकत्वात् दोष एव। अत्र विश्वनाथः यथा—"दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते" एवंविधसन्धिविश्लेषस्य असकृत् प्रयोग एव दोषः। अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयात् सन्धि-विश्लेषस्य तु सकृदपि ; यथा—"वासवाशामुखे भाति इन्दु-श्चन्दनबिन्दुवत्" इति। तेन तु सन्धौ जुगुप्साव्यञ्जकाश्लीलत्व-कष्टत्वयोः यद्दोषत्वमुक्तं, तत्तु शाब्दबोधाप्रतिकूलतयैव नास्याभि-मतम् ; तच्च दर्शितं यथा—"चलण्डामरचेष्टितम्" अत्र सन्धौ लण्डा इति पदस्य जुगुप्साव्यञ्जकमश्लीलत्वम्। "उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः" अत्र सन्धौ कष्टत्वम् ] ॥ १५९ ॥

विसन्धिदोषमुदाहरति, मन्दानिलेनेति।—नभसि आकाशे, चलता प्रवहता, मन्दानिलेन अङ्गनायाः गण्डमण्डले कपोलदेशे, अस्मद्वपुषि अस्माकं शरीरेऽपि, उद्भेदि उत्पन्नं, घर्माम्भः स्वेदजलं, लुप्तम् अपनीतम्। ( अत्र चलता इत्याकारस्य अङ्गनेत्यकारेण सह दीर्घत्वविधायकसूत्रे सत्यपि केवलं वृत्तभङ्गभयेन सन्धिर्न कृत इति विसन्धिदोषः ) ॥ १६० ॥

प्रगृह्यादिहेतुकं सन्ध्यभावं दर्शयति, मानेर्ष्ये इति।—इह

देशकालकलालोकन्यायागमविरोधानि।—

देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्त्तवः।
नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥१६२॥

हिमर्त्तौ हेमन्ते, आसु वर्त्तमानासु. रात्रिषु हेमन्तनिशासु इत्यर्थः, प्रिये प्रणयिनि, स्त्रीणां मानेर्ष्ये मानः प्रणयकोपः, ईर्ष्या नायिकान्तरासङ्गजनितः कोपविशेषश्च ते, शीर्य्येते शीर्णे भवतः, नश्यत इत्यर्थः, इति अत्र स्थले, ईदृशं व्यस्तं सन्ध्यभावः, प्राज्ञैः सूत्रकारैः पाणिनिः, आम्नातं कथितम्। [ तथा च, मानेर्ष्ये इह इत्यत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११ पा०) इति सूत्रेण द्विवचनान्तस्य एकारस्य सन्धिर्निषिद्धः, तथा हिमर्त्तौ इत्यत्र "ऋत्यकः" (६।१।११८ पा०) इति सूत्रेण ऋकारे परे अकारस्य विकल्पेन सन्धिर्निषिद्धः इति बोध्यम् ] ॥ १६१ ॥

अथ देशादीनां विरोधं निरूपयिष्यन् तेषां लक्षणानि प्रथमं निर्दिशति, देश इति।—अद्रिः पर्वतः, वनं, राष्ट्रं राज्यम्, इत्येवमादिर्देशः, (आदिपदेन समुद्रादीनां ग्रहणम्) रात्रिर्दिवा ऋतवश्च कालः, (बहुवचनात् मासवत्सरादीनां ग्रहणम्) कामार्थसंश्रयाः कामस्य अभिलाषस्य, अर्थस्य तौ संश्रयौ जनकत्वेनाश्रयभूतौ इत्यर्थः, येषु तथोक्ताः, कामसाधकाः अर्थसाधकाश्च, नृत्यगीतप्रभृतयः (प्रभृतिशब्देन वादित्रादिपरिग्रहः) कलाः तन्त्रोक्ताः चतुःषष्टिप्रकाराः शिल्पविद्याविशेषाः; (ताश्च अस्मत्पितामहपादकृतवाचस्पत्याभिधाने कलाशब्दे दर्शिताः, यथा—"गीतादिविद्याभेदे, सा च चतुःषष्टिविधा शैवतन्त्रोक्ता, यथा—गीतं वाद्यं नृत्यं नाट्यम् आलेख्यं विशेषकच्छेद्यं तण्डुलकुसुमबलिविकाराः पुष्पास्तरणं

चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता ।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः॥१६३॥

दशनवसनाङ्गरागाः मणिभूमिकाकर्म शयनरचनम् उदक-वाद्यम् उदकघातः चित्रायोगाः माल्यग्रथनविकल्पाः केश-शेखरापीड़योजनं नेपथ्ययोगाः कर्णपत्रभङ्गाः गन्धयुक्तिः भूषणयोजनम् इन्द्रजालं कौचुमारयोगाः हस्तलाघवं चित्र-शाकापूपभक्ष्यविकारक्रिया पानकरसरागासवयोजनं सूची-वापकर्म वीणाडमरुकसूत्रक्रीड़ा प्रहेलिका प्रतिमा दुर्वचक-योगाः पुस्तकवाचनं नाटिकाख्यायिकादर्शनं काव्यसमस्यापूरणं पट्टिकावेत्रवाणविकल्पाः तर्क्कर्माणि तक्षणं वास्तुविद्या रूप्यरत्नपरीक्षा धातुवादः मणिरागज्ञानम् आकरज्ञानं वृक्षायुर्वेदयोगाः मेषकुक्कुटलावकयुद्धविधिः शुकसारिका-प्रलापनम् उत्सादनं केशमार्जनकौशलम् अक्षरमुष्टिकाकथनं म्लेच्छितकविकल्पाः देशभाषाज्ञानं पुष्पशकटिकानिमित्तज्ञानं यन्त्रमातृका धारणमातृका सम्पाठ्यं मानसी काव्यक्रिया क्रियाविकल्पाः छलितकयोगाः अभिधानकोषच्छन्दोज्ञानं वस्त्रगोपनानि द्यूतविशेषः आकर्षणक्रीड़ा बालकक्रीडनकानि वैनायिकीनां विद्यानां ज्ञानं वैजयिकीनां विद्यानां ज्ञानं वैतालिकीनां विद्यानां ज्ञानम् इति भाग० ८४५ अ० २८ श्लोके टीकायां श्रीधरस्वामिलिखिताः” ) ॥ १६२ ॥

चराचराणामिति ।—चराचराणां जङ्गमस्थावराणां, भूतानां प्राणिनां चित्यादीनाञ्च, प्रवृत्तिः वार्त्ता, लोकसंज्ञिता लोकशब्दप्रतिपाद्या इत्यर्थः । ( लोक इति संज्ञा जाता अस्या इति अस्य जातार्थे इतच् प्रत्ययः ) हेतुविद्यात्मकः हेतुः कारणं,

देशादिविरोधलक्षणम् ।—

तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्त्तते ।
कवेः प्रमाद्दाद्देशादि-विरोधीत्येतदुच्यते ॥१६४॥

तत्र देशविरोधोदाहरणम् ।—

कर्पूरपादपामर्श-सुरभिर्मलयानिलः ।
कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥१६५॥

शास्त्रमित्यर्थः, तानि च तर्कादीनि बौद्धशास्त्राणि च इति ज्ञातव्यं, तदात्मकः तन्मयः, न्यायः युक्तिमूलकदर्शनशास्त्रमेव न्यायपदवाच्यमिति निष्कर्षः, तथा सस्मृतिः स्मृतिः वेदार्थस्मरणजन्यम् ऋषिवाक्यं, मन्वादिसंहिता इति यावत्, तत्सहिता श्रुतिर्वेदः, आगमः आगमशब्दवाच्य इत्यर्थः ॥१६३॥

देशादिविरोधलक्षणमाह, तेष्विति ।—तेषु तेषु उक्तेषु देशादिषु, अयथारूढम् अप्रसिद्धं, किञ्चित् यदि कवेः कवयितुः, प्रमादात् अनवधानात्, प्रवर्त्तते उपन्यस्तो भवति, कीकटेषु कुङ्कुमो जायते काश्मीरेषु गुवाकनारिकेलवनं भाति इत्येवंरूपेण वर्णितो भवतीत्यर्थः, तदा एतत् ईदृशं वचनं, देशादिविरोधि तदाख्यदोषवदित्यर्थः, इति उच्यते देशविरोधि कालविरोधि इत्यादिसंज्ञया अभिधीयते । (देश-काल-लोकविरोधस्तु ख्यातविरुद्धतासंज्ञया कलान्यायागमविरोधश्च विद्याविरुद्धतासंज्ञया नवीनैरभिहित इति बोद्धव्यम् । सस्मृतिश्रुतिरित्यत्र श्रुतिपदेन कामकृषिगजतुरगखड्गादिलक्षणशास्त्राणां ग्रहणमागम्यते इति दिक् ) ॥ १६४ ॥

।—मलयानिलः मलया-

चोलाः कालागुरुश्याम-कावेरीतीरभूमयः ।
इति देशविरोधिन्या वाचः प्रस्थानमीदृशम्॥१६६॥

कालविरोधोदाहरणम् ।—

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥१६७॥

सम्पर्केण, सुरभिः सुगन्धि, तथा कलिङ्गवनसम्भूताः कलिङ्गदेशीयारण्यसमुत्पन्नाः, मतङ्गजा हस्तिनः, मृगप्रायाः मृगवत् अतिक्षुद्रा इत्यर्थः। (अत्र मलयाद्रौ कर्पूरपादपानां नोत्पत्तिः, चीनादिदेश एव तदुत्पत्तिरिति प्रसिद्धाभावात् अद्रिरूपदेशविरोधः; तथा कलिङ्गवने मृगसदृशाः क्षुद्रतरा मतङ्गजाः न सम्भवन्ति इत्यप्रसिद्धवर्णनात् वनरूपदेशविरोधश्च विज्ञेयः) ॥ १६५ ॥

अद्रिवनरूपयोर्देशयोरुदाहरणं दर्शयित्वा राष्ट्ररूपदेशविरोधमुदाहरति, चोला इति।—चोलाः कर्णाटान्तर्गतदेशभेदाः, कालागुरुभिः कृष्णवर्णागुरुभिः, श्यामाः कृष्णवर्णाः, कावेर्य्याः कावेरीनद्याः, तीरभूमयः येषु तथोक्ताः। (अत्र कावेरीतीरे कालागुरवो न जायन्ते इति राष्ट्ररूपदेशविरोधः) देशविरोधिन्याः वाचः इति ईदृशम् उक्तरूपं, प्रस्थानं प्रकृष्टं स्थानं, दृष्टान्तस्थलमित्यर्थः। (अत्र "चोलाः कालागुरुश्यामाः केरलाः कुङ्कुमारुणाः। नर्मदावनसंरूढाः कावेरीतीरभूमयः ॥" इति पाठान्तरं पुस्तकान्तरेषु दृश्यते। उदाहरणान्तरं यथा— "सौवीरेष्वस्ति नगरी मथुरानाम विश्रुता। अक्षोटनालिकेराढ्या यस्याः पर्य्यन्तभूमयः ॥" इति) ॥ १६६ ॥

"कालो रात्रिन्दिवर्त्तवः" इत्युक्तलक्षणस्य रात्रिदिवसषडृतु-

अव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणः ।
हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः॥१६८

रूपस्य कालस्य यथाक्रमं विरोधं दर्शयति, पद्मिनीति।—पद्मिनी नक्तं रात्रौ, उन्निद्रा विकसिता। (दिवसे एव पद्मिन्या विकासस्य प्रसिद्धेः रात्राविति निर्देशात् अत्र रात्रिरूपकालविरोधः) कुमुदनी अह्नि दिवा, स्फुटति विकसति। (रात्रावेव कुमुदिन्या विकासस्य प्रसिद्धेः अह्नि इत्युक्तेः अत्र दिवारूपकालविरोधः) मधुः वसन्तः, उत्फुल्लाः विकसत्पुष्पाः, निचुलाः इज्जलवृक्षा यत्र तथोक्तः। (निचुलानां प्रावृष्येव विकासस्य प्रसिद्धेः मधुरिति वर्णनात् अत्र वसन्तर्त्तुरूपकालविरोधः) निदाघः ग्रीष्मः, मेघेन मेघावरणेन, दुर्दिनं दुःखजनकदिनं यत्र तथोक्तः। (वर्षास्वेव दुर्दिनत्वप्रसिद्धेः निदाघ इति कथनात् अत्र निदाघर्त्तुरूपकालविरोधः। यद्यपि निदाघेऽपि कदाचित् दुर्दिनत्वं सम्भवति, वर्णितञ्च अकालदुर्दिनं मृच्छकटिकादौ, तथाऽप्यत्र विरोधप्रतिपादनात् ऋतुविशेषे प्रसिद्धस्य वस्तुनः ऋत्वन्तरे वर्णनमेव दोष इति निदाघो मेघदुर्दिन इत्यनेन सूच्यते। केचित्तु "निदाघो हिमजाड्यकृत्" इति पाठान्तरमङ्गीकृत्य समाधानं कुर्वन्ति। "निदाघो मेघनिःस्वनः" इति च पाठान्तरम्)॥१६७॥

अव्येति।—वर्षाः अव्याः श्रुतिसुखकरत्वात् मधुरा इत्यर्थः, हंसानां गिरः यासु ताः, (अत्र शरत्स्वेव हंसानां मधुरनादस्य प्रसिद्धेः वर्षाः इति कालविरोधः) शरदः मत्ताः हृष्टाः, बर्हिणः मयूराः यासु ताः, (अत्र वर्षास्वेव मयूराणां मत्ततायाः प्रसिद्धेः शरद इति वर्णनात् शरदृतुरूपकालविरोधः) हेमन्तः निर्मलः हिमावरणाभावात् प्रदीप्तः, आदित्यो यत्र तथाभूतः, (अत्र

इति कालविरोधस्य दर्शिता गतिरीदृशी।
मार्गः कलाविरोधस्य मनागुद्दिश्यते यथा ॥१६९॥

कलाविरोधोदाहरणम्।—

वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ।
पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्त्तते ॥ १७० ॥

हेमन्ते आदित्यस्य हिमावृतत्वात् निर्मलत्वम् अप्रसिद्धम् इति हेमन्तर्त्तुरूपकालविरोधः) तथा शिशिरः शीतर्त्तुः, श्लाघ्यम् आदरणीयं, चन्दनं चन्दनानुलेप इत्यर्थः, यस्मिन् सः, (अत्र चन्दनस्य शैत्यात् शिशिरे तस्य श्लाघ्यत्वम् अप्रसिद्धम् इति शिशिरर्त्तुरूपकालविरोधः। एवञ्च ऋतूनां षस्मामेव विरोधाः दर्शिताः। उदाहरणान्तरं यथा—"कदम्बकुसुमस्मेरं मधौ वनमशोभत" इति)॥ १६८ ॥

कालविरोधमुपसंहृत्य कलाविरोधं दर्शयितुमाह, इतीति।—इति ईदृशी उक्तप्रकारा, कालविरोधस्य गतिः ज्ञानं, ज्ञानार्थमुदाहरणमित्यर्थः, दर्शिता, इदानीं कलाविरोधस्य मार्गः पन्थाः, ज्ञानोपाय इत्यर्थः, मनाक् अल्पं यथा तथा, उद्दिश्यते प्रदर्श्यते। यथेति उदाहरणार्थम् ॥ १६९ ॥

कलासु 'तौर्य्यत्रिकस्यैव' समधिकप्रीतिप्रदत्वेन प्रधानतया आदौ तद्विरोधमेव प्रदर्शयति, वीरेति।—वीरशृङ्गारयोः तदाख्ययोः रसयोः, क्रोधविस्मयौ स्थायिनौ भावौ, विरुद्धाविति शेषः, तथा हि वीरे उत्साहः, शृङ्गारे रतिः स्थायिभावत्वेन कथ्यते, क्रोधः रौद्ररसस्य विस्मयः अद्भुतरसस्य स्थायित्वेन निर्दिष्टौ, तदेवं स्थिते वीरशृङ्गाररसयोः व्यभिचारिरूपयोः क्रोधविस्मययोः स्थायित्वेन निर्देशः विरुद्धः, स च दोष एव इति भावः। (स्थायिभावश्च दर्पणकारेणोक्तः, यथा—

इत्थं कलाचतुःषष्टि-विरोधः साधु नीयताम्।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति॥ १७१॥

"अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः। आस्वादाङ्कुर-कन्दोऽसौ भावः स्थायीति सम्मतः॥" इति। "रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति च। क्रोधविस्मयौ च तेनैवोक्तौ यथा—"प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते।" तथा—"विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु। विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः॥" इति। रसविवेकस्य भरतादिभिः नाट्यशास्त्रे एव कृतत्वात्, "अष्टौ नाट्ये रसाः स्मृताः" इति प्रकाशकारोक्तेश्च नाट्यरूपकलाविरोधोऽयम्)। गीतरूप-कलाया अपि नाट्याङ्गत्वेन तथात्वात्तद्विरोधमाह, पूर्णेति।—पूर्णाः साकल्येन प्रयुक्ताः, सप्त सप्तसङ्ख्यका एव, स्वराः निषादा-दयः यत्र तथोक्ताः, ("निषादर्षभगान्धार-षड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः॥" इत्यमरः) सोऽयं भिन्नमार्गः भिन्नः तत्तत्कालनिषिद्धस्वरासंवलितः, मार्गः प्रयोग-पन्थाः यस्य तादृशः सन्, प्रवर्त्तते प्रचलति, सङ्गीतशास्त्रे हि सप्तस्वराणामेकस्मिन् काले प्रयोगस्य निन्दितत्वेन तत्प्रयोगो न विधेय इति भावः। (अत्र साकल्येन प्रयुक्तसप्तस्वरत्वम् अमिश्रस्वरप्रयोगस्य विरुद्धमिति कलाविरोधदोष एवेति फलितार्थः। कालविशेषे स्वरविशेषप्रयोगस्य निषिद्धत्वम् उक्तं भरतेन यथा—"प्रभाते सुरतो निन्द्यः ऋषभः पञ्चमोऽपि च। जनयेत् प्रधनं ह्युना पञ्चत्वं पञ्चमोऽपि च॥ पञ्चमस्य विशेषोऽयं कथितः पूर्वसूरिभिः। प्रगे प्रगीतो जनयेद्धनस्य विपर्य्ययम्॥" इति)॥ १७०॥

कलाविरोधमुपसंहरति, इत्थमिति।—इत्थम् अनेन प्रकारेण,

लोकविरोधोदाहरणम्।—

आधूतकेशरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः।
गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥१७२॥
इति लौकिक एवायं विरोधः सर्वगर्हितः।
विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते॥१७३॥

कलानां चतुःषष्टिः तस्याः विरोधः, साधु सम्यक् यथा तथा, नीयतां ज्ञायतामित्यर्थः, यथा नाट्यगीतरूपयोः कलयोर्विरोधः प्रदर्शितः तथा अन्यासामपि कलानां विरोधः तत्तदुदाहरणेषु दृश्यतामिति निष्कर्षः। ननु चतुःषष्टिविद्यास्तावत् कला उक्ताः, तज्ज्ञानमन्तरेण कथं तद्विरोधो ज्ञातव्य इत्याह, तस्या इति।—कलापरिच्छेदे तदाख्यग्रन्थे, तस्याः कलायाः, रूपं स्वरूपं, नाम इत्यर्थः, आविर्भविष्यति प्रकटिष्यति, अनन्तरं कलापरिच्छेदं नाम ग्रन्थं करिष्यामि तत्रैव तासां विशेषो द्रष्टव्य इति भावः ॥ १७१ ॥

लोकविरुद्धतां दर्शयति, आधूतेति।—अयं हस्ती आधूताः कम्पिताः, केशरा जटाः यस्य तथोक्तः, तुरङ्गमः अश्वः, तीक्ष्णे सूक्ष्माग्रे, शृङ्गे यस्य तादृशः, एरण्डः तदाख्यवृक्षः, गुरुः महान्, सारः स्थिरांशो यस्य तथाभूतः, खदिरद्रुमः निः नास्ति सारो यस्य तादृक्। (हस्तिनः सकेशरत्वं तुरङ्गमस्य तीक्ष्णशृङ्गत्वम् एरण्डस्य सारवत्त्वं तथा खदिरतरोः निःसारत्वं लोकविरुद्धम्। अत्र पूर्वार्द्धे चरभूतयोरुत्तरार्द्धे अचरभूतयोः प्रवृत्तिरित्यवगन्तव्यम्) ॥ १७२ ॥

लोकविरोधमुपसंहृत्य न्यायविरोधं प्रपञ्चयितुमाह, इतीति।—इति उक्तरूपः, लौकिकः लोकप्रसिद्ध एव, अयं

न्यायविरोधोदाहरणम्।—

सत्यमेवाह सुगतः संस्कारानविनश्वरान्।
तथा हि सा चकोराक्षी स्थितैवाद्यापि मे हृदि॥१७४॥
कापिलैरसदुद्भूतिः स्थान एवोपवर्ण्यते।
असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवाः॥१७५॥

---

विरोधः सर्वैः विद्वद्भिः, गर्हितः निन्दितः, तथा च देशादिविरोधापेक्षया लोकविरुद्धोपन्यासः प्रयोक्तुर्नितरां हास्यायेति भावः। सम्प्रति न्यायाख्यासु न्यायनामकेषु, हेतुविद्यासु युक्तिमूलकशास्त्रेषु, विरोधः निदर्श्यते उदाह्रियते॥ १७३॥

सौगतदर्शनरूपन्यायविरोधं दर्शयति, सत्यमिति।—सुगतः बुद्धः, संस्कारान् स्मृतिहेतुकभावनाख्यात्मवृत्तिगुणभेदान्, पूर्वानुभवजन्यज्ञानविशेषान् इत्यर्थः, अविनश्वरान् चिरस्थायिनः, सत्यमेव यथार्थमेव, आह, तथा हि तमेवार्थं जानीहि, सा पूर्वानुभूता, चकोराक्षी अद्यापि मे हृदि मनसि, स्थितैव स्मरणविषयीभवतीत्यर्थः, स्मृतिं प्रति संस्कारस्य हेतुत्वात् तस्य चाविनश्वरत्वेन सार्वकालिकत्वात् इति भावः। (पदार्थमात्रस्य क्षणभङ्गुरत्वमिति-वादिनान्तु तेषां सौगतानां मते भावमात्रस्यैव क्षणस्थायित्वात् संस्कारस्यापि क्षणिकत्वमेव अतस्तस्याविनश्वरत्वकीर्त्तनं सौगतमतविरुद्धमिति हेतुविद्याविरोधः)॥१७४॥

साङ्ख्यदर्शनरूपन्यायविरोधं दर्शयति, कापिलैरिति।—कापिलैः कपिलमतानुसारिभिः साङ्ख्यविद्भिः, असदुद्भूतिः असताम् अनित्यानां दुष्टानाञ्च, उद्भूतिः उद्भवः, स्थान एव युक्तमेव, उपवर्ण्यते कीर्त्यते, यस्मात् अस्माभिः असतामेव

गतिर्न्यायविरोधस्य सैषा सर्वत्र दृश्यते।
अथागमविरोधस्य प्रस्थानमुपदिश्यते ॥ १७६ ॥

आगमविरोधोदाहरणम् ।—

अनाहिताग्नयोऽप्येते जातपुत्त्रा वितन्वते।
विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥१७७॥

सद्भिन्नानामेव, दुष्टानामेव इत्यर्थः, उद्भवाः प्रादुर्भावाः, दृश्यन्ते, प्रायेण दुर्जना एव जायन्ते न तु साधव इति भावः। ( अयं भावः,—कपिलानुसारिणः सतः सदेव जायते न तु असदिति मन्यन्ते, ततश्चासदुत्पत्तिर्न तन्मतसिद्धा, एवं स्थितेऽपि असच्छब्दस्य श्लिष्टत्वेन वाक्यार्थयोर्हेतुहेतुमद्भावात् तस्या युक्तत्ववर्णनमिति साङ्ख्यमतविरुद्धमेव; तथा चोक्तम्—"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्य्यम् ॥" इति ॥ १७५ ॥

न्यायविरोधमुपसंहरति, गतीति।—न्यायविरोधस्य सा एषा एवंप्रदर्शितसौगतकापिलोक्तप्रकारा, गतिः ज्ञानं, दृष्टान्त इत्यर्थः, सर्वत्र वैशेषिकादिष्वपि, दृश्यते ज्ञायते। ("दृश्यते" इत्यत्र "दर्शिता" इति पाठान्तरम्) आगमविरोधमुदाहर्त्तुमाह, अथेति।—अथ इदानीम्, आगमविरोधस्य श्रुतिस्मृतिविरोधस्य, प्रस्थानं गतिः, उपदिश्यते ॥ १७६ ॥

श्रुतिविरोधं दर्शयति, अनाहितेति।—एते अक्लिष्टाचारभूषणाः अत्युत्तमसदाचारसमन्विताः, जातपुत्रा विप्राः अनाहिताग्नयः अकृताग्न्याधानाः अपि, वैश्वानरीं विश्वानरसम्बन्धिनीं, (विश्वानरस्तु भूतसमूहात्मकः विराट् पुरुष, तथा च—"विश्वानरमुपास्ते विद्युदादित्यवाय्वाकाशोदकपृथिव्यात्मके;

असावनुपनीतोऽपि वेदानधिजगे गुरोः।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥१७८॥

षड्भिरुपेतम्" इति श्रुतेः) इष्टिं यागं, वितन्वते कुर्वन्ति। (अत्र च श्रुतौ कृताग्न्याधानादेरेव वैश्वानरेष्ट्यधिकारप्रतिपादनात् अनाहिताग्नीनां तद्वर्णनं श्रुतिविरुद्धम्) ॥ १७७ ॥

स्मृतिविरोधरूपमागमविरोधं दर्शयति, असाविति।—असौ जनः, अनुपनीतः अकृतोपनयनसंस्कारः अपि, गुरोः सकाशात् वेदान् अधिजगे अधीतवान्; तथा हि स्वभावेन प्रकृत्या एव, शुद्धः निर्मलः, स्फटिकः तदाख्यमणिविशेषः, संस्कारं शुद्धिं, न अपेक्षते। (अत्र अनुपनीतस्य वेदाध्ययनं स्मृतिविरुद्धम्; उक्तञ्च मनुना—"नाभिव्याहारयेत् ब्रह्म स्वधानियमनादृते। शूद्रेण हि समस्तावत् यावत् वेदे न जायते॥" इति। अन्ये तु "धर्मार्थकामशास्त्रादि-विरोधः कोऽपि यो भवेत्। तमागमविरोधाख्यं दोषमाचक्षते बुधाः॥" इत्यागमविरोधस्य लक्षणमभिधाय त्रिविधं भेदमङ्गीकुर्वन्ति। तत्र धर्मशास्त्रविरोधस्योदाहरणमिदमेव पद्यमाहुः। अर्थशास्त्रविरोधो यथा—"कामोपभोगसाकल्य-फलो राज्ञां महीजयः। अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया?" ॥ इति। अत्र महीजयस्य फलत्वेन कामोपभोगानामर्थशास्त्रकारैरननुमतत्वात् शत्रुविजये च अहङ्कारस्याहेतुत्वादर्थशास्त्रविरोधः। कामशास्त्रविरोधो यथा—"तवोत्तरोष्ठे बिम्बोष्ठि! दशनाङ्को विराजते। पूर्णः समस्तरः सोऽयं भिन्नग्रामः प्रवर्त्तते॥" इति। अत्र उत्तरोष्ठे दशनाङ्कस्य कामशास्त्रकारैरननुज्ञातत्वात् कामशास्त्रविरोधः इति) ॥ १७८ ॥

दोषाणां गुणत्वम् ।—

**विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।**
**उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥ १७९॥**

देशविरोधे गुणः ।—

**तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।**
**आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥१८०॥**

कालविरोधे गुणः ।—

**राज्ञां विनाशपिशुनश्चचार खरमारुतः ।**
**धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥१८१॥**

---

प्रागुक्तदेशादिविरोधाख्यदोषस्य कदाचित् गुणत्वमाह, विरोध इति ।—एष उक्तरूपः,सकलः समग्रः अपि,देशाद्यागमपर्य्यन्तविषयोऽपीत्यर्थः, विरोधः कवेः कौशलात् वर्णनाचातुर्य्येण, विरुद्धवर्णनस्यापि वैचित्र्यप्रतिपादनेन इत्यर्थः, कदाचित् दोषगणनां दोषान्तर्भूतताम, उत्क्रम्य विहाय, गुणवीथीं गुणमार्गं, विगाहते गुणत्वेन गणनीयो भवतीत्यर्थः ॥ १७९ ॥

तत्र देशविरोधस्य गुणत्वं दर्शयति, तस्येति ।—तस्य राज्ञः, प्रभावेण महिम्ना,तदुद्यानानि तस्य राज्ञः उद्यानानि, आर्द्राणि नवानि इत्यर्थः, अंशुकानि वस्त्राणि एव, प्रवालानि किशलयानि येषां तादृशानां, सुरशाखिनां देवतरूणां, कल्पवृक्षाणामित्यर्थः, आस्पदं स्थानं, जज्ञिरे लेभिरे इत्यर्थः । ( अत्र मानवोद्यानेषु सुरशाखिसम्भवो देशविरुद्धतया वर्णितोऽपि वर्णनीयस्य राज्ञः प्रभावातिशयं तथा ऐश्वर्य्यातिशयवर्णनरूपोदात्तालङ्कारप्रतिपादनात् कवेः कौशलञ्च द्योतयतीति चमत्कारव्यञ्जनात् गुणत्वमापद्यते इति फलितार्थः ) ॥ १८० ॥

कालविरोधस्य कदाचित् गुणत्वमुदाहरति, राज्ञामिति ।—

कालविरोधे गुणः।—

दोलाभिप्रेरणत्रस्त-वधूजनमुखोद्गतम्।
कामिनां लयवैषम्यं गेयं रागमवर्द्धयत् ॥१८२॥

राज्ञां प्रतिपक्षनृपाणां, विनाशपिशुनः विनाशसूचकः,("पिशुनौ खलसूचकौ" इत्यमरः) खरमारुतः प्रचण्डवायुः, सप्तच्छदोद्गमान् सप्तपर्णपुष्पाणि, धुन्वन् कम्पयन्, कदम्बरजसा नीपपरागेण सह, चचार ववौ। ( अत्र राज्ञामित्यनेन प्रतिपक्षोक्त्या वर्णनीयस्य राज्ञः युद्धयात्रायाः प्रतीतिः, सा च युद्धयात्रा सप्तच्छदोद्गमस्य शरत्सु एव भवति, कदम्बपुष्पाणि तु तदा न जायन्ते वर्षास्वेव तेषां प्रादुर्भावात्; ततश्च तद्रजसा सह सप्तच्छदोद्गमस्यैककालत्वप्रतिपादनात् कालविरोधः। "अकाले फलपुष्पाणि देशविद्रवकारणम्" इति विष्णुधर्मोत्तरीयवचनेन अकालेऽपि फलपुष्पोद्गमस्य सम्भावनं, तथा खरमारुतवत् तस्याशुभसूचकत्वञ्च प्रतीयते, तेन प्रतिपक्षीयनरपतीनां नियतविनाशसूचनात् विजिगीषोः उत्कर्षातिशयव्यञ्जकतया गुण एव,. कविकौशलञ्चात्र तादृशव्यङ्ग्यप्रतिपादनमेव इत्यवधेयम् )॥ १८१ ॥

कालविरोधस्य क्वचित् गुणत्वमुदाहरति, दोलेति।—दोलायाः "दोलना" इत्याख्यस्य दोदुल्यमानक्रीडनकविशेषस्य, अभिप्रेरणेन सवेगचालनेन, त्रस्ताः भीताः, ये वधूजनाः तेषां मुखेभ्यः उद्गतम् उच्चरितं, लयस्य गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यस्य, वैषम्यं वैपरीत्यं यत्र तादृशम्, अपीति शेषः, गेयं गीतं, भयचकितत्वात् लयासङ्गतमपि गानमित्यर्थः, कामिनां रागम् अनुरागम्, अवर्द्धयत्। ( गानस्य लयशुद्धिरेव रागवर्द्धनीति कलानियमः, अत्र च तद्वैपरीत्यमिति कला-

लोकविरोधे गुणः।

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम्।
अबलाविरहक्लेश-विह्वलो गणयत्ययम्॥ १८३॥

न्यायविरोधे गुणः।—

प्रमेयोऽप्यप्रमेयोऽसि सफलोऽप्यसि निष्फलः।
एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्त्तये॥ १८४॥

विरोधः बधूजनान् प्रति कामिनामप्यनुरागव्यञ्जकतया गुण एव इति)॥ १८२॥

लोकविरोधस्यापि गुणत्वमुदाहरति, ऐन्दवादिति।—अयं कामी कामपरतन्त्रः, अबलाया विरहेण यः क्लेशः तेन विह्वलः व्याकुलः सन्, ऐन्दवात् चन्द्रसम्बन्धिनः, अर्चिषः किरणात्, किरणमपेक्ष्येत्यर्थः, (ल्यब्लोपे पञ्चमी) हव्यवाहनम् अग्निं, शिशिरं शीतलं, गणयति मन्यते। (अत्र हव्यवाहनस्य शिशिरत्वं लोकविरुद्धं, तच्च विरहिणां चन्द्रकिरणस्यात्युद्दीपकत्वव्यञ्जनात् गुण एव)॥ १८३॥

न्यायविरोधस्य गुणत्वमुदाहरति, प्रमेय इति।—भगवत्स्तुतिरियम्। प्रमेयः प्रमाणजन्यज्ञानविषयोऽपि, अप्रमेयः अज्ञेयः, असि, सफलः फलं कार्य्यं, विश्वरूपमित्यर्थः, तत्सहितः अपि, निष्फलः फलरहितः, कार्य्येषु निर्लिप्त इत्यर्थः, असि, त्वम् एकोऽद्वितीयोऽपि, अनेकः बहुरूपः, असि, अतः विश्वमूर्त्तये जगत्स्वरूपाय, ते तुभ्यं, नमः इत्यन्वयः। (प्रमेयत्वाप्रमेयत्वादिकं परस्परविरुद्धं नैकाधारवर्त्तीति नैयायिकी युक्तिः, सा चात्र विरुद्धतया भासमानाऽपि परमात्मनोऽचिन्त्यत्वं व्यञ्जयन्ती गुणत्वमेवारोहति)॥ १८४॥

आगमविरोधे गुणः।—

पञ्चानां पाण्डुपुत्त्राणां पत्नी पाञ्चालपुत्त्रिका।
सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः॥१८५॥

ग्रन्थसमाप्तिः।—

शब्दार्थालङ्क्रियाश्चित्र-मार्गाः सुकरदुष्कराः।
गुणा दोषाश्च काव्यानामिह सङ्क्षिप्य दर्शिताः॥१८६॥

---

आगमविरोधस्य गुणत्वमुदाहरति, पञ्चानामिति।— पाञ्चालपुत्त्रिका द्रौपदी, पञ्चानां पाण्डुपुत्त्राणां युधिष्ठिर-भीमार्जुननकुलसहदेवानां, पत्नी भार्य्या, अथच सतीनां साध्वीनाम, अग्रणीः श्रेष्ठा च, आसीत्, हि यतः, दैवः देवसम्बन्धी, विधिः विधानम, ईदृशः एवंविधः, आगमानधीन इत्यर्थः, तेषां तस्याश्च देवांशतया शास्त्रोक्तत्वादिति भावः (एकस्या बहुपतित्वं सतीत्वञ्च आगमविरुद्धं, तच्चात्र दैवविधि शास्त्रानधीनतया वैचित्र्यमावहद्गुण एवेति। केचित्तु धर्मविरु उदाहरणमिदं मन्यन्ते)॥ १८५॥

प्राक्प्रतिज्ञातगुणालङ्कारादिनिरूपणानन्तरं ग्रन्थमिमम् संहरति, शब्देति।—इह अस्मिन् काव्यादर्शाख्ये ग्र काव्यानां शब्दार्थालङ्क्रियाः शब्दार्थोभयनिष्ठाः स्वभावाख्यानादयः अलङ्काराः, तेषां शब्दार्थाभ्यां शोभाजनकत्वादुभ निष्ठत्वमित्यभिप्रायः, तथा सुकरा दुष्कराश्च चित्रमा चित्रालङ्काराणां मार्गाः नियमाः, शब्दमात्रनिष्ठा यमक इत्यर्थः, तथा गुणाः श्लेषादयः,दोषाश्च अपार्थत्वादयः,(चका काव्यलक्षण-तन्मार्गादीनां ग्रहणम्) सङ्क्षिप्य दर्शिताः सङ्क्षे निरूपिताः, बहुभेदतया च साकल्येन गुणादीनां भेदस्यादर्श त्वादिति भावः॥ १८६॥

व्युत्पन्नबुद्धिरमुना विधिदर्शितेन
मार्गेण दोषगुणयोर्वशवर्त्तिनीभिः।
वाग्भिः कृताभिसरणो मदिरेक्षणाभि-
र्धन्यो युवेव रमते लभते च कीर्त्तिम् ॥१८७॥

इत्याचार्य्यदण्डिनः कृतौ काव्यादर्शे
शब्दालङ्कारदोषविभागो नाम
तृतीयः परिच्छेदः।

सङ्क्षेपदर्शितेऽप्यस्मिन् कथं फलसिद्धिर्भवतीत्युपपादयन् ग्रन्थं समापयति, व्युत्पन्नेति।—व्युत्पन्ना संस्कृता, बुद्धिर्यस्य तथोक्तः विशुद्धमतिरित्यर्थः, धन्यः सुकृती, जनः इति शेषः, अमुना एतद्ग्रन्थोक्तेन, विधिदर्शितेन विधयो लक्षणानि, तैर्दर्शितेन निर्दिष्टेन, दोषगुणयोः अपकर्षोत्कर्षधर्मयोः, प्रोक्तलक्षणयोरिति यावत्, मार्गेण पथा, रीत्या इत्यर्थः, (गुणपदमत्रालङ्काराणा-मुपलक्षकं, तेषामपि काव्यशोभाजनकत्वेनोत्कर्षाधायकत्वा-दिति बोध्यम्) कृतम् अभिसरणम् अनुगमनं येन तादृशः सन्, काव्यनिर्मितौ तदवगतौ वा कृतयत्नः सन् इत्यर्थः, वशवर्त्तिनीभिः पुनःपुनरालोचनया सम्यगायत्ताभिः, वाग्भिः काव्यस्वरूपाभिरित्यर्थः, मदिरेक्षणाभिः मदघूर्णितनयनाभिः, वशवर्त्तिनीभिः प्रेमाधीनाभिः, कान्ताभिः विधिदर्शितेन विद्युत्-प्रकाशादिरूपदैवप्रकाशितेन, दोषगुणयोर्मार्गेण अनेन पथा गमने महान् दोषः, अनेन पथा च तदभावरूपः गुणः इत्येवं विविच्य निरूपितेन पथेत्यर्थः, कृताभिसरणः कृताभिसारः, युवा इव रमते प्रीतिमनुभवति, कीर्त्तिञ्च लभते, (यथा कश्चित् युवकः दैवानुकूलतया परिज्ञातेन सुपथा वराङ्गनाभि-

शाराय गत्वा तदङ्गनाप्रेमास्पदीभूतः प्रीतः कीर्त्तिमांश्च भवति, तथा देशकालादिविषयपरिशीलनकुशलमतिः सुकृती मत् प्रदर्शितसांङ्गगुणालङ्कारदोषादिलक्षणघटकवाक्यार्थपरिज्ञानेन काव्यमवगन्तुं कर्त्तुं वा प्रवृत्तः सन् सफलतया प्रीतः लब्ध कीर्त्तिश्च भवतीति भावः)। वसन्ततिलकं वृत्तम् ॥ १८७ ॥

इति श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यविरचिता

काव्यादर्शविवृतिः ।

